'मास्टर' मणिमालायाः पञ्चषष्टिसंख्यको मणिः ( नाटकविभागे २

॥ श्रीः ॥

श्रीमहाकविभासप्रणीतं

# स्वप्नवासवदत्तम्

काशीस्थ गवर्नमेण्टसंस्कृतकालेजस्य भू० पू० 'प्रिन्सिपल'महोदयेन साहित्याचार्य–साहित्यवारिधि–पदवीजुषा, अमरभारती-सम्पादकेन, 'विद्वच्चरितपञ्चक'-'अभिज्ञानशाकुन्तल-लक्ष्मी' इत्यादिग्रन्थकृता, खिस्ते-इत्युपाख्येन

म०म०पं०श्रीनारायणशास्त्रिणा

प्रणीताभ्यां 'श्री-रमा-'संस्कृत-हिन्दीटीकाभ्यां सहितम् ।

टीकाकर्तुरात्मजेन साहित्याचार्येण

खिस्ते-बटुकनाथशास्त्रिणा

भूमिकादिभिः सम्भूष्य

सम्पादितम् ।

तच्च

काशीस्थ—'संस्कृतबुकडिपो' इत्यस्याध्यक्षवरेण्यैः

मास्टरखेलाड़ीलाल ऐण्ड सन्स् इत्येतैः

'मास्टरप्रिण्टिङ्गवर्क्स' नाम्नि मुद्रणालये

मुद्रापयित्वा प्रकाशितम् ।

तीयं संस्करणम् ] सन् १९५२ ई० [ मूल्यं सार्धरूप्यकद्वयम्

❀ श्रीः ❀

# समर्पणम्

स्वस्तिश्रीमतां प्राच्यप्रतीच्यविद्याम्भोधिपारदृश्वनां अनेकग्रन्थनिर्माण-
सुप्रथितसुयशसां दर्शनशास्त्रमहाटवीविहरणपञ्चाननानां
योगिराजानां स्वजनवत्सलानां, उत्तरप्रदेशगृह-श्रमसचि-
वानां माननीय डॉक्टर श्रीसम्पूर्णानन्दमहोदयानां
करकमलयोस्तदीयप्रगाढवैदुष्यसौजन्यस्वजन—
वात्सल्यादि गुणगणाकृष्टेन तदीयेन टीकाकर्त्रा,
प्रकाशकेन च—इदं सटीकस्वप्रवासव-
दत्तस्य तृतीयं संस्करणं सादरं
स-बहुमानं च समर्प्यते ।

---

आनन्दकाननोद्भूत परमानन्दतुन्दिल ! ।
श्रीसम्पूर्णानन्द योगीन्द्र ! विद्वन्निकष ! निस्तुल ! ॥
श्री-रमा-संज्ञितामेतां टीकां विद्वन्मनोहराम् ।
गृहाण पण्डितवर ! श्रद्धयोपायनीकृताम् ॥

समर्पकौ—

प्रकाशकः— वैजनाथप्रसादयादवः

टीकाकारः— नारायणशास्त्री खिस्ते

स्वप्नवासवदत्तम्



माननीय डाक्टर श्री सम्पूर्णानन्द जी
डी० एस-सी०, एल० टी०
गृह तथा श्रम सचिव
उत्तर प्रदेश

# विषयानुक्रमणिका

ग्रन्थादौ—



ग्रन्थान्ते—





## ❀ प्रास्ताविकं किञ्चिद्वक्तव्यम् ❀

प्रस्तुतेऽस्मिन् नव्यटीकासङ्कलिते स्वप्नवासवदत्तस्य संस्करणे नाटकविषये कविविषये च यद्वक्तव्यं तत्सर्वं मन्निदेशेन मदात्मजेन साहित्याचार्येण आयुष्मता **खिस्ते-श्रीबटुकनाथशास्त्रिणा** स्वलिखितायां भूमिकायां सम्यक् प्रपञ्चितमेवाऽस्ति। अथेदानीं प्रकृतसंस्करणसम्पादने यैः कैश्चिद्यत्किञ्चित्साहाय्यमाचरितम्, तेभ्यो धन्यवादार्पणमेव मम कर्तव्यमवशिष्टम्।

प्रथमतस्तु स्वप्नवासवदत्तेऽभिनवटीकालेखने मम प्रवृत्तिरेव नाऽऽसीत्। मम ग्रीष्मावकाशस्तु प्रायो निरुद्योगस्यैव व्यतीतः। समाप्तप्राये ग्रीष्माऽवकाशे कदाचित् **'मास्टर खेलाड़ीलाल ऐण्ड सन्स'** नामकसंस्थासञ्चालकैः श्रीबैजनाथप्रसाद-**यादव**महोदयैरहं नवीनसरलटीकालेखनार्थं त्वरया तत्समापनार्थं च साग्रहमनुरुद्धः। सुहृदां तेषामनुरोधस्यानुल्लङ्घ्यत्वादवकाशाभावेऽपि कथमपि नाहं परिश्रम्य मासाभ्यन्तर एव टीकामिमां समापितवान्। यद्यपि बहुशास्त्रकोविदैः प्रख्यातनामभिर्महाविद्वद्भिः स्वानुरूपं प्रणीतासु टीकासु वर्तमानास्वपि मादृशेनाल्पमेधसा नवीनटीकाविरचनं कदाचित् तेषां महानुभावानां दृशा परिहासास्पदं भवेत्, तथापि मन्दबुद्धीनां छात्राणां यद्यनया टीकया कश्चिदुपकारः सम्पद्येत, तर्हि तावानेव मम परिश्रमस्य पुरस्कारो मया गण्येत। यथामति यथाशक्ति च सरलैरेव शब्दैष्टीकालेखने मया प्रयतितम्। तत्र कियन्मे साफल्यं सञ्जातमित्यत्र प्रियच्छात्रवर्ग एव प्रमाणम्। इतोऽधिकं वक्तुमनावश्यकम्।

प्रकृतसंस्करणे विस्तृता भूमिका, प्रकृतनाटकीयकथासारश्च मदात्मजेन आयुष्मता **खिस्तेश्रीबटुकनाथशास्त्रिणा** निबद्ध इति तं शुभाशीर्भिरभिवर्द्धयामि।

टीकायास्त्वरातिशयेन विरच्यमानत्वाट्टीकालेखनमुद्रणयोः सममेव प्रचलितत्वाच्च मुद्रणपत्र ( प्रूफ ) निरीक्षणे ममाऽवकाशो नाऽऽसीदिति प्रायः सकलमेव मुद्रणपत्र-

( प्रूफ ) निरीक्षणं विद्वत्तल्लजैरनेकग्रन्थनिर्माणधुरन्धरैः प्रख्यातनामभिरस्मन्मित्रवरैः साहित्याचार्य—श्रीगौरीनाथपाठकमहोदयैरेव सानुग्रहं सम्पादितमिति तेभ्यो यावन्तो धन्यवादा दीयेरन् तावन्तोऽप्यल्पा एव । मित्रवरास्ते सर्वदैव मयि स्निह्यन्तीति तेषां सौहार्दं सर्वदा स्मरामि ।

यद्यपि स्वप्नवासवदत्तस्य सर्वेषु संस्करणेषु मिथो विभिन्ना बहवः पाठभेदा दृश्यन्ते, तथापि म० म० त०.पं० गणपतिशास्त्रिमहोदयैः प्रथमं (ई० सं० १९१५) वर्षे यन्मूलमात्रं संस्करणं प्रकाशितम्, तत्रत्यान् पाठानवलम्ब्यैव टीकेयं विरचिताऽस्ति । क्वचित्क्वचित्प्राचीनानि पाठान्तराण्यपि प्रदर्श्य व्याख्यातानि ।

यदनुरोधादत्यल्पीयस्यपि समये सपरिश्रमं कार्यमिदं सम्पादितमभूत्तस्य संस्कृत-पुस्तकप्रकाशनप्रचारणानुरागिणः प्रसिद्धस्य पुस्तकविक्रेतुः 'मास्टर खेलाड़ी लाल ऐण्ड सन्स' संस्थासंचालकस्य सभ्रातृकस्य श्रीवैजनाथप्रसादयादवमहोदयस्य प्रतिदिनमेधमानमभ्युदयं कामये ।

अस्य संस्करणस्य मासाभ्यन्तर एव सम्पादितत्वात् त्वराविशेषेण सुलभानिस्खलितानि क्षाम्यन्तु सज्जनाः ।

पर्यवसाने सर्वकारणभूतायाः सर्वान्तर्यामिण्या यस्याः प्रेरणया कार्यमिदं सम्पन्नम्, तस्या जगन्मातुः श्रीदेव्याश्चरणयोरेव तत्समर्प्य विरमामि मुधा विस्तरादिति शम् ।

काशी ।<br>रक्षाबन्धनम्<br>३–८–१९३६ ई०

विद्वज्जनकृपाभिलाषी<br>**नारायणशास्त्री खिस्ते**

❀ श्रीः ❀



# भूमिका

अथेदं प्रकाश्यते भासकविविरचितं स्वप्नवासवदत्तं नाम नाटकम्। 'श्री' नाम संस्कृतटीका, 'रमा' नाम्नी हिन्दी (भाषा) टीका च ग्रन्थावबोधाय शिशूनामत्र लिखिते राजतः। नाटकस्यास्य चतस्रो व्याख्या अद्य यावत् प्रकाशिताः सन्ति। तासु भासनाटकचक्राऽऽविष्करणयशोभाजां म० म० स्वर्गीयश्रीगणपतिशास्त्रिणां सर्वोपजीव्यभूता प्रथमा व्याख्या, द्वितीया च स्वसंज्ञामन्वर्थयन्ती सञ्जीवनी नाम विजयानन्दत्रिपाठिभिर्विरचिता, द्वे एव ग्रन्थलापने मार्गं दर्शयन्त्यौ प्रौढे विलसतः।

नाटकस्यास्याऽतिप्राचीनतया दुरवबोधशब्दजातवत्तयाऽत्र सरलसरला मध्यमपरीक्षादिषु विद्यार्थिजनमनस्तोषिणी टीकाऽपेक्ष्यतेस्म। टीकान्तरेषु सत्स्वपि क्वचन "मूकीभवन्ति कठिने, सरले प्रगल्भाः" इति न्यायेन वृथा विस्तृतिम्, क्वचिद् भावानवबोधेन अन्धपरम्परान्यायेन व्याख्यानप्रकारम्, क्वचित्पुनः प्रोद्भटपाण्डित्यचण्डिमाऽकाण्डताण्डवहेतुकं दीर्घदीर्घपदसन्तानपरम्परया व्याख्यानं च निरीक्ष्य विद्यार्थिजनोपयोगं ग्रन्थलापनसौकर्यं च लक्ष्यीकृत्य टीकेयं व्यरचि तत्र भवद्भिस्तातपादैः। स्वानुभवेन विद्यार्थिन एवाऽस्यत्यं वैशिष्ट्यमचिरेण प्रकटयिष्यन्तीति दृढं वयं विश्वसिमः। भावज्ञानं विनाऽर्थबोधो न भवतीति भावार्थः सम्यगत्र स्फुटीकृतः।

क्वचिद् ग्रन्थस्य सरलत्वेऽपि स्वयंभावाऽनवबोधात् टीकाकाराः स्वपाण्डित्यरज्जुबलेन विद्यार्थिनोऽप्याकर्षयन्तो गोष्पदप्रमाणे मार्गे हिमा-

क्षयप्रदक्षिणां कारयितुमुत्सहन्ते, महतां किल महती वार्तेति तत्र नाधिक-मुच्यते ।

अस्मिन् संस्करणे कथासारः, श्लोकानुक्रमणी, छन्दोलक्षणानि, प्रस्तुत-नाटके प्रसङ्गागतानां नान्दी-नेपथ्य-प्रस्तावना-प्रवेशक-स्वगत-प्रकाश-अप-वारित-विष्कम्भक-सूत्रधार-काञ्चुकीय-विदूषकादीनां नाट्यशास्त्रीयपारि-भाषिकशब्दानां हिन्दीभाषानुवादसहितानि तत्तल्लक्षणानि, प्रस्तुतनाट-कीयपात्रपरिचयः, प्रस्तुतनाटकाऽऽधारभूतबृहत्कथामञ्जरी-कथासरित्सा-गरान्तर्गत-वत्सराजकथाभागश्च संगृहीतः । तेन विद्यार्थिनां महानुपकारः सम्भवेत् ।

## भासकवेरितिवृत्तम् ।

संस्कृतसाहित्ये नाटकनिर्मातृष्वग्रगण्य एवाऽयं महाकविर्भास इति सम्भावयामः । एतदीया कीर्तिकौमुदी च सकलं भारतवर्षं बहोः कालात् धवलयन्ती तैस्तैः कविबुधप्रमुखैर्जेगीयमानगुणगौरवा सर्वोत्कर्षेण जाग-र्तितराम् ।

तथाहि—कविकुलगुरुः कालिदासो मालविकाऽग्निमित्रप्रस्ताव-नायाम् "प्रथितयशसां—भास-सौमिल्लक-कविपुत्रादीनां प्रबन्धानतिक्रम्य वर्तमानकवेः कालिदासस्य क्रियायां कथं बहुमानः ? इति वचनेन भासस्य प्रथितयशस्त्वं स्फुटीचकार । एवं हर्षचरिते भट्टबाणेन, कविशेखरेण राजशेखरेण सूक्तिमुक्तावल्यां बहुधा प्रशंसितो भासः । प्रसन्नराघव-कर्तुर्जयदेवस्य तु प्रसिद्धैवेयं भणितिः—

> यस्याश्चोरश्चिकुरनिकरः कर्णपूरो मयूरो,
> भासो हासः कविकुलगुरुः कालिदासो विलासः ।
> हर्षो हर्षो हृदयवसतिः पञ्चबाणस्तु बाणः,
> केषां नैषा कथय कविताकामिनी कौतुकाय ॥

इत्थं चास्य महाकवेः कीर्तिः सर्वतः प्रसृताऽस्य महिमानं दिगन्तेषु ख्यापयामास बहोः समयात् पूर्वमेव, सा चाधुना पूर्वस्मादधिकं वैशिष्ट्य-मायाता नाटकचक्रप्रकाशेन ।

अथ कोऽस्य समय इति विचार्यते—भासकवेः समयनिर्णये भूयान् मतभेदो दृश्यते ऐतिहासिकानाम्। अतोऽत्र तेषां त्रीणि मतानि प्रदर्श्यन्ते। भासीय-नाटकचक्राऽऽविष्करणख्याता गणपतिशास्त्रिणस्तावत् पाणिनि-चाणक्ययोरपि पूर्वकाले भासस्य स्थितिं सिसाधयिषन्ति। तथाहि—चाणक्यस्याऽर्थशास्त्रे विद्यमानस्य पद्यस्य भासीयप्रतिज्ञानाटके उपलब्धिम्, तत्रैव नाटके रावणस्य बार्हस्पत्यार्थशास्त्रे प्रावीण्यवर्णनं च भासस्य चाणक्यात् पूर्ववर्तित्वे प्रमाणत्वेन निर्दिशन्ति। यच्च नाटकेषु केषाञ्चिच्छब्दप्रयोगाणामपाणिनीयत्वं दृश्यते, तत् पाणिनीप्रसिद्धेः पूर्वं भासावस्थानगमकमिति वदन्ति। एवंख्रिस्ताब्दात् पूर्वं पञ्चमे शतके भासस्थितिः कल्प्यते। परमेतन्मतं न सम्मतं प्रायो विदुषाम्। तथाहि—ते किल चाणक्य-भासोभयकर्तृकतया प्रसिद्धं पद्यमन्यस्मादेव ग्रन्थादुद्धृतं मन्यन्ते।

डा० बार्नेट महोदयस्तु नाटकचक्रस्य कर्तारं 'कल्पितभासम्' सप्तमखीस्ताब्दसम्भवं केरलीयं कविं कथयति। यतस्तस्यामेव शताब्द्यां महेन्द्रवीरविक्रमविरचितेन मत्तविलासप्रहसनेन सह नाटकचक्रस्य भाषाविषये, पारिभाषिकशब्दविषये च महत् साम्यं दृश्यते। किञ्च नाटकचक्रे बहुत्र भरतवाक्ये "राजसिंहः प्रशास्तु नः" इत्युक्तनामा राजसिंहभूपः केरलदेशं सप्तमे शतके शास्तिस्म, स च कवेराश्रयत्वेन कल्पनीय इति। एतदपि न रोचते मतं विद्वद्भ्यः, यतो भामहेन बाणभट्टेन च प्रशस्यमानः कविः पुरातन एव भवितुमर्हति। किञ्च पारिभाषिकाणि पदान्यपि पुरातनत्वसूचकान्येव। राजसिंहपदस्य व्यक्तिविशेषवाचकत्वस्वीकारे प्रमाणाभावात् तदप्युपेक्षणीयमेव।

आधुनिकाः कतिपये विपश्चितः सपरिश्रमं सूक्ष्मया दृशा नाटकानि समालोच्यैवं प्रतिपादयन्ति—

यद्भासकविः कालिदासात् प्राचीनः, अश्वघोषादर्वाक्तनश्च। भासनाटकेषु विद्यमानानि प्राकृतपदानि 'प्राकृत-वैय्याकरणमतेनापि प्राचीनप्रयोगरूपाणि सिद्ध्यन्ति। कालिदासापेक्षया भासकृतिषु पदप्रयोगाणां प्राचीनता

तथा भासते, तथैवाऽश्वघोषप्रयोगाणां विकाशो भासकृतिषु भासते। इत्थं घोभयोर्मध्यवर्ती भासो निश्चीयते। एवं तृतीया, चतुर्थी वा शताब्दी भासकालः। प्रायशो मतमेतदेव बहुजनसम्मतमास्ते।

भासकृतानि त्रयोदशरूपकाणि सन्ति। यानि 'त्रिवेन्द्रं संस्कृतसीरीज' ग्रन्थमालायां म० म० गणपतिशास्त्रिभिः प्रकटीकृत्याऽमितं यश आसादितम्। तेषु द्वयो रूपकयोः कथावस्तु रामायणीयं, पञ्चानां महाभारतीयम्, अवशिष्टानां चाद्धैतिहासिककथोद्भवं वतते। किन्तु सर्वत्र कथावस्तुनि सन्निवेशो मनोहर एव विद्यते। अत्र नामतो गण्यन्ते तानि रूपकाणि। यथाः—

१—प्रतिमानाटकम्
२—अभिषेकनाटकम्
३—पञ्चरात्रम्
४—मध्यमव्यायोगः
५—दूत-घटोत्कचम्
६—कर्णभारम्
७—दूतवाक्यम्
८—ऊरुभङ्गनाटकम्
९—बालचरितम्
१०—दरिद्रचारुदत्तम्
११—अविमारकम्
१२—प्रतिज्ञायौगन्धरायणम्
१३—स्वप्नवासवदत्तम्

अथैतद्विचारणीयं भासकल्पितानि इमानि रूपकाणि न वेति—अत्रापि बहवः पक्षा विदुषाम्, दिङ्मात्रमत्र प्रदर्श्यते। तत्र केचिद्गणपतिशास्त्रिप्रभृतयः प्रसिद्धं भासमेव नाटकचक्रप्रणेतारं निर्दिशन्ति। अन्ये तु—विद्वद्वरा नैकविधदोषदुष्टतया व्याकरणविरुद्धतया च शारदाहासेन भासेन नैव निर्मितानीमानि रूपकाणीति सङ्गिरन्ते। किन्त्वत्र बाणभट्टोक्तिरित्थं प्रसिद्धा—

सूत्रधारकृतारम्भैर्नाटकैर्बहुभूमिकैः।
सपताकैर्यशो लेभे भासो देवकुलैरिव॥

उपलभ्यमाने नाटकचक्रेऽपि सूत्रधारप्रवेशादारम्भो विलोक्यते, तेन बाणभट्टसमये यादृग् रूपं नाटकानामासीत् तादृगेव साम्प्रतमपीति यद्यप्यापाततः प्रतीयते, तथापि मतमेकमत्र बहूपकरोति। तथाहि—'केरलीयः'

'चक्कियार' संज्ञैर्नटैः स्वानुकूल्येन परिवर्तितरूपाणि नाटकानि साम्प्रतमुपलभ्यन्ते, नटजनसुलभव्युत्पत्त्यभावाच्च दोषा बहवस्तेषु समापतिताः। यतः सप्तमशताब्द्यां केरलदेशे पूर्वोक्ता नटाः प्रसिद्धकवीनां रचनाः संक्षिप्य स्वेच्छया परिवर्त्य च ग्रामेष्वभिनयं कुर्वाणा भ्रमन्तिस्मेति प्रसिद्धम्, इति। अत एव डा० बार्नेट महोदयो नवीनभासं सप्तमशताब्द्यां निवेशयितुं भृशं प्रायतन्त। बहुषु ग्रन्थान्तरेषु भासकर्तृकतयोद्धृतानां श्लोकानां नाटकचक्रे अनुपलम्भस्यापि हेतुर्नटजनकृतं परिवर्तनमेव भवेदित्यनुमिन्वते विपश्चितः।

केचित्तु भासनाटकेषु स्वप्नवासवदत्तमेवैकं भासकृतम्, अन्येषु केचिदंशा भासेन लिखिताः, तत्तदंशपूर्तिस्तु केनापि केरलीयेन कविना व्यतन्यतेति भाषन्ते। किन्तु बाणभट्टोक्त्या सूत्रधारकृतारम्भैर्नाटकैः भासस्याऽनेकनाटककर्तृत्वमवसीयते। किञ्च—राजशेखरोक्तिरपि—"भासनाटकचक्रे" इति भासस्य 'नाटकचक्र'माह। अभिनवगुप्ताचार्यैः 'स्वप्ननाटक'-'दरिद्रचारुदत्त' योरुल्लेखः कृतः। वामनेन "काव्यालङ्कारसूत्रवृत्तौ" 'प्रतिज्ञा, चारुदत्त, स्वप्नवासवदत्त' नाटकेभ्यः कतिपयपद्यान्युद्धृतानि विद्यन्ते। भामहेनाऽपि स्वालङ्कारे प्रतिज्ञानाटकीये कथावस्तु प्रसङ्गतः समालोचितम्। इत्थं सर्वतः प्रसारमालोक्य भासस्य कीर्तिर्दिगन्तविश्रान्ताऽसीदिति सुशकमनुमातुम्, एतावता सर्वेषामपि रूपकाणां प्रणयनकाल एक एवेति वक्तव्यमेव।

भासविषये तु वक्तव्यं लिखितमेव पूर्वम्। कर्तृविषये भूयान् मतभेद आलक्ष्यते विदुषाम्, तद्विचारस्तु गम्भीरतरो विस्तृतश्चेति नेह प्रतन्यते।

## स्वप्नवासवदत्तम्।

प्रकृतमिदं च नाटकं सकलनाटकचक्रशिरःशेखरायमाणं समधिकं लब्धप्रसिद्धि च वर्तते। 'प्रतिज्ञा' नाटकस्य द्वितीयभागरूपमेवेदं नाटकम्। तथाहि—'प्रतिज्ञा' नाटककथैवाऽग्रे प्रपञ्चिताऽस्मिन्। अत्र नायको वत्सराजो धीरललितः, प्रधाननायिका वासवदत्ता, पद्मावती

च द्वितीया नायिका। करुण-शृङ्गारयोः परस्परविरुद्धयोरपि रसयोः कथावस्तुवैलक्षण्यमहिम्नाऽङ्गाङ्गिभावो मनोहरतमोऽत्र निवेशितः कविना। वत्सराजस्य त्रिपुराम्बापदसेवया चक्रवर्तिपदप्राप्तिः लघुस्तवे प्रसिद्धा—

'जातोऽप्यल्पपरिच्छदे क्षितिभुजां सामान्यमात्रे कुले' इति श्लोकेन। चर्चास्तवेऽपि कालिदासकृते—

> पृथ्वीभुजोऽप्युदयनप्रभवस्य तस्य
> विद्याधरप्रणतिचुम्बितपादपीठः।
> तच्चक्रवर्तिपदवीप्रणयः स एषः
> त्वत्पादपङ्कजरजःकणजः प्रसादः॥

इत्येवं वर्णितम्। अयं च राजा पाण्डववंशीयः, 'भारतानां कुले जात' इति श्लोकश्च नाटके दृश्यते। ईशवीयशतकात् प्राक् ४७४ वत्सरादारभ्य ४४९ वत्सरपर्यन्तं मगधाधिपत्यमनुभवतो दर्शकभूपतेर्भगिनी पद्मावती वत्सराजेन परिणीतेति विजयानन्दत्रिपाठिभिः स्वटीकाभूमिकायां प्रतिपाद्यते।

क्षेमेन्द्रसोमदेवाभ्यां विरचितयोः बृहत्कथामञ्जरी, कथासरित्सागरयोरुपलभ्यमानं स्वप्नवासवदत्तीयं कथावस्तु सरलपद्यबद्धतया विद्यार्थिजनोपकृतये प्रभवेदित्यस्मत्कल्पनया संस्करणेऽस्मिन् निवेश्यते। आशासे च विद्यार्थिनष्टीकामिमामङ्गीकृत्य समुत्तरिष्यन्ति विना क्लेशलेशं परीक्षापाथोनिधिम्।

एतद्भूमिकालेखने येभ्यः पुस्तकेभ्यो बहुमूल्यं साहाय्यमासादितम्, तल्लेखकमहोदयेभ्यः सादरं धन्यवादराशीन् उपहरामि। बहुविधकार्यव्यग्रैस्तत्रभवद्भिः पितृचरणैरादिष्टोऽहं तदुपदिष्टेन पथा भूमिकामिमामलिखम्। आशासे चानेन मामकीनेन परिश्रमेण परीक्ष्यच्छात्रवर्गस्य कश्चिदुपकारलेशः सम्पद्यतेति शम्।

घासीटोला
काशी।

बटुकनाथशास्त्री खिस्ते
साहित्याचार्यः

## द्वितीयसंस्करणे ईषत् प्रास्ताविकम् ।

सोऽयमद्य महान् प्रमोदावसरः यत् सटीकस्य स्वप्नवासदत्तनाटकस्य द्वितीयमिदं संस्करणं सुरवाणीसेवापराणामधिकरतलमुपायनीक्रियते । पूर्वस्मिन् संस्करणे इतस्ततो याः काश्चित् मुद्रणाशुद्धयः आसन्, ताः सर्वा अत्र निराकृताः सन्ति । द्वितीयसंस्करणमुद्रणेन च टीकाया विद्यार्थिजनमनोहरत्वं न नाम शब्दवाच्यं भवति । एवमेवाऽत्राऽनुरागं वहन्तो सविद्यार्थिगणा विद्वज्जनाः सफलयेयुः टीकाकार—प्रकाशकयोः परिश्रममित्याशास्ते—



काशी ।
श्रीकृष्णजन्माष्टमी
२५-८-४०

विद्वज्जनकृपाभिलाषी
बटुकनाथशास्त्री खिस्ते,
साहित्याचार्यः ।

## तृतीयसंस्करणे किञ्चित् प्रास्ताविकम् ।

अद्य हि परमः प्रमोदावसरः, यत् सटीकस्यास्य स्वप्नवासवदत्तस्य तृतीयमिदं संस्करणं सुरभारतीसेवकानां करकमलेषूपायनीक्रियते । पूर्वयोः संस्करणयोर्दृष्टिदोषजनिता मुद्रणाशुद्धयः संस्करणेऽस्मिन् दूरीकृताः सन्ति । अमुना तृतीयसंस्करणेन तु टीकायाः सर्वजनप्रियत्वं सुतरां सिद्धं भवति । इत्थमेव रसिका अत्रभृशमनुरागं प्रदर्शयन्तः सफलयेयुष्टीकाकार-प्रकाशक-सम्पादकादीनां परिश्रममित्याशास्ते—



ज्येष्ठशुक्लैकादशी
संवत् २००६
काशी ।

विद्वज्जनवशंवदः—
बटुकनाथशास्त्रीखिस्ते ( साहित्याचार्यः )
असिस्टेंटप्रोफेसर—गवर्नमेंटसंस्कृतकालेज
बनारस ।

———

स्वप्नवासवदत्तनाटकस्याऽऽधारभूतो वत्सराजोदयनकथा-भागः बृहत्कथामञ्जरी–कथासरित्सागरयोरुपवर्ण्यत उपलभ्यते । तत्र यावान् अंश उपयुक्तः, तावानेवाऽत्र संगृह्यते ।

## श्रीक्षेमेन्द्रविरचितायां बृहत्कथामञ्जर्यां
## कथामुखनामा द्वितीयो लम्बकः ।

——:०:——

कौशाम्बी शाम्भवीव श्रीरस्ति स्वस्तिमती पुरी ॥४॥
अर्जुनाभिजने जातो जनमेजयसम्भवः ।
शतानीकोऽभवत्तत्र राजा राजेन्द्रशेखरः ॥ ६ ॥
बभूव तस्य राज्याब्धेः कर्णधारो महामतिः ।
मन्त्री युगन्धरो नाम शक्रस्येव बृहस्पतिः ॥ १२ ॥
सेनानीः सुप्रतीपश्च विप्रः शास्त्रार्थवित्तथा ।
स्वैरेच्छानर्मसचिवस्तथाऽभूद्वल्लभो विभोः ॥ १३ ॥
तस्य विष्णुमती नाम विष्णोः श्रीरिव वल्लभा ।
बभूव विभ्रममही जैत्रमस्त्रं मनोभुवः ॥ १४ ॥
स मृगव्याप्रसङ्गेन कदाचिन्निर्गतो वनम् ।
ददर्श तेजसां राशिं मुनिं शाण्डिल्यमाश्रमे ॥ १५ ॥
नामाभिजनमावेद्य तं प्रणम्य महीपतिः ।
अवाप तस्मादुचितं पुत्रलाभवरं च सः ॥ १६ ॥
स राज्ञो वरदः श्रीमान् कौशाम्बीमेत्य सादरम् ।
पुत्रेष्ट्या पुत्रकामस्य याजकोऽभून्महामुनिः ॥ १७ ॥
ततो मुनिप्रसादेन राजा दशरथोपमः ।
इष्ट्वा राममिव प्राप सहस्रानीकमात्मजम् ॥ १८ ॥
स यौवराज्ये तनयं विधाय विधिना नृपः ।
पीयूषबिम्बित इव प्रालेयकरणोऽभवत् ॥ २० ॥
महिष्या सह भूपाले सम्प्राप्ते कीर्तिशेषताम् ।
भेजे राज्यं शतानीकतनयो मन्त्रिणां गिरा ॥ २६ ॥
ततः कालेन तनयां क्ष्मापतेः कृतवर्मणः ।

तामाससाद दयितां सर्वस्वं पुष्पधन्वनः ॥ ३५ ॥
सा तस्माद्गर्भमाधाय भवानीवेन्दुशेखरात् ।
पाण्डिम्ना शशिलेखेव पीयूषक्षालिता बभौ ॥ ३७ ॥
अत्रान्तरे मन्त्रिवरः सेनानीश्च महीपतेः ।
द्विजो नर्मवयस्यश्च पुत्रान् प्राप कुलोचितान् ॥ ३८ ॥
सुतो युगन्धरस्याऽऽसीच्छ्रीमान् यौगन्धरायणः ।
रुमण्वान् सुप्रतीपस्य द्विजस्य च वसन्तकः ॥ ३६ ॥
ततस्तामामिषधिया सुपर्णकुलसम्भवः ।
जहार विकटः पक्षी मुग्धां दग्धविधेर्वशात् ॥ ४३ ॥
नीत्वा विहायसा दूरं स तामचलसन्निभः ।
तत्याज मोहविवशामुदयाचलकन्दरे ॥ ४४ ॥
लब्धसंज्ञा शनैः कम्पविलोलतनुवल्लरी ।
कीर्णोत्पला इव दिशश्चकार चकितेक्षणैः ॥ ४५ ॥
ततो यदृच्छया यातस्तां विलोक्य तथा स्थिताम् ।
निनाय करुणासिन्धुर्मुनिपुत्रस्तपोवनम् ॥ ५० ॥
सुतेवाश्वासिता तत्र कृपया जमदग्निना ।
असूत तनयं काले सेनान्यमिव पार्वती ॥५१॥
तस्याकाशभवा वाणी चकारोदयनाभिधाम् ॥५२॥
आश्रमे स मुनीन्द्रेण कृतचूडादिकस्ततः ।
ववृधे बालकशशी सह मातुर्मनोरथैः ॥५३॥
सोऽपश्यन्मृगयासक्तो व्याधबद्धं भुजङ्गमम् ॥५४॥
दीनमालोक्य भुजगं शबराय धनार्थिने ।
अमोचयत् स्वजननीदत्तं दत्त्वा स्वकङ्कणम् ॥५५॥
स सर्पो मोचितस्तेन नागो भूत्वा कृताञ्जलिः ।
सख्यं विधाय पातालं निनाय तमुदारधीः ॥५६॥
स किन्नराभिधो नागो धृतराष्ट्रसुतः प्रियम् ॥५७॥
भगिनीं ललिताभिख्यां ददावुदयनाय सः ॥५८॥
ताम्बूलीस्त्रजमम्लानां वीणां घोषवतीमपि ।
अवाप्य राजतनयः फणीन्द्रात् स्वाश्रयं ययौ ॥६०॥

अत्रान्तरे स शबरः कौशाम्ब्यां वणिजं ययौ।
सहस्रानीकनामाङ्कमणिकङ्कणविक्रयी ॥६२॥
आदाय रत्नकटकं स विभीतो महीभुजे।
निवेद्य शबरोपेतः प्रणम्य स ययौ वणिक् ॥६३॥
श्रुत्वा वलयसम्प्राप्तिकथां कृत्वा पुरोगमम् ॥६५॥
शबरं तां दिशं हृष्टः प्रतस्थे सह मन्त्रिभिः।
जामदग्न्याश्रमं प्राप निर्वैरहरिकुञ्जरम् ॥१३६॥
मुनिना पूजितस्तत्र दयितां विरहार्दिताम्।
लेभे हर्षविशोकाक्षस्तनयं चाऽतनुद्युतिः ॥१४०॥
प्रियासहायः स्वपुरीं प्रतस्थे मन्त्रिभिर्वृतः ॥१४२॥
ततः प्रविश्य कौशाम्बीं तनयाय ददौ नृपः।
पुत्रान् युगन्धरादीनां पौरराज्यश्रिया सह ॥१४३॥
यौगन्धरायणो मन्त्री रुमण्वान् वाहिनीपतिः।
वसन्तको नर्मसुहृद्राजसूनोरभूत् ततः ॥१४४॥

इति श्रीक्षेमेन्द्रविरचितायां बृहत्कथामञ्जर्यां कथामुखलम्बके
सहस्रानीककथानाम प्रथमो गुच्छः।

**अथ द्वितीयो गुच्छः।**

कुलोचितपदं याते पार्थवंश्ये महीपतौ।
प्रियासहायस्तत्सूनुश्चक्रे शास्त्रोदितां क्रियाम् ॥ १ ॥
यौगन्धरायणन्यस्तराज्यचिन्ताप्रपरोऽनयत्।
कालं वीणाविनोदेन स मृगव्यामसेवत ॥ ३ ॥
अत्रान्तरे श्लथारम्भं तं ज्ञात्वोज्जयिनीपतिः।
चक्रे चण्डमहासेनस्तज्जयाय ततं मनः ॥ ४ ॥
कन्या वासवदत्तेयं तद्योग्यैव सुता मम।
निसर्गशत्रुर्नार्थ्यो मे मानी स च न याचते ॥ ५ ॥
बध्नाति कुञ्जरान्नित्यं वीणानादहृतान् वने।
ग्राह्यः स कूटनागेन विधायेति धियं पुरः ॥ ९ ॥
दिदेश दूतं कृतकप्रणयोपायनैः सह।
वत्सेश्वराय सन्देशमित्यदाच्च दृढाशयः ॥१०॥

पुत्री मे कुलसर्वस्वमियं गान्धर्ववेदिनः ।
वीणायां श्रुतितत्त्वज्ञ ! शिष्यतां तव वाञ्छति ॥१२॥
तदेह्युज्जयिनीं देव ! प्रणयाद् दुहितुर्मम ॥१३॥
इत्युक्त्वा प्रेषितो दूतः कौशाम्बीं त्वरितो ययौ ।
तत्रोदयनमासाद्य यथादिष्टं न्यवेदयत् ॥१४॥
वीणां वासवदत्ताऽसौ ज्ञास्यत्यभ्येत्य मत्पुरीम् ।
शिष्यो गुरुगृहं याति न हि शिष्यगृहं गुरुः ॥१५॥
इति प्रतीपसन्देशं प्राप्य दूते गते नृपः ।
यौगन्धरायणो मन्त्री चुकोपाऽवन्तिभूभुजे ॥१६॥
अत्रान्तरे प्रतिवचो दूरादाकर्ण्य निःस्पृहम् ।
ध्यायंश्चण्डमहासेनः किमपि व्याकुलोऽभवत् ॥३१॥
योधैरन्तःकृतावासं चण्डो यन्त्रमहागजम् ।
विन्ध्याटव्यां ससर्जाशु सशैलमिव जङ्गमम् ॥३२॥
तं विलासालसगतं विलोलश्रवणाननम् ।
व्याधैः सुरगजाकारं विवेदोदयनो नृपः ॥३३॥
गजेन्द्रबन्धकुशलो विवेशैको महद्वनम् ॥३४॥
कूटकुञ्जरमालोक्य वीणामधुरगीतिभिः ।
स जिघृक्षुर्मुधा तस्थौ सेवाभिरिव दुर्जनम् ॥३६॥
तस्मिन् घोषवतीव्यग्रे योधाः कुञ्जरनिर्गताः ।
अभ्याययुः सुसंरब्धाः सहसा तं जिघृक्षवः ॥४१॥
स तानशङ्कितो दृष्ट्वा धैर्यनिष्कम्पमानसः ।
मण्डलोत्तालचरणो जघान सुभटान् रणे ॥४२॥
हतशेषैः सहाभ्येत्य महाकालवरोर्जितः ।
एको वीरवरः पश्चाज्जग्राह च्छद्मना नृपम् ॥४३॥
वत्सेश्वरं समासाद्य स विवेश निजां पुरीम् ॥४४॥
ततः प्रणम्य वत्सेशं सह गौरैर्व्यजिज्ञपत् ।
मान्योऽसि मम राजेन्द्र ! न हि मे किल्बिषं त्वयि ॥४६॥
इत्युक्त्वा तनयामस्मै न्यवेदयदमन्दधीः ।
वीणागेयकलाज्ञाने शिष्येयं भवतामिति ॥४७॥

तां ददर्श ततो राजा नीलनीरजलोचनाम् ॥४८॥
विलोक्य राजतनयां स कम्पतरलोऽभवत् ॥५२॥
राजपुत्री तमालोक्य लज्जानतमुखी बभौ ॥५३॥
प्रेमप्रणयशालिन्या सेव्यमानस्तया नृपः ।
राज्यस्थितिं विसस्मार सुधयेवाऽमरीकृतः ॥५५॥
सम्मन्त्र्य सेनापतिना सह पौरैश्च दुःखितः ॥५८॥
यौगन्धरायणो धीमान्निर्ययौ योगकोविदः ॥५६॥
दिनैर्दशभिरासाद्य योगेनोज्जयिनीं ततः ॥६४॥
तत्र योगेश्वराख्येन मित्रतां ब्रह्मरक्षसा ।
प्राप्य रूपपरावृत्तिं योगं लेभे महामतिः ॥६६॥
क्षणाद्बभूव खल्वाङ्गः पञ्चचूडो महाहनुः ।
लम्बोदरस्तनुग्रीवः ककुदी जरसार्दितः ॥६७॥
वसन्तः सोऽपि तेनैव नीतः क्षिप्रं विरूपताम् ।
बभूव विकटाकारो हस्त्यायतनमात्मनः ॥६८॥
यौगन्धरायणः प्राप्य राजमार्गं स्खलद्गतिः ।
गायन्हसन्पठन्धावन्नृत्यञ्जनमहासयन् ( त् ) ॥६६॥
कन्यकान्तःपुरोपान्ते नितान्तोन्मत्तकोऽभवत् ॥७०॥
कौतुकात्तत्र नारीभिर्नीतो गान्धर्वशालिकाम् ।
कन्यागुरुं ददर्शाथ नृपं पुनरिवार्जुनम् ॥७१॥
रहोयुक्तं समाभाष्य योगेनाऽन्तर्हितोऽभवत् ॥७२॥
वत्सेश्वरोऽपि संप्राप्य योगं यौगन्धरायणात् ।
ददर्श मन्त्रसङ्केतविपरीतं वसन्तकम् ॥७३॥
अथ राजानमभ्येत्य स्वैरं यौगन्धरायणः ।
विमुक्त्युपायं सम्मन्त्र्य योगं दत्त्वा ययौ पुनः ॥१२३॥
वसन्तकेन सहिता सार्द्धं वासवदत्तया ।
तत्सख्या प्रेमविश्वासभुवा काञ्चनमालया ॥१३६॥
निशि सर्वायुधोपेतो हत्वा नगररक्षिणः ।
ययौ करेणुकावेगधृतहारतरङ्गितः ॥१३७॥
नडागिरिं समारुह्य पालकः कुपितोऽथ तम् ।

पृष्ठतोऽभिससारैकस्तज्ज्ञात्वाऽवन्तिपोऽब्रवीत् ॥१३९॥
कोपनः-पालकः शूरो मान्यो वत्सेश्वरश्च नः ।
गच्छ गोपाल तद्युद्धं निवारय जवादिति ॥१४०॥
पितुर्नियोगादारुह्य सुग्रीवाख्यं तुरङ्गमम् ।
गोपालः प्रययौ तूर्णं ततो भ्रातृनिवर्तने ॥१४१॥
अत्रान्तरे समभ्येत्य गोपालो जवनैर्हयैः ।
निनाय स्वपुरीमेव पालकं पितुराज्ञया ॥१५६॥
अन्येद्युरथ मध्याह्ने प्रचण्डकिरणे रवौ ॥१५८॥
ततस्तडागमासाद्य पीत्वा भद्रवतीजलम् ।
विषदूषितमाकण्ठमवतीर्य तृषाऽपतत् ॥१५९॥
यौगन्धरायणेनाथ निजवेशवता नृपः ।
ननन्द सङ्गतस्तत्र समं वासवदत्तया ॥१६३॥
अत्राभ्येति समादाय रत्नाश्ववरकुञ्जरान् ।
गोपालकस्त्वद्विवाहे विसृष्टोऽवन्तिभूभुजा ॥१६४॥
इति पान्थवणिग्वाक्यं ज्ञात्वा राजा प्रियासखः ।
विसृज्य दूतान् स्वपुरीं स्वसैन्याय व्यलम्बत ॥१६५॥
अत्रान्तरे प्रतीहारो महासेनमहीपतेः ।
वत्सेश्वरं समभ्येत्य समासीनं व्यजिज्ञपत् ॥२४८॥
देव ! चण्डमहासेनसमादिष्टः समेष्यति ।
गोपालकस्त्वद्विवाहयोग्यरत्नाश्वसंपदा ॥२४९॥
श्रुत्वेति हृष्टः सेनानीः सज्जीकृतबलाऽम्बुधिः ।
राजा विवेश कौशाम्बीं कौतुकाकुलतां गताम् ॥२५०॥
अथ गोपालके प्राप्ते प्रवृत्ते च महोत्सवे ।
विवाहवसुधां राजा देव्या सह समाविशत् ॥२५१॥
तयोर्बभौ विवाहश्रीः कुसुमायुधजीविनी ॥२५२॥
वत्सेश्वरं समामन्त्र्य गोपाले शासनात्पितुः ।
प्रयाते स्वपुरीं राजा विजहार प्रियासखः ॥२६६॥

इति क्षेमेन्द्रविरचितायां बृहत्कथामञ्जर्यां कथामुखनामा
द्वितीयो लम्बकः समाप्तः ।

# महाकविश्रीसोमदेवविरचितः कथासरित्सागरः ।

## अथ लावाणको नाम तृतीयो लम्बकः ।

—०—

### प्रथमस्तरङ्गः ।

एवं स राजा वत्सेशः क्रमेण सुतरामभूत् ।
प्राप्तवासवदत्तस्तत्सुखासक्तैकमानसः ॥ ३ ॥
यौगन्धरायणश्चास्य महामन्त्री दिवानिशम् ।
सेनापती रुमण्वांश्च राज्यभारमुदूहतुः ॥ ४ ॥
स कदाचिच्च चिन्तावानानीय रजनौ गृहम् ।
निजगाद रुमण्वन्तं मन्त्री यौगन्धरायणः ॥ ५ ॥
पाण्डवाऽन्वयजातोऽयं वत्सेशोऽस्य च मेदिनी ।
कुलक्रमागता कृत्स्ना पुरं च गजसाह्वयम् ॥ ६ ॥
तत्सर्वमजिगीषेण त्यक्तमेतेन भूभृता ।
इहैव चास्य सञ्जातं राज्यमेकत्रमण्डले ॥ ७ ॥
स्त्रीमद्यमृगयासक्तो निश्चिन्तो ह्येष तिष्ठति ।
अस्मासु राज्यचिन्ता च सर्वाऽनेन समर्पिता ॥ ८ ॥
तदस्माभिः स्वबुद्ध्यैव तथा कार्यं यथैष तत् ।
समग्रपृथ्वीराज्यं प्राप्नोत्येव क्रमागतम् ॥ ९ ॥
एवं कृते हि भक्तिश्च मन्त्रिता च कृता भवेत् ॥१०॥
परिपन्थी च तत्रैकः प्रद्योतो मगधेश्वरः ।
पार्ष्णिग्राहः स हि सदा पश्चात्कोपं करोति नः ॥१६॥
तत्तस्य कन्यकारत्नमस्ति पद्मावतीति यत् ।
तदस्य वत्सराजस्य कृते याचामहे वयम् ॥२०॥
छन्नां वासवदत्तां च स्थापयित्वा स्वबुद्धितः ।
दत्वाऽग्निं वासके ब्रूमो देवी दग्धेति सर्वतः ॥२१॥
नान्यथा तां सुतां राज्ञे ददाति मगधाधिपः ।
एतदर्थं स हि मया प्रार्थितः पूर्वमुक्तवान् ॥२२॥
नाहं वत्सेश्वरायैतां दास्याम्यात्माधिकां सुताम् ।
तस्य वासवदत्तायां स्नेहो हि सुमहानिति ॥२३॥

सत्यां देव्यां च वत्सेशो नैवान्यां परिणेष्यति ।
देवी दग्धेति जातायां ख्यातौ सर्वं तु सेत्स्यति ॥२४॥
पद्मावत्यां च लब्धायां सम्बन्धी मगधाधिपः ।
पश्चात्कोपं न कुरुते सहायत्वं च गच्छति ॥२५॥
ततः पूर्वां दिशं जेतुं गच्छामोऽन्याश्च तत्क्रमात् ।
इत्थं वत्सेश्वरस्यैतां साधयामोऽखिलां भुवम् ॥२६॥
बहुदोषो हि विरहो राज्ञो वासवदत्तया ।
एवं रुमण्वतोक्तः सन्नाह यौगन्धरायणः ॥५५॥
नान्यथोद्योगसिद्धिः स्यादनुद्योगे च निश्चितम् ।
राजनि व्यसनिन्येतन्नश्येदपि यथास्थितम् ॥५६॥
अथ देवीपितुश्चण्डमहासेनाद्विशङ्कसे ।
स सपुत्रश्च देवी च वचः कुरुत एव मे ॥६०॥
देवादाहप्रवादेन कार्यं धैर्येण कुर्महे ॥१०३॥
इत्येतन्निश्चितमतेः श्रुत्वा यौगन्धरायणात् ।
रुमण्वानब्रवीदेवं तर्हि यद्येष निश्चयः ॥१०४॥
तद्गोपालकमानीय देव्या भ्रातरमादृतम् ।
सम्मन्त्र्य च समं तेन सम्यक् सर्वं विधीयताम् ॥१०५॥
एवमस्त्विति वक्तिस्म ततो यौगन्धरायणः ।
तत्प्रत्ययाद्रुमण्वांश्च चक्रे कर्तव्यनिश्चयम् ॥१०६॥
अन्येद्युर्मन्त्रिमुख्यौ तौ दूतं व्यसृजतां निजम् ।
गोपालकं तमानेतुमुत्कण्ठाव्यपदेशतः ॥१०७॥
कार्यहेतोर्गतः पूर्वं तद्दूतवचनाच्च सः ।
आगाद्गोपालकस्तत्र स्वयं मूर्त इवोत्सवः ॥१०८॥
आगतं तदहश्चैनं स्वैरं यौगन्धरायणः ।
निनाय सरुमण्वत्कं गृहं गोपालकं निशि ॥१०९॥
तत्र चास्मै तदुत्साहं शशंस स्वचिकीर्षितम् ।
यत्पूर्वं मन्त्रितं तेन सर्वं सह रुमण्वता ॥११०॥
स च राजहितैषी सन् दुःखावहमपि स्वसुः ।
गोपालकोऽनुमेने तत्कर्तव्यं हि सतां वचः ॥१११॥

सर्वमेतत्सुविहितं देवीं दग्धामवेत्य तु ।
प्राणांस्त्यजन् कथं रक्ष्यो वत्सेश इति चिन्त्यताम् ॥११२॥
सदुपायादिसामग्रीसम्भवे किल सत्यपि ।
मुख्यमङ्गं हि मन्त्रस्य विनिपातप्रतिक्रिया ॥११३॥
इति भूयोऽपि तत्कालमुक्ते तत्र रुमण्वता ।
उवाचाऽऽलोचिताशेषकार्यो यौगन्धरायणः ॥११४॥
नास्त्यत्र चिन्ता मद्राजपुत्री गोपालकस्य सा ।
कनीयसी स्वसा देवी प्राणेभ्योऽप्यधिका प्रिया ॥११५॥
एतस्य चाल्पशालोक्य शोकं वत्सेश्वरस्तदा ।
जीवेत्कदाचिद्देवीति मत्वा धैर्यमवाप्स्यति ॥११६॥
अपि चोत्तमसत्त्वोऽयं शीघ्रं च परिणीयते ।
पद्मावती ततो देवी दृश्यते चाचिरादिति ॥११७॥
एवमेतद्विनिश्चित्य ततो यौगन्धरायणः ।
गोपालको रुमण्वांश्च ततो मन्त्रमिति व्यधुः ॥११८॥
युक्तं लावाणकं यामः सह देव्या नृपेण च ।
पर्यन्तो मगधासन्नवर्ती हि विषयोऽस्ति सः ॥११९॥
सुभगाऽऽखेटभूमित्वाद् राज्ञश्चाऽसंनिधानकृत् ।
तत्रान्तःपुरमादीप्य क्रियते यद्धि चिन्तितम् ॥१२०॥
देवी च स्थाप्यते नीत्वा युक्त्या पद्मावतीगृहे ।
छन्नस्थिताया येनास्याः सैव स्याच्छीलसाक्षिणी ॥१२१॥
एवं रात्रौ मिथः कृत्वा मन्त्रं सर्वेऽपरेऽहनि ।
यौगन्धरायणाद्यास्ते प्राविशन् राजमन्दिरम् ॥१२२॥
तत्रैवमथ विज्ञप्तो वत्सराजो रुमण्वता ।
देव ! लावाणकेऽस्माकं गतानां वर्तते शिवम् ॥१२३॥
स चातिरम्यो विषयस्तत्र चाऽऽखेटभूमयः ।
शोभनाः सन्ति ते राजन्नडघासाश्च सुग्रहाः ॥१२४॥
बाधते तं च नैकट्यात्सर्वं स मगधेश्वरः ।
तत्तत्र रक्षाहेतोश्च विनोदाय च गम्यताम् ॥१२५॥
एतच्छ्रुत्वा स वत्सेशः समं वासवदत्तया ।
क्रीडैकलालसश्चक्रे गन्तुं लावाणके मतिम् ॥१२६॥

## अथ द्वितीयस्तरङ्गः ।

ततः पूर्वोक्तया युक्त्या वत्सराजं सवल्लभम् ।
यौगन्धरायणाद्यास्ते निन्युर्लावाणकं प्रति ॥ १ ॥
वत्सेश्वरोऽपि निवसंस्तस्मिन् देशे दवीयसीम् ।
आखेटकार्थमटवीमटतिस्म दिने दिने ॥ ५ ॥
एकस्मिन् दिवसे तस्मिन् राजन्याखेटकं गते ।
कर्तव्यसंविदं कृत्वा गोपालकसमन्वितः ॥ ६ ॥
यौगन्धरायणो धीमान् सरुमण्वद्वसन्तकः ।
देव्या वासवदत्ताया विजने निकटं ययौ ॥ ७ ॥
तत्र तां राजकार्येऽत्र साहाय्ये तत्तदुक्तिभिः ।
प्रह्वामभ्यर्थयामास भ्राता पूर्वं प्रबोधिताम् ॥ ८ ॥
साऽनुमेने च विरहक्लेशदायि तदात्मनः ।
किं नाम न सहन्ते हि भर्तृभक्ताः कुलाङ्गनाः ॥ ९ ॥
ततस्तां ब्राह्मणारूपां देवीं यौगन्धरायणः ।
स चकार कृती दत्त्वा योगं रूपविवर्तनम् ॥१०॥
वसन्तकं च कृतवान् काणं बटुकरूपिणम् ।
आत्मना च तथैवाभूत् स्थविरब्राह्मणाकृतिः ॥११॥
तथारूपां गृहीत्वाऽथ तां देवीं स महामतिः ।
वसन्तकसखः स्वैरं प्रतस्थे मगधान् प्रति ॥१२॥
तथा वासवदत्ता सा स्वगृहान्निर्गता सती ।
आगाच्चित्तेन भर्तारं पन्थानं वपुषा पुनः ॥१३॥
तन्मन्दिरमथादीप्य दहनेन रुमण्वता ।
हा ! हा ! वसन्तकयुता देवी दग्धेत्यघोष्यत ॥१४॥
यौगन्धरायणः सोऽथ सह वासवदत्तया ।
वसन्तकेन च प्राप मगधाधिपतेः पुरम् ॥१६॥
तत्रोद्यानगतां दृष्ट्वा समं ताभ्यामुपाययौ ।
पद्मावतीं राजसुतां वार्यमाणोऽपि रक्षिभिः ॥१७॥
पद्मावत्याश्च दृष्ट्वैव ब्राह्मणीरूपधारिणीम् ।

देवीं वासवदत्तां तां दृशोः प्रीतिरजायत ॥१८॥
सा रक्षिणो निषिध्यैव ततो यौगन्धरायणम् ।
आनाययद् राजकन्या ब्राह्मणाकृतिमन्तिकम् ॥१९॥
पप्रच्छ च महाब्रह्मन् ! का ते बाला भवत्यसौ ।
किमर्थमागतोऽसीति सोऽपि तां प्रत्यभाषत ॥२०॥

इयमावन्तिका नाम राजपुत्रि ! सुता मम ।
अस्याश्च भर्ता व्यसनीत्यक्त्वेमां कुत्रचिद्गतः ॥२१॥
तदेतां स्थापयाम्यद्य तव हस्ते यशस्विनि ! ।
यावत् तमानयाम्यस्या गत्वाऽन्विष्याचिरात् पतिम् ॥२२॥
भ्राता काणवटुश्चायमिहैवास्याः समीपगः ।
तिष्ठत्येकाकिनी भावदुःखं येन न यात्यसौ ॥२३॥
इत्युक्त्वा राजतनयामङ्गीकृतवचास्तया ।
तामामन्त्र्य स सन्मन्त्री द्रुतं लावाणकं ययौ ॥२४॥

ततो वासवदत्तां तां स्थितामावन्तिकाख्यया ।
वसन्तकं चानुगतं तं काणबटुरूपिणम् ॥२५॥
सहादाय कृतोदारसत्कारा स्नेहशालिनी ।
पद्मावती स्वभवनं विवेश बहुकौतुकम् ॥२६॥
तामुत्तमां विनिश्चित्य महार्हैरात्मनः समैः ।
पद्मावती यथाकाममुपचारैरुपाचरत् ॥२६॥
अथ वासवदत्ताऽस्याश्चक्रे देव्याः प्रसङ्गतः ।
अम्लानमालातिलकौ वत्सेशात् पूर्वशिक्षितौ ॥३१॥

तद्भूषितां च दृष्ट्वा तां माता पद्मावतीं रहः ।
पप्रच्छ मालातिलकौ केनेमौ निर्मिताविति ॥३२॥
ऊचे पद्मावती चैनामत्र मन्मन्दिरे स्थिता ।
काचिदावन्तिका नाम तया कृतमिदं मम ॥३३॥
अत्रान्तरेऽतिदूरासु भ्रान्त्वा चाऽऽखेटभूमिषु ।
वत्सराजश्चिरादागात् सायं लावाणकं पुनः ॥४७॥
भस्मीकृतमपश्यच्च तत्रान्तःपुरमग्निना ।

देवीं दग्धां च शुश्राव मन्त्रिभ्यः सवसन्तकाम् ॥४८॥
श्रुत्वैव चाऽपतद्भूमौ मोहेन हृतचेतनः ।
तद्दुःखानुभवक्लेशमपाकर्तुमिवेच्छता ॥४९॥
क्षणाच्च लब्धसंज्ञः सञ्जज्वाल हृदये शुचा ।
आविष्ट इव तत्रस्थदेवीदाहैषिणाग्निना ॥५०॥

विलपन्नथ दुःखार्तो देहत्यागैकसम्मुखः ।
क्षणान्तरे स नृपतिः संस्मृत्यैतदचिन्तयत् ॥५१॥
गोपालकस्य चैतस्य शोकः स्वल्प इवेक्ष्यते ॥५३॥
यौगन्धरायणादीनां न चैषामतिदुःखिता ।
दृश्यते तेन जाने सा देवी जीवेत् कथञ्चन ॥५४॥
इयं किमपि नीतिस्तु प्रयुक्ता मन्त्रिभिर्भवेत् ।
अतो मम भवेज्जातु तया देव्या समागमः ॥५५॥
निदधे हृदये धैर्यं बोध्यमानश्च मन्त्रिभिः ॥५६॥

एवं गते स्ववृत्तान्ते लावाणकगतैस्तदा ।
गत्वा मगधराजाय चारैः सर्वं निवेदितम् ॥५८॥
स तद्बुद्ध्वैव कालज्ञो वत्सराजाय तां सुताम् ।
दातुं पद्मावतीमैच्छत् पूर्वं तन्मन्त्रिमार्गिताम् ॥५९॥
ततो दूतमुखेनैनमर्थं वत्सेश्वराय सः ।
यौगन्धरायणायापि संदिदेश यथेप्सितम् ॥६०॥
यौगन्धरायणोक्त्या च वत्सेशोऽङ्गीचकार तत् ।
प्रच्छादितैतदर्थं स्याद्देवी जात्विति चिन्तयन् ॥६१॥
ततो लग्नं विनिश्चित्य पूर्णं यौगन्धरायणः ।
तस्मै मगधराजाय प्रतिदूतं व्यसर्जयत् ॥६२॥

त्वदिच्छाङ्गीकृतास्माभिस्तदितः सप्तमे दिने ।
पद्मावतीविवाहाय वत्सेशोऽत्रागमिष्यति ॥६३॥
शीघ्रं वासवदत्तां च येनासौ विस्मरिष्यति ।
इति चास्मै महामन्त्री संदिदेश यथेप्सितम् ॥६४॥
प्रतिदूतः स गत्वा च यथासंदिष्टमभ्यधात् ।

ततो मगधराजाय स चाप्यभिननन्द तत् ॥६५॥

ततः स दुहितृस्नेहंनिजेच्छाविभवोचितम् ।
विवाहोत्सवसम्भारं चकार मगधेश्वरः ॥६६॥

सा चाभीष्टवरश्रुत्या मुदं पद्मावती ययौ ।
प्राप वासवदत्ता च तद्वार्ताकर्णनाच्छुचम् ॥६७॥

इत्थं मित्रीकृतः शत्रुर्न च भर्ताऽन्यथा त्वयि ।
वसन्तकोक्तिरित्यस्याः सखीव विदधे धृतिम् ॥६६॥

अथाऽऽसन्नविवाहायाः पद्मावत्या मनस्विनी ।
अम्लानमालातिलकौ दिव्यौ भूयश्चकार सा ॥७०॥

ततो वत्सेश्वरस्तत्र सम्प्राप्ते सप्तमेऽहनि ।
ससैन्यो मन्त्रिभिः साकं परिणेतुं किलाययौ ॥७१॥

प्रविश्य मगधेशस्य वत्सेशोऽप्यथ मन्दिरम् ।
सनाथं पतिवत्नीभिः कौतुकागारमाययौ ॥७६॥

तत्र पद्मावतीमन्तर्ददर्श कृतकौतुकाम् ॥७७॥

तस्याश्च मालातिलकौ दिव्यावालोक्य तौ निजौ ।
एतौ कुतोऽस्या इत्येवं विममर्श स भूपतिः ॥७८॥

ततः स वेदीमारुह्य तस्या जग्राह यत्करम् ।
तदेवारम्भतां प्राप तस्य पृथ्व्याः करग्रहे ॥७६॥

मुमोच स कृतोद्वाहः कराद्वत्सेश्वरो वधूम् ।
न तु वासवदत्तां तां तत्याज हृदयात् क्षणम् ॥८२॥

साक्षीकृत्य च तत्कालमग्निं यौगन्धरायणः ।
अद्रोहप्रत्ययं राज्ञो मगधेशमकारयत् ॥८४॥

अथोच्चचाल वत्सेशो भुक्तपीतपरिच्छदः ।
मन्त्रिभिः सममादाय वधूं पद्मावतीं ततः ॥६०॥

पद्मावत्या विसृष्टं च सुखमारुह्य वाहनम् ।
तयैव च समादिष्टैस्तन्महत्तरकैः सह ॥६१॥

आगाद्वासवदत्ताऽपि गुप्तं सैन्यस्य पृष्ठतः ।
कृतरूपविवर्तं तं पुरस्कृत्य वसन्तकम् ॥६२॥

क्रमाल्लावाणकं प्राप्य वत्सेशो वसतिं निजाम् ।
प्रविवेश समं वध्वा देवीचित्तं तु केवलम् ॥९३॥
एत्य वासवदत्ताऽपि सा गोपालकमन्दिरम् ।
विवेशाथ निशीथे च परिस्थाप्य महत्तरान् ॥९४॥

तत्र गोपालकं दृष्ट्वा भ्रातरं दर्शितादरम् ।
कण्ठे जग्राह रुदती बाष्पव्याकुललोचनम् ॥९५॥
तत्क्षणे स्थितसंविच्च तत्र यौगन्धरायणः ।
आययौ सरुमण्वत्कस्तया देव्या कृतादरः ॥९६॥
सोऽस्याः प्रोत्साहविश्लेषदुःखं यावद् व्यपोहति ।
तावत् पद्मावतीपार्श्वं प्रययुस्ते महत्तराः ॥९७॥

आगताऽऽवन्तिका देवि ! किमप्यस्मान् विहाय तु ।
प्रविष्टा राजपुत्रस्य गृहं गोपालकस्य सा ॥९८॥
इति पद्मावती सा तैर्विज्ञप्ता स्वमहत्तरैः ।
वत्सेश्वराग्रे साशङ्का तानेवं प्रत्यभाषत ॥९९॥
गच्छतावन्तिकां ब्रूथ निःक्षेपस्त्वं हि मे स्थिता ।
तदत्र किं ते यत्राहं तत्रैवाऽगम्यतामिति ॥१००॥
तच्छ्रुत्वा तेषु जातेषु राजा पद्मावतीं रहः ।
पप्रच्छ मालातिलकौ केनेमौ ते कृताविति ॥१०१॥
सावोचदथ मद्गेहे न्यस्ता विप्रेण केनचित् ।
आवन्तिकाभिधा यैषा, तस्याः शिल्पमिदं महत् ॥१०२॥

तच्छ्रुत्वैव च वत्सेशो गोपालगृहमाययौ ॥१०३॥
प्रविवेश च गत्वा तद्द्वारस्थितमहत्तरम् ।
अन्तःस्थदेवीगोपालमन्त्रिद्वयवसन्तकम् ॥१०४॥
तत्र वासवदत्तां तां ददर्श प्रोषितागताम् ॥१०५॥
पपाताथ महीपृष्ठे स शोकविषविह्वलः ॥१०६॥
ततः साप्यपतद्भूमौ गात्रैर्विरहपाण्डुरैः ।
विललाप च निन्दन्ती तदाचरितमात्मनः ॥१०७॥
अथ तौ दम्पती शोकदीनौ रुरुदतुस्तथा ।

यौगन्धरायणोऽप्यासीद् बाष्पधौतमुखो यथा ॥१०८॥
तथाविधं च तच्छ्रुत्वा काले कोलाहलं तदा ।
पद्मावत्यपि तत्रैव साकुला तमुपाययौ ॥१०९॥
क्रमादवगतार्था च राजवासवदत्तयोः ।
तुल्यावस्थैव साप्यासीत् स्निग्धमुग्धा हि सत्स्त्रियः ॥११०॥
मगधेशसुतालाभात् तव साम्राज्यकांक्षिणा ।
कृतमेतन्मया देव ! देव्या दोषो न कश्चन ॥११२॥
इयं त्वस्याः सपत्न्येव प्रवासे शीलसाक्षिणी ।
इत्युवाचाथ वत्सेशं धीरो यौगन्धरायणः ॥११३॥
अहमत्र विशाम्यग्नावस्थाः शुद्धिप्रकाशने ।
इति पद्मावती तत्र जगादाऽमत्सराशया ॥११४॥
अहमेवापराध्यामि यत्कृते सुमहानयम् ।
सोढो देव्याऽपि हि क्लेश इति राजाऽप्यभाषत ॥११५॥
अग्निप्रवेशः कार्यो मे राज्ञो हृदयशुद्धये ।
इति वासवदत्ता च बभाषे बद्धनिश्चया ॥११६॥
ततः स कृतिनां धुर्यो धीमान् यौगन्धरायणः ।
आचम्य प्राङ्मुखः शुद्ध इति वाचमुदैरयत् ॥११७॥
यद्यहं हितकृद्राज्ञो देवी शुद्धिमती यदि ।
ब्रूत भो लोकपालास्तन्न चेद् देहं त्यजाम्यहम् ॥११८॥
इत्युक्त्वा विरते तस्मिन् दिव्या वागुदभूदियम् ।
धन्यस्त्वं नृपते ! यस्य मन्त्री यौगन्धरायणः ॥११९॥
यस्य वासवदत्ता च भार्या प्राग्जन्मदेवता ।
न दोषः कश्चिदेतस्या इत्युक्त्वा वागुपारमत् ॥१२०॥
दधदथ नृपतिः स मूर्तिमत्यै निकटगते रतिनिर्वृती इवोभे ।
अनुदिनसहवाससानुरागे निजदयिते परमुत्सवं बभार ॥१२१॥

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे
लावाणलम्बके द्वितीयस्तरङ्गः ।

—:०:—

❀ श्रीः ❀

# स्वप्नवासवदत्तस्य संक्षिप्तकथासारः ।

## ( १ ) प्रथमाङ्के—

नान्द्यन्ते सूत्रधारो बलदेवभुजयोर्मङ्गलाचरणं विधाय, तद्द्वारेणैव उदयन-वासवदत्ता-पद्मावती-वसन्तकानां नाटकीयवस्तुप्रधानपात्राणां नामानि सूचयामास । ततश्च सामाजिकान् किञ्चिन्निवेदयितुकामो नेपथ्ये उत्सारणाशब्दमाकर्ण्य मगधराजकन्यानुगामिभिर्भृत्यैस्तपस्विजनोऽयमुत्सार्यत इत्याख्याय स्थापनां समापयामास । ततो भटैस्तपस्विन उत्सार्यन्ते । अथ विधृतपरिव्राजकरूपः, आवन्तिकावेषधारिण्या वासवदत्तयाऽनुयातः उदयनमन्त्री यौगन्धरायणो वनमुपागतस्तत्राऽपि पुरवदुत्सारणव्यापारं पश्यन् स्वावमाननजनितमनःखेदां वासवदत्तां वल्गुना वचसा समाश्वासयन्, कञ्चुकीप्रतिषिद्धोत्सारणयोर्भटयोर्निर्गतयोः, तत्रैवाऽऽश्रमे विद्यमानां महाराजदर्शकमातरं महादेवीमभिवन्द्य तत आशिषमवाप्य, गृहं प्रति परावर्तमानाऽप्यद्याऽमुमेव प्रदेशमधितिष्ठति महाराजभगिनी पद्मावतीति वार्तामुपलभ्य, पुष्पकभद्रादिज्योतिर्विन्मतादिष्टा स्वामिनो भाविनी देवीयमेवेति मनसा निश्चित्य, तथैव स्वकार्यसिद्धिं च भाविनीं विचार्य, वनस्थां तापसीं प्रणम्य, तदनुज्ञया तपस्विजनोपयोगिवस्तुप्रदानोत्सुकां पद्मावतीम् 'अयमेवाऽवसरः' इति निर्धार्य, तत्सन्निधौ वासवदत्तां 'ममेयं भगिनी'ति निवेद्य न्यासीकर्तुं प्रार्थयामास । तदङ्गीकृतं च पद्मावत्या । ततो गन्तुकामे यौगन्धरायणे तत्र कश्चन ब्रह्मचारी समेत्य विश्रम्य किञ्चित्कालं यौगन्धरायणेन पृष्टः सन्नूचे—"वत्सेषु लावाणकनाम्नि ग्रामे वेदार्थमनुसन्दधाने वसति मयि जातुचित्तत्रत्ये भूपतौ मृगयाविनोदाय श्रीमत्युदयने गतवति तदीया पत्नी वासवदत्ताऽवन्तिराजदुहिता ग्रामदाहे दग्धाऽभूत् । तस्मिन्नेव काले तदुद्धरणेच्छया वह्निमध्यं प्रविष्टो मन्त्री यौगन्धरायणोऽपि दग्धकलेवरः कीर्तिशेषतां लेभे । आखेटात्प्रत्यागतेन भूपतिना वृत्तान्तोऽयं श्रुतः, श्रुत्वा च तज्जनितपरितापाऽसहतया तत्रैवाऽसौ प्राणांस्त्यक्तुमैच्छत्, किन्तु मन्त्रिमण्डलेन भूयसा प्रयत्नेन निवार्यमाणः, अन्तराऽन्तरा मोहमनुभवन् रुमण्वता कथञ्चित्प्रकृतिमापादितः । विरहदग्धचेतसो राज्ञस्तत्रावस्थानमनुचितमिति विचार्य

मन्त्रिणस्ततोऽन्यत्र राजानमनयन्" इति। एवमभिधाय प्रयाते तस्मिन् ब्रह्मचारिणी यौगन्धरायणः प्रार्थनाऽनन्तरं गृहीतवाऽनुज्ञां ततः प्रतस्थे। पद्मावती तदनु तापसीतः सदृशभर्तृलभात्मकमाशीर्वादवचनमादाय प्रदोषवेलायां सपरिवारा निजवसतिमयासीत्।

## ( २ ) द्वितीयाङ्के—

पूर्वं चेटी माधवीलतामण्डपसमीपे काननोद्देशे पद्मावत्याः कन्दुक-क्रीडासंलग्नत्वं सूचयति। ततो वासवदत्ताप्रभृतिपरिवारयुतायां तस्यां परिश्रान्तायां क्रीडानिवृत्तौ तयोर्वासवदत्ता-पद्मावत्योर्मिथः संलापः प्राचलत्। प्रसङ्गतश्च 'परकीयाविव तव हस्तौ' 'वरमुखं पश्यामि' 'भविष्यन्महासेन-वधूः' इत्यादि नर्मालापमाचरन्त्यां वासवदत्तायां चेटी पद्मावत्या वत्स-राजोदयनानुरागित्वं प्रकाशयामास। अत्रान्तरे पद्मावत्याः धात्र्या समेत्येदमुक्तं यत् "पद्मावती न चिरेण वत्सराजमुपैष्यति, पद्मावती भ्रात्रा सह वत्सराजेन वाङ्निश्चयः कृतः" इति। अथान्या चेटी तत्रागत्य विवाहकार्यमद्यैव भावीत्यभिहितवती। ततः सर्वा अप्यन्तःपुरं प्रति चेलुः।

## ( ३ ) तृतीयाङ्के—

सर्वेषु पद्मावतीविवाहव्यापारलग्नेषु, एकाकिनी वासवदत्ता प्रमदवनं मनोविनोदार्थमुपागमत्। एका चेटी स्वाभीप्सितकुसुमावचयपरा वासवदत्ताऽन्तिकमागता तां महाराज्याः शीघ्रं कौतुकमाल्यग्रथनरूपं निदेशं तेन सहैव स्नानाय जामातुरुपस्थितिं च न्यवेदयत्। माल्यग्रथनं कुर्वाणायामेव वासवदत्तायां द्वितीया चेटी प्रविश्य त्वरया मालामादाय पूर्वोपस्थितचेट्या सह निर्गच्छति। ततो भूयोऽपि चिन्तया पीड्यमाना वासवदत्ता शान्त्युपायान्तरमलभमाना शयनाय गच्छति।

## ( ४ ) चतुर्थाङ्के—

प्रथमं विदूषकः वत्सराजविवाहेन जातानन्दः सन्नपि पाचनाभावेन जातं विषादं सख्या सह भाषणे प्रकटयति। अथ वासवदत्तया दास्या च सहिता पद्मावती प्रमदवनमुपेत्य दास्या शेफालिकापुष्पावचयं कारयति, राज्ञो मनोरञ्जनार्थं कतिचित्कुसुमानि च तत्रैव स्थापयति। प्रवृत्ते वार्ता-

लापे पद्मावती राज्ञि स्वानुरागं प्रकाशयति। तदनु माधवीलता-मण्डपान्तिकं पद्मावतीं द्रष्टुमागच्छतो राजाविदूषकौ। तयोर्मिथः सम्भाषणे "सकलगुणैरभिलषणीया यद्यपि पद्मावती, तथापि वासवदत्तास्मृतिर्नापसरति चेतसः" इत्यूचिवान् राजा। अस्मिन्नेव प्रसङ्गे राज्ञो नयनाभ्यामश्रुधारा निर्याति। विदूषकस्तु मुखप्रक्षालनाय जलमानेतुमन्यतो गच्छति। इदानीमेव वासवदत्तादिभिः प्रणुन्ना पद्मावती राज्ञोऽन्तिकमुपेत्य, आयाते विदूषके तं राज्ञोऽश्रुकारणं पृच्छति। स च पुष्पपरागपातं कारणमभिधत्ते। तदनु पद्मावती राज्ञो मुखं प्रक्षालयति। अथाऽवसरज्ञो विदूषको राजानं मगधराजाऽभ्यर्णगमनमावश्यकमिति सूचयति। ततो राजा ततः प्रयातुं प्रतस्थे।

## ( ५ ) पञ्चमाङ्के—

अथ प्रविश्य पद्मिनिकाऽभिधा चेटी मधुकरिकाऽऽख्यया चेट्या पद्मावतीशिरःपीडावृत्तान्तं वासवदत्तां विज्ञापयति, विदूषकमपि राज्ञे वृत्तमिदं निवेदयितुं प्रेषयति। प्रथममेव वासवदत्ताचिन्ताक्रान्तो नरपतिः पद्मावत्या अस्वस्थतामाकर्ण्य शीघ्रं विदूषकेण सह समुद्रगृहं नाम पद्मावतीशयनागारं जगाम। तत्र पद्मावतीमनुपलभ्य तामेव प्रतीक्षमाणः शयनीय उपविष्टोऽवतस्थे। ततो निद्रावेशपरिहाराय कथाः प्रवर्त्तयितुं विदूषकमादिश्य, तन्मुखात्प्रसङ्गेनोज्जयिन्याः नाम श्रुत्वा पुनरुद्बुद्धवासवदत्तास्मरणो नरपतिः शनैः शनैर्निद्रामभजत्। निद्रावशं राजानमुज्झित्य विदूषकोऽन्यतो गतः। तदानीमेव पद्मावतीं द्रष्टुं तत्राऽऽगता वासवदत्ता वस्त्राऽच्छन्नशरीरं राजानं पद्मावतीमेव मत्वा शयन एवाऽतिष्ठत्। तदा वासवदत्तास्मरणमहिम्ना तद्विषयकमेव स्वप्नमवलोकमानं यत्किञ्चिदनर्गलाक्षरमापृच्छन्तं राजानं कतिपयैरुत्तरैः सम्भाव्य, अधोलम्बमानं तत्करमुपरि संस्थाप्य सा स्वरूपप्रकाशभिया ततो निर्गन्तुमारेभे। तस्मिन्नेव क्षणे वासवदत्ताकरस्पर्शादुत्थितो राजा त्वरया यान्तीं तां सम्यगनवलोक्याऽपि वासवदत्तामेवाऽमन्यत। ततस्तत्राऽऽप्यागतेन सह विदूषकेण स्वप्नविषयिणीमेव वार्तामालपति राजनि, ससम्भ्रमं प्रविष्टो महाराजदर्शकप्रेषितः कञ्चुकी "सन्नद्धा युद्धसामग्री, निजराज्यापहारिणं

रिपुमाहर्णि गत्यभियाहि" इत्यावेदयामास । तन्निशम्य युद्धोत्साहवान् राजा ततो ययौ ।

## ( ६ ) षष्ठाङ्के—

विजयशालिनं राजानमभिनन्दितुं महाराजमहासेनस्य महाराज्ञा अङ्गारवत्या आदेशं च विज्ञापयितुं धात्री-कञ्चुकिनौ नृपभवनद्वारोपान्ते समायातौ । वासवदत्तावीणामादाय तद्विरहमग्नमपि राजानं वासवदत्ता-विषयकमेव निवेदितुकामाविमाविति प्रतीहारी तयोरागमनं विज्ञाप्य तौ प्रावेशयत् । प्रतीहारीमुखात् तयोरागमनमाकर्ण्य दूतयोः प्रवेशात् प्रागेव राज्ञा तत्र पद्मावत्याहूताऽऽसीत् । अथ कञ्चुकी स्वस्वामिनिदेशात् कुशलप्रश्नं विधाय, विजयोचितं राज्ञोऽभिनन्दनं चकार । धात्री साऽप्य-भ्यभाषत—"यदा त्वमुज्जयिन्यामागत आसीः, तदानीमेव वासवदत्तया सह तव विवाहं कर्तुमिच्छुका वयमास्म, किन्तु सहैव तया त्वां पुरीं प्रस्थितं त्वां ज्ञात्वा, युवयोश्चित्रे निर्माय तयोः कृत्रिमो विवाहः सम्पा-दितः" इत्यावेद्य सा चित्रद्वयं राज्ञे समर्पयामास । पद्मावत्यपि वासव-दत्ताचित्रं स्वसमीपे विप्रेण न्यासीकृताया ब्राह्मणस्त्रियोऽत्यन्तसादृश्य-मावहन्तं वीक्ष्य, तद्विषये शङ्कमाना राज्ञश्चित्रेण सह राज्ञ आकृतेः संवादं च निरीक्ष्य, आवन्तिकामपि मनसा वासवदत्तामेव निश्चित्य चिन्तासागरे ममज्ज । सचिन्तमुद्रां पद्मावतीं दृष्ट्वा तत्कारणं पृष्टवान् राजा । सा तु तदनुरोधेन विप्रभगिन्याः स्वसमीपे न्यासेन स्थापने, तस्याश्चित्रगतं वासवदत्तासादृश्यं च रहस्यभूतं न्यवेदयत् । तदानीमेवाऽवसरं विज्ञाय यौगन्धरायणो न्यासीकृतां भगिनीमादातु-मायथौ । प्रथमं विप्रभगिनीविषये सन्दिहानो नरपतिः प्रत्यक्षं तां वीक्ष्य वासवदत्तैवेयमित्यज्ञासीत् । तदनु धात्रीकञ्चुकिनोः समक्षं दीयमानायां वासवदत्तायां धात्री सहसा "इयं वासवदत्ता" इत्युच्चैरवदत् । अथ राजा-ज्ञयाऽपसारिते मुखावरणे स्वप्रियां वासवदत्तां स्फुटं निरीक्ष्य यौगन्धरा-यणमतर्जयन्नरपतिः । यौगन्धरायणोऽपि झटिति कृत्रिमवेषमपसार्य राज्ञः पादोपसङ्ग्रहणपूर्वकं सर्वमपि रहस्यजातमुद्घाटयत् । अथ राज्ञ उज्जयि-नीगमनप्रस्तावेन सहैव भरतवाक्यमुपन्यस्य नाटकं समापयामास कविः ।*

❀ श्रीः ❀

# स्वप्नवासवदत्ता का संक्षिप्त कथासार।

## ( १ ) पहला अङ्क—

मङ्गल-गानवादन के पश्चात् सूत्रधार बलदेव जी की भुजाओं से लोगों का रक्षण-स्वरूप मङ्गलाचरण कर नाटक के प्रधानपात्र उदयन, वासवदत्ता, पद्मावती, वसन्तक आदि लोगों के नाम की सूचना करने के अनन्तर सज्जनों से कुछ कहने की इच्छा करता हुआ नेपथ्य में 'हटो, हटो' ऐसा शब्द सुनकर "ओह मगधराज की कन्या के भृत्यों द्वारा तपस्वी लोग हटाये जा रहे हैं" ऐसा कह कर स्थापना समाप्त करता है। अर्थात् स्वयं रङ्गभूमि से चला जाता है। बाद सिपाहियों ने तपस्वी लोगों को हटाया। फिर संन्यासी के वेश में यौगन्धरायण आवन्तिका का वेष धारण करने वाली वासवदत्ता के साथ वन में आया और साधारण गाँव की तरह वन में भी 'हटो, हटो' ऐसा व्यवहार देख इसमें अपना अपमान समझकर दुःखी होने वाली वासवदत्ता को समझा बुझाकर कञ्चुकी से मना किये गये सिपाहियों के चले जाने के बाद, 'उसी आश्रम में रहने वाली महाराजदर्शक की माता महादेवी के पास जा प्रणाम कर आशीर्वाद ग्रहण कर घर के लिये लौटती हुई भी महाराज की भगिनी पद्मावती आज इसी तपोवन में ठहरेंगी' इस समाचार को सुनकर, और 'यही पुष्पकभद्रादि ज्योतिषियों द्वारा आदिष्ट महाराज उदयन की भावी स्वामिनी है' इसे हृदय में विचार कर, इसी से अपना काम होगा ऐसा विचार करते हुए, तापसी को प्रणाम कर तपस्वियों को इच्छित वस्तु ( कमण्डल आदि ) देने की इच्छा से घोषणा करने वाली पद्मावती से मौका समझकर अपनी बहन वासवदत्ता को धरोहर रखने की प्रार्थना करता है। पद्मावती ने भी उसे मान लिया। फिर यौगन्धरायण जाना ही चाहता था कि, ( इतने में ) एक ब्रह्मचारी आया और 'कुछ समय तक विश्राम कर

यौगन्धरायण को वत्सदेश के लावाणक नामक गाँव में अपने अर्थानुसन्धानपूर्वक वेदों के अध्ययन का, एक दिन राजा के शिकार के लिये चले जाने पर लावाणक में आग लग जाने का, उसी आग में वासवदत्ता और यौगन्धरायण के जल मरने का, शिकार से लौटे हुए राजा को वासवदत्ता तथा यौगन्धरायण के अनिष्ट समाचार सुनकर मूर्च्छित होने तथा मन्त्रियों द्वारा लावाणक गाँव से अन्यत्र ले जाए जाने आदि का समाचार सुनाकर फिर चला गया। पद्मावती से आज्ञा पाकर यौगन्धरायण भी चला गया। पद्मावती ने भी तापसी से अनुरूप पति की प्राप्ति का आशीर्वाद पाकर परिवार सहित सन्ध्या समय अपने निवास स्थान की ओर प्रस्थान किया।

## ( २ ) दूसरा अङ्क--

प्रथम एक दासी आकर 'पद्मावती माधवीलतामण्डप के पास गेंद खेल रही हैं' इस बात को सूचित करती है। अनन्तर सपरिवार पद्मावती और वासवदत्ता के गेंद के खेल से थक जाने के कारण खेल समाप्त करने पर आपस की बातचीत में 'तुम्हारे हाथ पराये से हो रहे हैं' 'वरमुख को देखती हूँ' 'महासेन की होने वाली बहू' इत्यादि वासवदत्ता के आलाप करते हुए प्रसङ्ग में दासी ने पद्मावती का वत्सराज उदयन के गुणों पर अनुराग प्रकाशित किया। इतने में एक दासी आयी और वत्सराज उदयन के साथ पद्मावती के विवाह की बात सुनायी। फिर दूसरी दासी आकर 'आज ही विवाह की शुभ घड़ी है अतः शीघ्रता कीजिये' ऐसी जल्दीबाजी करने लगी, तब सब लोग अन्तःपुर में चले गये।

## ( ३ ) तीसरा अङ्क—

पद्मावती के विवाह के अवसर पर, जब कि लोग हँसी खुशी में निमग्न हो रहे थे, वासवदत्ता उन्मना होकर अकेली एकान्त प्रमदवन में मनोविनोद के लिये चली गयी। उसे खोजती हुई चेटी भी वहीं जा पहुँची और उससे पद्मावती के विवाहार्थ कौतुक-माला गूँथने के लिये

महारानी का सन्देश सुनाया। फिर वासवदत्ता माला गूँथने लगी। इतने में दूसरी दासी आयी और शीघ्रता कर माला लेकर पहली दासी के साथ चली गयी। फिर चिन्तित वासवदत्ता शान्ति का और कोई उपाय न देख शयन करने चली गयी।

( ४ ) चौथा अङ्क--

वत्सराज के विवाह से आनन्दित होता हुआ भी विदूषक अपच के कारण अपने दुःख को सखी के भाषण में प्रकट करता है। पद्मावती अपनी दासी और वासवदत्ता के साथ प्रमदवन में टहलती हुई अपनी दासी से कुछ पारिजात के फूलों को चुनवा कर और कुछ राजा के मनोविनोद के लिये बिखरे हुए छोड़ने को कहती है। फिर धीरे २ वार्तालाप होने पर राजा के गुणों में पद्मावती का प्रेम प्रकाशित हो गया। इसके बाद आते हुए राजा और विदूषक को दूर से देखकर वे सब लतामण्डप में छिप गई। लतामण्डप के पास पहुँच कर विदूषक ने पूछा कि, 'महाराज! आपको तब वासवदत्ता अधिक प्रिय थी, या अब पद्मावती'? राजा ने उत्तर दिया कि, 'यद्यपि सब गुणों से पद्मावती मुझे प्यारी लगती है, पर फिर भी वासवदत्ता की याद मुझे भूल नहीं सकती'। यह कहते हुए वासवदत्ता का शोक उमड़ने से राजा के नेत्रों से आँसुओं की धारा बहने लगी। विदूषक राजा का मुँह धोने के लिये पानी लेने चला गया। इधर वहाँ से खिसकने का अच्छा मौका देख पद्मावती को वहीं छोड़ वासवदत्ता आदि वहाँ से चली गई। लौटने पर विदूषक से जब पद्मावती ने राजा के नेत्रों से आँसू निकलने का कारण पूछा, तो उसने बताया कि, महाराज की आँखों में पुष्प-पराग गिरने से अश्रुधारा बह चली। तब पद्मावती ने विदूषक से पानी लेकर राजा को दिया। तदन्तर विदूषक ने मगधराज के पास उनका चलना आवश्यक बताकर उन्हें उत्साहित किया और सब लोग चले गये।

( ५ ) पांचवाँ अङ्क--

पद्मिनिका नाम की दासी आयी और उसने पद्मावती के शिरदर्द का समाचार वासवदत्ता को देने के लिये मधुकरिका नाम की अपनी

सखी से और राजा को समाचार देने के लिये विदूषक को खोजकर उससे कहा। विदूषक ने राजा से यह समाचार कहा। पद्मावती का दुःखद समाचार सुनकर राजा पद्मावती के शयनागार समुद्रगृह में गये, परन्तु वहाँ पद्मावती को न देखकर उसकी प्रतीक्षा में उसी शय्या पर बैठ गये और विदूषक से इधर उधर की ( उज्जयिनी तथा ब्रह्मदत्त काम्पिल्यविषयक कथाप्रसंग की ) बातें कर ही रहे थे कि राजा को निद्रा ने आ घेरा। वह शय्या पर लेट गये। फिर विदूषक वहाँ से चला गया। कुछ देर में वासवदत्ता भी पद्मावती की शिरोवेदना का हाल सुनकर समुद्रगृह में आई। वहाँ शय्या पर सोये हुये राजा को पद्मावती समझकर वह भी वहीं बैठ गई। इसी बीच राजा वासवदत्ता को स्वप्न में देखकर स्वप्न में ही उससे प्रश्नोत्तर करने लगे। जब वासवदत्ता को मालूम हुआ कि, ये तो महाराज हैं, तो वह झट उठकर भागने लगी। इतने में राजा की नींद उचट गई और वह उसे पकड़ने के लिये लपके, पर वह हाथ न आई। इतने ही में विदूषक से कहा—मित्र! वासवदत्ता अभी जीवित है, क्योंकि पलंग पर सोते हुये मुझे जगा कर अभी वह यहाँ से कहीं चली गयी'। विदूषक ने कहा—वासवदत्ता तो कभी की मर गई है आपने स्वप्न देखा होगा अथवा अवन्तिसुन्दरी नाम की यक्षिणी है, उसको देखा होगा। इतने में महाराज दर्शक के भेजे हुए कञ्चुकी ने आकर शत्रु पर चढ़ाई करने का हाल सुनाया। फिर राजा उत्साहपूर्वक लड़ाई के लिये चल दिये।

## ( ६ ) छठा अङ्क--

संग्राम में विजय प्राप्त करने के पश्चात् एक दिन जब महाराज को किसी से वासवदत्ता की घोषवती नामक वीणा, जो कि, नर्मदा के किनारे झाड़ियों में पड़ी थी, प्राप्त हुई, तब उस वीणा को लेकर वे मूर्च्छित हो गये और विलाप करने लगें। इसी बीच में उज्जयिनी से कञ्चुकी और वासवदत्ता की धाय वसुन्धरा दोनों राजा और वासवदत्ता का चित्रपट तथा समाचार लेकर उपस्थित हुए। कुशल-प्रश्न के अनन्तर इन्होंने यह समाचार सुनाया कि "यद्यपि अब वासवदत्ता नहीं

है, किन्तु हम तुम्हें अपने पुत्रों की तरह अब भी समझते हैं। यद्यपि उस समय तुम अपनी चपलता से अग्नि की साक्षी किये बिना ही भाग गये थे, तो भी हमने तुम दोनों के चित्र बनाकर यथार्थरीति से तुम्हारा विवाह-संस्कार कर दिया था। अब तुम यह चित्र देखकर अपने चित्त की शान्ति करो"। वासवदत्ता के चित्र को देखकर पद्मावती कहने लगी कि "ठीक इसी तरह की इसी स्वरूप की एक स्त्री मेरे विवाह से पहिले किसी ब्राह्मण ने अपनी बहन बताकर मेरे पास धरोहर रक्खी है।" इतने ही में यौगन्धरायण भी अपनी धरोहर वापिस लेने के लिये उपस्थित हुआ। आवन्तिका का वेष धारण करनेवाली वासवदत्ता जब वहाँ लायी गयी तो वसुन्धरा ने उसको पहचानकर कहा कि, यह तो वासवदत्ता है। फिर यौगन्धरायण ने भी अपना सन्यासी का वेष हटा लिया और असली स्वरूप प्रकाशित कर उस विषय के रहस्य का उद्घाटन किया और अपना अपराध समझ स्वामी से उसके लिये क्षमा मांगी। तदनन्तर राजा की आज्ञा से, वासवदत्ता को राजा के पास से हटाने और पद्मावती के पास धरोहर रखने का कारण बताया इसके बाद राजा के उज्जयिनी जाने के प्रस्ताव के साथ भरतवाक्य दिखला कर कवि ने नाटकीय विषय को समाप्त किया।

—:o:—

# ❀ अकारादिक्रमेण श्लोकानुक्रमणिका ❀

# स्वप्नवासवदत्तनाटकीयपात्रपरिचयः ।

## रङ्गभूमावनतीर्णानि पात्राणि ।

**पुरुषाः**

राजा—उदयनो नाम वत्सेश्वरः ।

विदूषकः—वसन्तकनामा – उदयनस्य वयस्यः ।

यौगन्धरायणः—उदयनस्य प्रधानामात्यः ।

ब्रह्मचारी—लावाणके वेदाध्यायी कश्चिद्विद्यार्थी ।

काञ्चुकीयः—अन्तःपुरचारी सेवकः ।

सूत्रधारः—नाटकप्रयोगप्रधानसञ्चालकः ।

सम्भषकः, भटः } पद्मावत्याः सेवकौ

**स्त्रियः**

वासवदत्ता—अवन्तिराजमहासेनकन्या उदयनस्य प्रथमपत्नी, इयमेवाऽऽवन्तिका च ।

पद्मावती—मगधेश्वरस्य दर्शकस्य भगिनी । उदयनस्य द्वितीया पत्नी ।

तापसी—आश्रमवासिनी काचिद् वृद्धा स्त्री ।

चेटी—पद्मावत्या विश्वासपात्रं परिचारिका ।

पद्मिनिका, मधुकरिका } पद्मावत्याः सेविके ।

धात्री—पद्मावत्या उपमाता ।

धात्री—वसुन्धरा नाम्नी वासवदत्ताया उपमाता ।

विजया—वत्सराजगृहे द्वारपालिका—प्रतिहारी ।

## रङ्गभूमावनवतीर्णानां प्रसङ्गोदाहृतनाम्नां पात्राणां परिचयः ।

**पुरुषाः**

दर्शकः—मगधदेशाधीश्वरः पद्मावत्या भ्राता ।

प्रद्योतः—अवन्तिदेशाधीश्वरः महासेनापरनामा, वासवदत्तायाः पिता ।

रुमण्वान्—वत्सराजस्य मन्त्री सेनापतिश्च ।

ब्रह्मदत्तः—काम्पिल्याधिपः ।

आरुणिः—वत्सदेशराज्यापहारकः, अत एव उदयनस्य शत्रुः ।

गोपालकः❀, पालकः } महासेनस्य पुत्रौ, वासवदत्ताया भ्रातरौ ।

पुष्पकः, भद्रकः } आदेशकारिणौ सिद्धौ ।

**स्त्रियः**

महादेवी—आश्रमवासिनी पद्मावत्या माता ।

अवन्तिसुन्दरी—काचिद्यक्षी ।

अङ्गारवती—अवन्तिराजस्य प्रद्योतस्य प्रधानमहिषी, वासवदत्ताया माता ।

कुञ्जरिका—पद्मावत्याः परिचारिका ।

विरचिका—उदयनस्य प्रेमपात्रं काचिद्रक्षिता स्त्री ।

---

❀ केचिदभिनवाष्टीकाकाराः नाटकीयपात्रपरिचये 'गोपालकः' इत्यस्य पुरः 'प्रद्योतस्य द्वितीयः पुत्रः' इति लिखन्ति । 'पालकः' इत्यस्य पुरः 'प्रद्योतस्य पुत्रः' इत्येव लिखन्ति । अन्ये टीकाकारास्तु—'गोपालकः–पालकः'—इत्यस्य पुरः 'वासवदत्ताज्येष्ठभ्रातरौ' इति लिखन्ति । तत्र प्रकृतनाटककथासन्दर्भानुशीलनेन गोपालकस्य वासवदत्ताज्येष्ठभ्रातृत्वं प्रमाणीक्रियते । पाकस्य तु ज्येष्ठभ्रातृत्वं कनिष्ठभ्रातृत्वं वा किमपि न प्रमाणीकृतं भवति । यच्च 'गोपालकः' इत्यस्य पुरः 'प्रद्योतस्य द्वितीयपुत्रः' इति कैश्चिल्लिखितं तदपि केन प्रमाणेनेति न विद्मः । तैरेव च 'पालकः' इत्यस्य पुरः 'प्रद्योतस्य पुत्रः' इत्येव लिखितम्, स च कतमः पुत्र इति नोल्लिखितम्, तत्रापि किं कारणमित्यपि न विद्मः ।

महाकविभासप्रणीतम्

# स्वप्नवासवदत्तम्

## 'श्री'-'रमा'-टीकासहितम् ।

### प्रथमोऽङ्कः ।

( नान्द्यन्ते ततः प्रविशति सूत्रधारः )

सूत्रधारः—

उदयनवेन्दुसवर्णावासवदत्ताबलौ बलस्य त्वाम् ।
पद्मावतीर्णपूर्णौ वसन्तकम्रौ भुजौ पाताम् ॥ १ ॥

---

श्रीमातरं गुरुंश्चैव स्मारं स्मारं हृदन्तरे ।
स्वप्नवासवदत्तस्य व्याख्यैषा 'श्री' वितन्यते ॥ १ ॥
परीक्षागाधपाथोधिं तितीर्षन्तोऽनसूयकाः ।
छात्रा इमां श्रियं टीकां मन्यन्तां सुदृढां तरिम् ॥ २ ॥

अथ तत्रभवान् कविचक्रचूडामणिः कालिदासादिभिरपि श्लाघितगुणगणो भासः स्वप्नवासवदत्ताभिधानं नाटकं चिकीर्षुर्विघ्नविघाताय सूत्रधारेण कृतं मङ्गलाचरणं सूचयन् तस्य प्रवेशं निर्दिशन्नाह—नान्द्यन्ते ततः प्रविशति सूत्रधार इति ।

नाटकप्रयोगारम्भे देवताप्रीणनाय, सामाजिकमनःप्रह्लादनाय, प्रयोगारम्भसूचनाय च नटैर्विधीयमाना गीतवादित्रवादनादिक्रिया नान्दी, तस्या अन्ते—परिसमाप्तौ, सूत्रधारः—

'नाट्यस्य यदनुष्ठानं तत्सूत्रं स्यात्सबीजकम् ।
रङ्गदैवतपूजाकृत् सूत्रधार इहोदितः ॥'

इत्युक्तलक्षणो नाटकप्रधानसञ्चालको व्यवस्थापको मुख्यनटः प्रविशति = रङ्ग-भूमिमुपागच्छति । अत्र 'तत' इत्यनावश्यकमिव प्रतीयते ।

अथ रङ्गमञ्चं प्रविष्टः सूत्रधारः आशीर्वचनमुखेन नाट्यवस्तु प्रस्तुवन्नाह—

( अन्वयः ) उदयनवेन्दुसवर्णौ आसवदत्ताबलौ पद्मावतीर्णपूर्णौ वसन्तकम्रौ बलस्य भुजौ त्वां पाताम् ।

( टीका ) उदयनेति । उदये-उदयकाले नवो नूतनो य इन्दुश्चन्द्रस्तेन समानस्तुल्यो वर्णः कान्तिर्ययोस्तौ, उदयकालिकचन्द्रतुल्यवर्णावित्यर्थः । दत्तं आसवं मद्यं यस्यै सा आसवदत्ता । आहिताग्न्यादित्वात् दत्तशब्दस्य परनिपातः । तथाविधा अबला रेवती नाम्नी बलरामप्रिया याभ्यां तौ, यद्वा आसवेन मद्येन पीतेन सता दत्तम्, आसमन्तात् बलं याभ्यां तौ । बलरामस्य सुराप्रियत्वं प्रसिद्धमेव, तथा च स्वभावतः पराक्रमवतोरपि भुजयोर्मद्यपानजन्यो बलातिशयः सूच्यते युद्धावसरे उत्साहबलशौर्यादिसन्धुक्षणाय मद्यपानं केषुचित्क्षत्रियविशेषेषु रूढमेव ।

यत्तु 'आसवेन पीतेन मद्येन दत्तं अबलं बलाभावोऽक्षसता याभ्यां तौ' इति केषांचिद्व्याख्यानम्, तद्वर्णनीयस्य नैर्बल्यसूचकमित्यनौचित्यं गमयतीत्युपेक्ष्यम् ।

पद्मां-लक्ष्मीं शोभामित्यर्थः, अवतीर्णौ-प्राप्तौ, पूर्णौ = सामुद्रिकोक्तशुभलक्षणपूर्णौ आजानुलम्बिनावित्यर्थः । यद्वा पद्मायाः लक्ष्म्या अवतीर्णम्-अवतारः आविर्भावो वास इत्यर्थः, तेन पूर्णौ सर्वदा समृद्धिमन्तौ । ययोः करयोः लक्ष्मीः सर्वदा खेलतीत्यर्थः । वसन्ते—वसन्ततौ कम्रौ—मनोज्ञौ, वसन्तकालोचितशृङ्गारवेषपरिग्रहात् । यद्वा वसन्तकाले नूतनपल्लवललितविटपाविव कम्रौ—मनोज्ञाविति शाकपार्थिवादित्वात्समासः । यथा वसन्ते नवपल्लवसमृद्धो विटपौ छायाप्रदानादिनाऽध्वगान् रक्षतः, एवं भुजावप्याजानुलम्बिनौ रक्षणसमर्थावित्यर्थः । ईदृशौ, बलस्य = बलरामस्य, भुजौ = बाहू, त्वां = सामाजिकजनं, पाताम् = रक्षताम् ।

अत्र उदयनवेन्दुसवर्णाविति विशेषणेन निसर्गगौरस्य मधुपानवशादीषदारक्ततां वहतो बलरामस्य भुजयोः सौन्दर्यं सूचितम्, स्वभावतो बलवतो नाम्नाऽपि बलस्य हलिनो मधुपानवशात् बलवृद्धिं सूचयता आसवदत्ताबलाविति विशेषणेन रक्षणयोग्यत्वं ध्वन्यते । पद्मावतीर्णपूर्णावित्यनेन समृद्धिशालितया धनदानद्वारा परोपकरणक्षमत्वम्, आजानुलम्बितया शुभलक्षणशालित्वं च सूच्यते । वसन्तकम्रा-

* एवमार्यमिश्रान् विज्ञापयामि । †अये किन्नु खलु मयि विज्ञापन-व्यग्रे शब्द इव श्रूयते । अङ्ग ! पश्यामि ।

---

मित्यनेन वसन्तवत्सर्वजनकमनीयत्वं सूच्यते, एवं च सर्वाण्यपि विशेषणानि साभिप्रायाणि ।

अत्र श्लोके कविना मुद्रालङ्कारेण सभङ्गाभङ्गश्लेषाभ्यां प्रस्तुतनाटकीयप्रधान-पात्राणां उदयन-वासवदत्ता-पद्मावती-वसन्तकानां निर्देशं कृत्वा भाविकथासन्दर्भः सूचितः । उदयनस्य प्राथम्येन निर्देशात्प्रधाननायकत्वं सूच्यते । आर्या जातिः ॥१॥

* एवमिति । एवम्=इत्थं मनोगतेन प्रकारेण । आर्यमिश्रान्=आर्याः—कुलशीलदयादमसत्यादिसद्गुणसम्पन्नाः सभ्याः, ते च ते मिश्राः—पूज्याः तान् सामाजिकानित्यर्थः, विज्ञापयामि = स्वचिकीर्षितविषये निवेदयामि ।

† अये—इत्यव्ययमाश्चर्ये । मयि, विज्ञापनव्यग्रे विज्ञापनोद्युक्तचित्ते सति । किं नु खलु = कुतो नु खलु । शब्द इव श्रूयते = अव्यक्तः कलकल इव कर्णयोर्गोचरो भवति । अङ्ग = इति सम्बोधने पुनरर्थे वा । 'पुनरर्थेऽङ्ग' इत्यमरः, पश्यामि =तेन कुतः कीदृशः शब्दः कृत इति समीक्ष्यावधारयामीत्यर्थः । अत्र शब्दश्रवण-निमित्तं जानतोऽपि तदजानत इव सूत्रधारस्याभिनयः पात्रप्रवेशसूचनायेति ध्येयम् ।

---

"रमा" ( हिन्दी भाषा टीका )

वन्दौं श्रीपदपद्म को, नारायण बहुबार ।
स्वप्नादिवासदत्त की भाषा करहुँ विचार ॥

उदयकालिक नूतनचन्द्रमा के समान श्वेतरक्तवर्णवाली, अपनी प्रिया रेवती को मद्य देनेवाली, किंवा मद्यपान से जिनमें अधिक बल सञ्चार हुआ है, ऐसी शोभायुक्त, सामुद्रिकोक्त शुभलक्षणों से पूर्ण, आजानुलम्बी, किंवा जिनमें लक्ष्मी का निवास है ऐसी, वसन्तकालोचित शृङ्गारवेषधारण करने से अत्यन्त मनोहर, श्रीबलदेव जी की दोनों भुजाएँ आपकी रक्षा करें ॥१॥

इस प्रकार सज्जनों से निवेदन करता हूँ कि···अय !! जब कि मैं विज्ञापन करने में व्यग्र हो रहा हूँ, तभी यह शब्द कहाँ से सुनाई पड़ा । खैर, देखता हूँ ।

( नेपथ्ये* )

उस्सरह उस्सरह अय्या ! उस्सरह । [ †उत्सरतोत्सरतार्याः ! उत्सरत । ]

सूत्रधारः—भवतु, विज्ञातम् ‡ ।

भृत्यैर्मगधराजस्य स्निग्धैः कन्यानुगामिभिः ।
धृष्टमुत्सार्यते सर्वस्तपोवनगतो जनः ॥ २ ॥

---

* नेपथ्ये = नटानां स्वस्ववर्णिकापरिग्रहस्थाने । तत्र वक्ष्यमाणः शब्दः श्रूयत इत्यर्थः ।

† उस्सरह इति । उत्सरत = मार्गं परित्यज्य दूरे भवत । असकृदुक्तिसम्भ्रमसूचनाय ।

‡ इत्थं शब्दं श्रुत्वा तत्कारणविषये विमृशन् सूत्रधार आह भवत्विति । भवतु = अस्तु, शब्दागमनिमित्तं मया ज्ञातमित्यर्थः ।

( अन्वयः ) मगधराजस्य स्निग्धैः कन्यानुगामिभिः भृत्यैः तपोवनगतः सर्वः जनः धृष्टमुत्सार्यते ॥ २ ॥

( टीका ) यद्विज्ञातं तदेवाह—भृत्यैरिति । मगधराजस्य = मगधस्य गयासमीपवर्तिनो विशालस्य देशविशेषस्य राजा मगधराजः, समासान्तष्टच्, तस्य । स्निग्धैः = स्नेहपात्रैर्विश्वस्तैरित्यर्थः । अत एव, कन्यानुगामिभिः = कन्या—पद्मावती, तामनु गन्तुं शीलं येषामस्ति तैः, पद्मावतीपरिचारकैरित्यर्थः । भृत्यैः = सेवकैः । तपोवनगतः = मुनिवृन्दतपश्चरणस्थानात्मकाश्रममार्गस्थितः । सर्वः = राजकन्यागमनमार्गमध्यप्राप्तः स्त्रीवृद्धबालपुरुषादिः सर्वोऽपि जन इत्यर्थः । जनः = लोकः । धृष्टम् = क्रियाविशेषणमेतत् । अनुचितं निःशङ्कं यथा स्यात्तथा, गलहस्तिकादिप्रयोगेणेत्यर्थः । उत्सार्यते = दूरीक्रियते ।

---

( नेपथ्य में )

हटो हटो, सज्जनो हटो ।

सूत्रधार—अच्छा, मालूम हुआ ।

मगधराज की कन्या के अनुगामी प्रियभृत्यवर्गों द्वारा तपोवन में रहनेवाले सभी लोग धृष्टतापूर्वक हटाए जा रहे हैं ॥ २ ॥

( निष्क्रान्तः❀ )

स्थापना । (†)

---

( प्रविश्य‡ )

भटौ—उस्सरह उस्सरह अय्या ! उस्सरह । [ उत्सरतोत्सरतार्याः ! उत्सरत । ]

( § ततः प्रविशति परिव्राजकवेषो यौगन्धरायणः आवन्तिकावेषधारिणी वासवदत्ता च )

---

राजकन्यावैभवविलोकनाय सकौतुकं समवेतस्तापसजनो भृत्यगणै राजकन्याप्रवेशसौकर्याय योग्यायोग्यविचारमकृत्वैव गलहस्तिकादण्डपातादिभिरपसार्यत इति तात्पर्यम् । सोऽयमुत्सारणाशब्द एव मया पूर्वं श्रुत—इति सूत्रधारोक्तेरभिप्रायः ॥२॥

❀निष्क्रान्त इति। एवं पात्रप्रवेशं संसूच्य सूत्रधारो रङ्गमञ्चान्निर्गत इत्यर्थः।

† स्थापनेति । स्थापना = प्रस्तावना, आमुखं वा । अयं प्रयोगातिशयो नाम प्रस्तावनाभेदः । तथा चोक्तं दर्पणे—

यदि प्रयोग एकस्मिन् प्रयोगोऽन्यः प्रयुज्यते ।
तेन पात्रप्रवेशश्चेत्प्रयोगातिशयस्तदा ॥ इति ॥

एवं प्रस्तावनानन्तरं प्रथमाङ्कमारभते । अङ्कलक्षणमुक्तं दर्पणे—

‡ प्रविश्येति । 'नासूचितस्य प्रवेश' इति नाट्यनियमानुसारेण पूर्वं 'भृत्यैर्मगधराजस्य' इत्यादिना सामान्याकारेण सूचितयोरिदानीं 'भटौ' इत्यनेन विशेषतो निर्देशः । भटौ = योद्धारौ, रक्षकावित्यर्थः, पटीप्रक्षेपेण रङ्गस्थलं प्रविश्येत्यर्थः ।

§ तत इति । रक्षकद्वयकृतोत्सारणानन्तरं प्रविशति रङ्गस्थलमिति शेषः ।

---

( सूत्रधार जाता है )

( प्रस्तावना समाप्त )

---

( दो सिपाही आते हैं )

दो सिपाही—हटो हटो, सज्जनो ! हटो ।

यौगन्धरायणः—( कर्णं दत्वा ) कथमिहाप्युत्सार्यते ! कुतः,
धीरस्याश्रमसंश्रितस्य वसतस्तुष्टस्य वन्यैः फलै-
र्मानार्हस्य जनस्य वल्कलवतस्त्रासः समुत्पाद्यते ।
उत्सिक्तो विनयादपेतपुरुषो भाग्यैश्चलैर्विस्मितः
कोऽयं भो निभृतं तपोवनमिदं ग्रामीकरोत्याज्ञया ॥ ३ ॥

परिव्राजकवेषः परित्यज्य सर्वं व्रजतीति परिव्राजको दण्डी तस्येव वेषो यस्य सः कार्यवशात्परिधृतसंन्यासिरूप इत्यर्थः । यौगन्धरायणो नायकस्य वत्सराजस्य कुलक्रमागतो मन्त्री, अवन्तिजनपदसम्भवा अङ्गना आवन्तिकास्तासामिव वेषं नेपथ्यं धारयतीति तथाविधा वासवदत्ता—अवन्तिनाथस्य दुहिता वत्सराजोदयनस्य महिषीत्यर्थः । प्रविशति = उभावपि प्रविशत इत्यर्थः ।

कर्णं दत्वेति । पूर्वोक्ताया उत्सारणायाः श्रवणं रूपयित्वा । कथमिति । इहाऽपि उत्सारणानुचितेऽपि स्थले उत्सार्यते अपसारणा विधीयते । अत्राऽपि नाऽनौचित्यं व्यज्यते । तदेव स्फुटयति कुत इत्यादिना—

( अन्वयः ) धीरस्य आश्रमसंश्रितस्य वन्यैः फलैस्तुष्टस्य वसतो वल्कलवतो मानार्हस्य जनस्य त्रासः कुतः समुत्पाद्यते । किञ्च भोः ! उत्सिक्तो विनयादपेत-पुरुषो चलैर्भाग्यैर्विस्मितः कोऽयं निभृतमिदं तपोवनमाज्ञया ग्रामीकरोति ॥ ३ ॥

( टीका ) धीरस्येति—धीरस्य = दुस्त्यजविविधसांसारिकभोगवासनापरित्या-

( संन्यासी के वेष धारण किये हुए यौगन्धरायण और अवन्ति देश का सा पहिनावा पहिने वासवदत्ता का प्रवेश )

यौगन्धरायण—( कान देकर ) क्या यहाँ भी लोग हटाये जा रहे हैं ?

धैर्यवान्, आश्रम में रहनेवाले, वन के फलों से ही सन्तुष्ट, वल्कल वस्त्र-धारी, प्रतिष्ठित जनों को त्रास पहुँचाना उचित नहीं है । अरे ! ऐसा कौन मदमत्त दुर्जन है, जो अपने चञ्चल अधिकार के मद में भरा हुआ शान्त तपोवन में गाँव की तरह व्यवहार करता है । अर्थात् उद्धत मनुष्यों के रहनेवाले गाँवों में ही ऐसा व्यवहार होना उचित है, न कि ऐसे शान्त तपोवन में ॥३॥

वासवदत्ता—अय्य ! को एसो उस्सारेदि । [ *आर्य ! कः एष उत्सारयति । ]

गात्मकधैर्यवतः । आश्रमसंश्रितस्य = आश्रमं—तरुमूले पर्णादिनिर्मितं कुटीरम् संश्रितस्य = आश्रितवतः, वन्यैः = आरण्यकैः फलैः, तुष्टस्य = मुदितस्य, वसतः = कृतनिवासस्य । वल्कलवतः = गुह्याङ्गाच्छादनावश्यकतया तरुत्वग्भिः सम्पादितवस्त्र-कार्यस्य, स्थानाशनवसनभोगविषयेषु सर्वथा वितृष्णस्येत्यर्थः । अत एव मानार्हस्य = सत्कारयोग्यस्य । जनस्य = मुनिवृत्तेर्लोकस्य । त्रासः = अपसारणोद्भवं भयम्, कुतः = कस्माद्धेतोः, समुत्पाद्यते = भृत्यद्वारा प्रवर्त्यते । भृत्यानामसौ व्यवहारः सर्वथाऽनुचित इत्यर्थः ।

प्रभोराज्ञया तथा व्यवहरतां भृत्यानां न दोष इत्यनुसन्धाय, अकाण्डे तथाविधं निर्देशमनुतिष्ठन्तं स्वामिनमप्युपालभमान आह—उत्सिक्त इति । किञ्च, भोः ! = सर्वसाधारणसम्बोधनमिदम् । उत्सिक्तः = उद्धतः । उल्लङ्घितमर्याद इत्यर्थः । विनयादपेतपुरुषः = विनयाद्विनयकार्यात्कर्तव्याकर्तव्यशिक्षाया इत्यर्थः । अपेताः भ्रष्टाः पुरुषाः सेवकाः यस्य सः, अविनीतसेवक इत्यर्थः । वस्तुतस्तु "विनयाद्यपेत-पुरुषः" इति पाठः समीचीनः प्रतिभाति । चलैः = विनश्वरैः । भाग्यैः = भाग्य-लभ्यैः, सम्पदादिभिः । विस्मितः = अहङ्कृतः । कोऽयम् = क एषः । निभृतम् = शान्तम् । इदं तपोवनम् = आश्रमस्थानम्, आज्ञया = अविवेकिजनोचितयोत्सार-णाकरणाऽऽज्ञया । ग्रामीकरोति = उद्धतजनबहुलं ग्राममिवाशान्तं जनयति ।

उद्धतजनाऽऽवासेषु ग्रामेष्वेव ईदृशो व्यवहारो योग्यः, न तु शान्तेष्वाश्रम-पदेष्विति भावः । तस्मादेतद्धाष्टर्यमत्यन्तमनुचितमित्याशयः । धीरस्येत्यादिवि-शेषणानि त्रासोत्पादनानौचित्ये साभिप्रायाणीति—परिकराऽलङ्कारः । "शार्दूल-विक्रीडितं" वृत्तम् ॥ ३ ॥

* वासवदत्ता यौगन्धरायणं वदति—अय्य इति । आर्य ! अत्रोत्सारणानु-नुचितेऽपि स्थले कः पुरुषाधम एवमुत्सारणां करोतीत्यर्थः ।

वासवदत्ता—आर्य ! इस तरह लोगों को कौन हटा रहा है ?

**यौगन्धरायणः**—भवति ! यो धर्मादात्मानमुत्सारयति * ।

**वासवदत्ता**—अय्य ! ण हि एव्वं वत्तुकामा, अहं वि णाम उस्सारइदव्वा होमि त्ति [ † आर्य ! न ह्येवं वक्तुकामा, अहमपि नामोत्सारयितव्या भवामीति ]

**यौगन्धरायणः**—भवति ! ‡ एवमनिर्ज्ञातानि दैवतान्यवधूयन्ते ।

**वासवदत्ता**—अय्य ! तह परिस्समो परिखेदं ण उप्पादेदि, जह

---

* यौगन्धरायण आह—भवतीति । भवति != पूज्ये ! । यः = पुरुषः । धर्मात् = अभ्युदयसाधनात् । आत्मानम् = स्वम् । उत्सारयति = पृथक्करोति, पातयतीत्यर्थः । क उत्सारयतीति पूर्वोक्तवासवदत्ताप्रश्नस्योत्तरमिदम् । य एवमुत्सारयति स पापात्मा परपीडक इति भावः ।

† पुनर्वासवदत्ता वदति—अय्य इति । आर्य्य != पूज्य ! । नह्येवं वक्तुकामा, नैष ममाभिप्रायः । किमसौ जनसाधारणवत् मामपि समुत्सारयितुमिच्छति, याऽहं स्वयात्रासु स्वसौकर्य्याय मम रक्षितृपुरुषैरनुष्ठितामितरजनोत्सारणामपश्यम्' सा एवाऽहमद्य केनापि कस्यापि भृत्यजनेन साधारणजनवदुत्सारयितव्या भवामीत्यात्मदशाविपर्ययमेवाऽनुशोचामीत्याशयः ।

‡ यौगन्धरायणो वदति—भवतीति । भवति ! वासवदत्ते ! एवम् = भवतीव । अनिर्ज्ञातानि = अविदितस्वरूपाणि । दैवतानि = देवतुल्याः पूजार्हाः मनुष्याः ।

---

**यौगन्धरायण**—आर्ये ! जो अपने को धर्म से हटा रहा है । अर्थात् जो ऐसा कर रहा है, वह पापी है ।

**वासवदत्ता**—आर्य ! यह मेरा आशय नहीं है । मैं यह सोच कर कहती हूँ कि, क्या हम लोग भी हटाये जायँगे ?

**यौगन्धरायण**—आर्ये ! इस प्रकार अपरिचित देवता लोग भी तिरस्कृत किये जाते हैं ।

**वासवदत्ता**—आर्य, थकावट से जितनी पीड़ा नहीं होती, उतनी इस अपमान से होती है ।

अत्थं परिभवो। [ * आर्य! तथा परिश्रमः परिखेदं नोत्पादयति यथाऽयं परिभवः ]

**यौगन्धरायणः**—भुक्तोज्झित एष विषयोऽत्र भवत्या†। नात्र चिन्ता कार्या। कुतः,

पूर्वं त्वयाऽप्यभिमतं गतमेवमासी-
च्छ्लाघ्यं गमिष्यसि पुनर्विजयेन भर्तुः।

---

अवधूयन्ते = तिरस्क्रियन्ते। भवत्याः स्वरूपाज्ञानजनितोऽयं परिभवः कार्यवशादिदानीं न गणयितव्य इत्यर्थः।

* वासवदत्ता वदति—अय्य इति। परिश्रमः = लावाणकाऽऽख्यग्रामात् एतावद्दूरपर्यन्तं पादचारेणाऽऽगमनजन्या ग्लानिः। तथा परिखेदं = तादृशीं व्यथाम्। नोत्पादयति = न जनयति। यथा = यादृशः। अयं परिभवः = उत्सारणोत्पन्नोऽनादरः।

दूरं पादचारेणाऽऽगमनजन्यग्लान्या नाऽहं पीडिताऽस्मि किन्तूत्सारणाजनितोऽनादर एव मां भृशं पीडयतीति भावः।

† यौगन्धरायण आह—भुक्तोज्झित इति। एष विषयः = ईदृशाचारः। प्रतिष्ठापूर्वकगमनाऽऽदिरूपः। अत्र भवत्या = पूज्यया त्वया भुक्तोज्झितः = पूर्वं भुक्तोऽनुभूत इदानीं कार्यवशादुज्झितः = स्वयं परित्यक्तः। अत्र भवत्या खेदः कर्तुमनुचित इत्यर्थः। कुतः = यतः।

( अन्वयः ) पूर्वं त्वयाऽपि एवं श्लाघ्यं अभिमतं गतमासीत्, भर्तुर्विजयेन पुनर्गमिष्यसि, जगतो भाग्यपंक्तिश्चक्रारपंक्तिरिव कालक्रमेण परिवर्तमाना गच्छति॥ ४॥

( टीका ) पूर्वमिति—पूर्वम् = स्वराज्यस्थितौ, कौशाम्बीनगरनिवासकाले।

---

यौगन्धरायण—तुमने तो इसका पहले अनुभव किया है और अब कार्यवश इसे छोड़ दिया है। इसमें चिन्ता न करनी चाहिये। क्योंकि—

पहिले तुम भी सौभाग्य प्राप्त कर चुकी हो और फिर भी अपने स्वामी के प्रताप से उसी उत्तम अवस्था को प्राप्त करोगी। इस संसार में समय के फेर से

कालक्रमेण जगतः परिवर्तमाना
चक्रारपङ्क्तिरिव गच्छति भाग्यपङ्क्तिः ॥४॥

भटौ—उस्सरह अय्या ! उस्सरह । [ उत्सरतार्याः ! उत्सरत । ]

त्वयाऽपि = भवत्याऽपि, अपि शब्दान्न केवलं त्वया किन्त्वनेन जनेनेत्यर्थः। एवम् = ईदृशीम् । श्लाघ्यम् = गौरवास्पदम् । अभिमतम् = अभीष्टम् । गतम् = यातम्, आसीत् । इत्थंविधं गमनसौभाग्यं त्वयाऽपि पूर्वमनुभूतमासीदित्यर्थः । भर्तुः = उदयनस्य, विजयेन = शत्रुपराजयपूर्वकस्वराज्यलाभफलकेन जयेन हेतुना । पुनः = भूयोऽपि परिजनविभवोपेता त्वं गमिष्यसीत्यर्थः ।

अवश्यञ्चायमर्थो भावीत्यर्थान्तरन्यासमुखेनाऽऽह—कालक्रमेणेति । जगतः = लोकस्य, भाग्यपंक्तिः = शुभाशुभाऽदृष्टजन्यसुखदुःखात्मकभाग्यधारा । चक्रारपंक्तिरिव = चक्रस्य रथाङ्गस्याराणां नाभिनेम्यन्तरालवर्तितियक्प्रोथितकाष्ठखण्डानां पंक्तिरिव = श्रेणिरिव । कालक्रमेण = प्रतिकूलानुकूलदैवपरिपाकाऽनुसारेण । परिवर्तमाना = परिणमन्ती । एकां दशामतीत्य दशान्तरमनुभवन्तीत्यर्थः । गच्छति = चलति । अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः । "वसन्ततिलका" वृत्तम् । उत्तरार्द्धसमानच्छायो भावो यथा कालिदासस्य मेघदूते—

कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा ।
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥ इति ।

सुखं वा दुखं वा किमपि स्थायितया नावतिष्ठते । सुखस्यानन्तरं दुःखम् । दुःखस्यानन्तरं सुखम् । सुख-दुःखे हि लोके चक्रवत्परिवर्तेते । चक्रस्याराः कदाचिदुच्चैर्भवन्ति, कदाचिन्नीचैर्भवन्ति । तथैव लोके कदाचित्सुखं कदाचिद्दुःखं वा भवति । तवाऽयं दशाविपर्यासोऽपि न स्थायी । सति दैवानुकूल्ये भूयोऽप्यचिरेण सर्वं समीचीनं सम्पत्स्यतेऽतश्चिन्तां न कुर्विति भावः ॥ ४ ॥

भटौ वदतः—उस्सरह इति ।

बदलती हुई भाग्यदशा पहिये के आरों की भाँति नीचे ऊपर आती जाती रहती है ॥ ४ ॥

दो सिपाही—हटो, हटो, लोगो, हटो ।

( ❀ ततः प्रविशति काञ्चुकीयः )

काञ्चुकीयः—† संभषक ! न खलु न खलूत्सारणा कार्या । पश्य,

परिहरतु भवान् नृपापवादं, न परुषमाश्रमवासिषु प्रयोज्यम् ।
नगरपरिभवान् विमोक्तुमेते, वनमभिगम्य मनस्विनो वसन्ति ॥५॥

❀ तत इति । काञ्चुकीय इति । काञ्चुकीयः = कञ्चुकी । "वेणुकादिभ्यश्छण्" इति वार्तिकेन छण्प्रत्ययः । कञ्चुकिलक्षणं यथा—

"अन्तःपुरचरो वृद्धो विप्रो गुणगणाऽन्वितः ।
सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते ॥"

† संभषक ! इत्युत्सारणाकारिणोरन्यतरस्य भटस्य नाम । न खलु न खल्विति संभ्रमाद्वीप्सा ।

(अन्वयः) भवान्, नृपापवादं, परिहरतु, आश्रमवासिषु, परुषं, न, प्रयोज्यम्, एते, मनस्विनः नगरपरिभवान्, विमोक्तुं, वनं, अभिगम्य, वसन्ति ॥ ५ ॥

( टीका ) भवान् = संभषकः । नृपापवादम् = नृपस्य राज्ञोऽपवादं, भवत्कृतोत्सारणाऽपराधजन्यं जनैर्वृथैव राज्ञि आरोप्यमाणं कलङ्कम् । परिहरतु = परिवर्जयतु, सेवककृतो दोषः स्वामिनः कलङ्कमुत्पादयतीति भवतेहास्थाने समुत्सारणा न क्रियतामित्यर्थः । आश्रमवासिषु = तपोवनवासिजनेषु । परुषम् = उत्सरतोत्सरतेत्यादिककर्कशवचनम् । न प्रयोज्यम् = नैव प्रयोक्तुमर्हम् । कुत इत्याह-नगरेति । एते मनस्विनः = रागद्वेषशून्याः स्वतन्त्रचेतसो मुनयः । नगरपरिभवान् = नगरेषु, विविधजनबहुलेषु पत्तनेषु, सुलभान् परिभवानपमानान् । विमोक्तुं = परिहर्तुम् । वनम् = शान्तमाश्रमपदम्, अभिगम्य = आगत्य । वसन्ति = वासं कुर्वन्ति । "पुष्पिताग्रा" वृत्तम् । काव्यलिङ्गमलङ्कारः ।

( तदनन्तर कञ्चुकी प्रवेश करता है )

कञ्चुकी—मत हटाओ, मत हटाओ, देखो—

ऐसा करने से राजा के ऊपर कलङ्क लगेगा । आश्रम में रहने वाले लोगों से कड़वे वचन न बोलने चाहिये । क्योंकि—ये तपस्वी मुनिजन नगर के अपमानों से बचने के लिये ही शान्त तपोवन में आकर निवास करते हैं ॥५॥

**उभौ**—अय्य ! तह । [ ❀ आर्य ! तथा । ]

( निष्क्रान्तौ )

**यौगन्धरायणः**—हन्त ! सविज्ञानमस्य दर्शनम् † । वत्से ! उपसर्पावस्तावदेनम् ।

**वासवदत्ता**—अय्य ! तह । [ आर्य ! तथा ‡ ]

**यौगन्धरायणः**—( उपसृत्य ) भोः ! किं कृतेयमुत्सारणा ? §

---

एते रागद्वेषशून्याः स्वतन्त्रचेतसो मुनयो नगरेषु पदे पदे सुलभानपमानान् परिहर्तुमेव शान्तं तपोवनमागत्य निवसन्ति, इहाऽपि चेद्भवादृशैरकाण्डे समुत्सारणादिभिस्ते परिभूयेरन् तदा भवत्कृताऽपराधान् लोका राज्ञि समारोप्य तं कलङ्कयेयुः अतस्तपोवनेषु भवता समुत्सारणा न कर्तव्येति भावः ॥ ५ ॥

❀ उभाविति । भवदाज्ञाऽनुसारं करिष्यावः, इत्यर्थः ।

† यौगन्धरायणो वदति—हन्त इति । हन्तेति हर्षे । वासवदत्ताया अवमानजनकर्मानिष्टं दिष्ट्या निवृत्तमित्यर्थः । सविज्ञानम् = कर्तव्याकर्तव्यविवेकज्ञानसहितमित्यर्थः । अस्य = काञ्चुकीयस्य । दर्शनम् = दृश्यते ज्ञायते तत्त्वमनयेति दर्शनम् = बुद्धिः "दर्शनं नयनस्वप्नबुद्धिधर्मोपलब्धिषु" इति मेदिनी । विचारशक्तिरिति यावत्, अत एव वत्से ! = वासवदत्ते !, तावत् = अधुना । एनम् = काञ्चुकीयम् । उपसर्पावः = उपगच्छावः ।

‡ वासवदत्ता वदति—अय्य इति ।

§ भो ! इति । किं कृता = किमर्थं कृता ।

---

दोनों—बहुत अच्छा ( चले गये )

यौगन्धरायण—अहा, कैसा अच्छा इसका विचार है । वत्से ! चलो इसके पास चलें ।

वासवदत्ता—आर्य ! चलिये ।

यौगन्धरायण—( समीप में जाकर ) क्यों जी, लोग क्यों हटाये जा रहे हैं ?

काञ्चुकीयः—भोस्तपस्विन् !

यौगन्धरायणः—( आत्मगतम् ) ❀ तपस्विन्निति गुणवान् खल्वयमालापः । अपरिचयात्तु न श्लिष्यते मे मनसि ।

काञ्चुकीयः—भोः ! श्रूयताम् । एषा खलु गुरुभिरभिहितनामधेयस्याऽस्माकं महाराजदर्शकस्य भगिनी पद्मावती नाम । सैषा नो महाराजमातरं महादेवीमाश्रमस्थामभिगम्यानुज्ञाता तत्रभवत्या राजगृहमेव

---

काञ्चुकीयो वदति—भो ! इति । मत्कृतोत्सारणयाऽयं कुपितो न वेति विज्ञातुमियमुक्तिः ।

❀ आत्मगतमिति । इतरजनश्रवणवारणायाऽऽत्मन्येव यच्चिन्त्यते तदात्मगतमित्यर्थः । तथा चोक्तम्—

"सर्वश्राव्यं प्रकाशं स्यादश्राव्यं स्वगतं मतम्" इति ।

गुणवान् = गुणयुक्तः, सम्मानसूचक इत्यर्थः । अयमालापः = एष तपस्विन्निति सम्बोधनात्मकशब्दप्रयोगः । अपरिचयात् = अद्य यावदात्मनस्तपस्विन्निति सम्बोधनविषयत्वाभावात्, तथाविधपदश्रवणानभ्यासादित्यर्थः । न श्लिष्यते = न संलगति, नैतत्पदं मे मनसि सन्तोषं जनयतीत्यर्थः ।

उत्सारणाऽपराधेन यौगन्धरायणस्य वदने कमपि विकारमनभिलक्ष्य विश्वस्तः काञ्चुकीयो वाक्यशेषमाह—भो ! इति । एषा = इयम् । गुरुभिः = पित्रादिभिः कुलमहद्भिः । "गुरुमहत्याङ्गिरसे पित्रादौ" इति हैमः । अभिहितनामधेयस्य=अभिहितमुच्चारितं नामधेयं दर्शकमिति नाम यस्य तस्य । अस्माकम् = मगधवासिनाम् । महाराजदर्शकस्य=दर्शकाऽऽख्यस्य मगधेश्वरस्य । पद्मावती नाम=पद्मावतीति नाम्ना

---

कञ्चुकी—हे तपस्वी !

यौगन्धरायण—( आप ही आप ) तपस्वी यह सम्मानसूचक शब्द है, परन्तु इसका परिचय न होने के कारण मुझे अच्छा नहीं लगता ।

कञ्चुकी—महाराज, सुनिये, बड़ों से कथित दर्शक नामवाले हमारे महाराज की बहन पद्मावती है । वही तपोवन में तपस्या के लिये गये हुये हमारे

यास्यति । तदस्मिन्नाश्रमपदे वासोऽभिप्रेतोऽस्याः । तद्भवन्तः,—

तीर्थोदकानि समिधः कुसुमानि दर्भान्
स्वैरं वनादुपनयन्तु तपोधनानि ।
धर्मप्रिया नृपसुता न हि धर्मपीडा-
मिच्छेत् तपस्विषु कुलव्रतमेतदस्याः ॥६॥

---

प्रसिद्धा । महादेवीम् = महाराजदर्शकमातरम् , आश्रमस्थाम् = वार्द्धके वानप्रस्था-श्रमं स्वीकृत्य तपस्यार्थं तपोवनमुपगताम् , अभिगम्य = दर्शनं कृत्वा, तत्र भवत्या = पूज्यया, मात्रा, अभ्यनुज्ञाता = पुनर्गृहं गन्तुमनुमता । राजगृहम् = तदाख्यां तात्कालिकीं मगधदेशराजधानीम् । तत्तस्मात् , अस्याः राजकुमार्याः । अभि-प्रेतः—अभिमतः ।

मगधेश्वरस्य महाराजदर्शकस्य भगिनी इयं पद्मावती तपस्यार्थं तपोवनमधिवसन्त्याः स्वमातुः महादेव्याः दर्शनं कृत्वा तया अनुज्ञाता सती राजगृहं जिगमिषति । मध्ये मार्गमापतितेऽस्मिन्नाश्रमे विश्रान्त्यर्थमद्य तया निवासोऽनुमत इति भावः ।

तीर्थोदकानीति ।

( अन्वयः ) भवन्तः, तपोधनानि, तीर्थोदकानि, समिधः, कुसुमानि, दर्भान्, वनात् , स्वैरम् , उपनयन्तु, हि, नृपसुता, धर्मप्रिया, ( अस्ति ) तपस्विषु, धर्म-पीडाम् , न, इच्छेत् , एतत् , अस्याः, कुलव्रतम् ॥ ६ ॥

( टीका ) भवन्तः = आश्रमस्थाः, भवन्त इति गद्यभागस्थं ग्राह्यम् । तपो-धनानि = तपश्चर्यासाधनानि, तीर्थोदकानि = पवित्रतीर्थगतजलानि तर्पणाद्यर्थानि, समिधः = पालाशादिहोमकाष्ठानि, कुसुमानि = देवपूजाऽर्थानि पुष्पाणि, दर्भान्

---

महाराज की माता महादेवी से मिल कर, फिर राजधानी को लौट जायँगी । आज यहीं उनका पड़ाव है ।

चाहे जो कुछ हो, आप लोग तपस्वी हैं, तीर्थ के जल, समिध्, पुष्प, कुश आदि जंगल से बे-रोक-टोक ले जायँ । राजा की कन्या बड़ी धर्मात्मा है, वह तपस्वियों के धर्म में बाधा पहुँचाना नहीं चाहती । यह नियम उनकी वंश-परम्परा से चला आता है ॥ ६ ॥

यौगन्धरायणः—( स्वगतम् ) एवम् । *एषा सा मगधराजपुत्री पद्मावती नाम, या पुष्पकभद्रादिभिरादेशकैरादिष्टा स्वामिनो देवी भविष्यतीति । ततः,—

प्रद्वेषो बहुमानो वा सङ्कल्पादुपजायते ।
भर्तृदाराभिलाषित्वादस्यां मे महती स्वता ॥७॥

=कुशान्, वनाद्=अरण्यात्, स्वैरम्=स्वच्छन्दम्, उपनयन्तु=आनयन्तु, प्रार्थनायां "लोट्" । हि=यतः, नृपसुता=राजकन्या पद्मावती, धर्मप्रिया=धर्मः प्रियो यस्याः सा तथोक्ता धर्मानुरागिणीत्यर्थः, अस्ति, अत एवैषा, तपस्विषु=तापसजनेषु, धर्मपीडाम्=धर्मक्रियोपरोधम्, न इच्छेत्=नाऽभिलषेत्, वर्तमाने "लिङ्" । नाऽभिलषतीत्यर्थः । एतत्=धर्मक्रियाऽनुपरोधनम्, अस्याः=राजकन्यायाः, पद्मावत्याः, कुलव्रतम्=परम्पराऽऽगतवंशधर्मः, अस्ति । काव्यलिङ्गमलङ्कारः । "वसन्ततिलका" वृत्तम् ।

कञ्चुकी वासवदत्ता-यौगन्धरायणौ विशेषतः समुद्दिश्य आश्रमवासिनश्चेतरान् सम्बोध्य प्राह—भवन्तः ! निजतपस्यासाधनभूतान्—तीर्थजलानि, पालाशादिकाष्ठसमिधः, कुशान्, पुष्पाणि चेत्यादिपदार्थान् अस्मात्तपोवनात् स्वच्छन्दं गृह्णन्तु । यत इयमस्माकं राजकन्या स्वयं धर्मानुरागिणी वर्तते । तपस्विनां धर्मक्रियोपरोधं न मनागपि सहते । मुनिजनपरिपालनं हि अस्याः कुलक्रमागतं आचारोऽस्तीति भावः ॥ ६ ॥

*यौगन्धरायणः स्वगतं वदति—एवमिति । अनेन यथार्थमेवोक्तमित्यर्थः । पुष्पकभद्रादिभिः=तन्नामकैः । आदेशकैः=आदेशेन जीवन्ति ते, आदेशकाः, भविष्यद्वक्तारः सिद्धा आचार्यास्तैरित्यर्थः । आदिष्टा=पद्मावती वत्सराजस्योदयनस्य महिषी भविष्यतीति कथिता । ततः=सैवेयं पद्मावतीति परिचयाद्धेतोः । वक्ष्यमाणश्लोकाऽन्वयीदम् ।

यौगन्धरायण—( आप ही आप ) यह वही मगधराज की कन्या है, जो पुष्पकभद्र आदि आचार्यों के वचनानुसार हमारे स्वामी वत्सराज की स्त्री होने वाली है ।

वासवदत्ता—( स्वगतम् ) राअदारिअत्ति सुणिअ भइणिआसिणेहो वि मे एत्थ सम्पज्जइ । [राजदारिकेति श्रुत्वा ❀ भगिनीकास्नेहोऽपि मेऽत्र सम्पद्यते ]

प्रद्वेष इति ।

( अन्वयः ) प्रद्वेषः बहुमानः, वा, संकल्पात्, उपजायते, मे, भर्तृदाराभिलाषित्वात्, अस्यां, महती, स्वता, अस्ति ॥ ७ ॥

( टीका ) प्रद्वेषः = अनभिमतत्त्वात्मको विद्वेषः । बहुमानो वा = अत्यादरो वा । संकल्पात् = मनसो व्यापारात् । उपजायते = उत्पद्यते । मे = मम भर्तृदाराभिलाषित्वात् = भर्तुरुदयनस्य दाराः पत्नीति भर्तृदाराः, भर्तृदारत्वेनाभिलाषो भर्तृदाराभिलाषः सोऽस्यास्तीति, तस्य भावस्तत्त्वं तस्मात् । दैवज्ञकथनानुसारं पद्मावती मद्भर्तुरुदयनस्य महिषी भूयात्, इति प्रबलमनःसंकल्पवशादित्यर्थः । अस्याम् = पद्मावत्याम् । महती = सातिशया । स्वता = आत्मीयबुद्धिः । अस्ति । काव्यलिङ्गमलङ्कारः । "अनुष्टुब्" वृत्तम् ।

यौगन्धरायणः स्वगतं विमृशति—। कस्याऽपि विषये विद्वेषः सम्मानो वा तत्तदिष्टानिष्टमनोव्यापारादेव सम्पद्यते । पूर्वं अपरिचयदशायामेनां पद्मावतीमनुचितोत्सारणाप्रवर्तिकामवलोक्य तत्कालोचितान्मनोव्यापारादस्यां मम प्रद्वेष इवोत्पन्न आसीत् । इदानीं काञ्चुकीयोक्त्यैतां नामतः कुलतश्चावगम्य सिद्धादेशाऽनुसारेणेयं मे भर्तुर्महिषी भवत्वितीच्छयास्यामात्मीयबुद्धिर्मे जायते । तस्मान्मनःसङ्कल्पभेद एव प्रद्वेषबहुमानयोः कारणमिति भावः । स्वार्थपरोऽयं संसार इति तत्त्वम् ॥७॥

❀ वासवदत्ता स्वगतं वदति—राअदारिअत्ति—इति । भगिनीकास्नेहः प्रियभगिन्यामिव प्रेमेत्यर्थः । उभयोरप्यावयोः राजनन्दिनीत्वेन पद्मावत्यां मम भगिनीस्नेह इति भावः । अपिशब्देन स्नेहवत् सपत्नीसुलभः प्रद्वेषोऽपीति ध्वन्यते ।

द्वेष अथवा आदर मन की भावना से होते हैं । यह मेरे स्वामी की स्त्री हो, ऐसा मैं चाहता हूँ, इसी कारण इससे मेरा अपनापन बहुत हो गया ॥७॥

वासवदत्ता—( आप ही आप ) 'राजा की कन्या' यह सुन कर मुझे इससे भगिनी का स्नेह भी होता है ।

( ततः प्रविशति पद्मावती सपरिवारा चेटी * च )

चेटी—एदु एदु भट्टिदारिआ, इदं अस्समपदं पविसदु।

[† एत्वेतु भर्तृदारिका, इदमाश्रमपदं प्रविशतु। ]

( ततः प्रविशत्युपविष्टा ‡ तापसी )

तापसी—साअदं राअदारिआए [ स्वागतं राजदारिकायाः ]

वासवदत्ता—( स्वगतम् ) इअं सा राअदारिआ। अभिअणाणुरूवं खु से रूवं। [ § इयं सा राजदारिका। अभिजनानुरूपं खल्वस्या रूपम्। ]

---

* पद्मावत्या आश्रमप्रवेशं दर्शयति—ततः प्रविशतीति। सपरिवारा = परिवारेण सखीजनेन सहिता। चेटी = सततसन्निहिता विश्वस्ता दासी। अत एव तस्याः पृथगुल्लेखः।

† मार्गं प्रदर्शयन्ती चेटी वदति—एदु-इति। वीप्सयाऽऽदरः सूच्यते।

‡ उपविष्टायास्तापस्याः प्रवेशमाह—तत इति। राजकन्याऽऽगमनेऽपि तापस्याः वृद्धत्वेन पूज्यत्वेन चानभ्युत्थानं न दोषाय। तापसी राजकन्यां स्वागतेनाभिनन्दति—साअदं-इति।

§ वासवदत्ताऽपि तां दृष्ट्वा स्वगतमाह—इअं इति। इयं सा = काञ्चुकीयेन सूचिताऽऽगमना। राजदारिका = मगधराजकन्या। अभिजनानुरूपम् = अभिजनस्य प्रशस्तकुलस्यानुरूपमनुगुणम्। अस्याः राजकुमार्याः कुलं यादृक् प्रशंसास्पदं वर्तते, रूपमपि तथैव प्रशंसायोग्यमस्तीति भावः।

---

( तदनन्तर सपरिवार दासी के साथ पद्मावती प्रवेश करती है )

चेटी—राजकुमारी, आइये ! यह आश्रम है। इसमें चलें।

( बैठी हुई तपस्विनी दिखाई देती है )

तापसी—राजकुमारी का स्वागत हो।

वासवदत्ता—( आपही आप ) यह वही राजकुमारी है। निःसन्देह इस का स्वरूप अच्छे कुल के अनुरूप है।

पद्मावती—अय्ये ! वंदामि । [ आर्ये ! ※ वन्दे । ]

तापसी—चिरं जीव । पविस जादे ! पविस । तपोवणाणि णाम अदिहिजणस्स सअगेहं । [ चिरं जीव । प्रविश जाते ! प्रविश । तपोवनानि नामातिथिजनस्य स्वगेहम् † ]

पद्मावती—भोदु भोदु । अय्ये ! विस्सत्थम्हि । इमिणा बहुमाणवअणेण अणुग्गहिदह्मि [ भवतु भवतु । आर्ये ! विश्वस्ताऽस्मि ‡ । अनेन बहुमानवचनेनानुगृहीताऽस्मि ] ।

वासवदत्ता—( स्वगतम् ) ण हि रूवं एव्व, वाआ वि खु से महुरा । [ § नहि रूपमेव, वागपि खल्वस्या मधुरा ]

---

※ तापसीं वन्दमाना पद्मावती आह—अय्ये—इति । आर्य्ये ! वन्दे = नमस्करोमीत्यर्थः ।

† तापसी वदति—चिरं जीव-इति । जाते ! = पुत्रि ! । अतिथिजनस्य = अभ्यागतलोकस्य । तपोवनमिदं स्वगृहमिव मत्वा निःशङ्कमत्र वर्तेथा इत्यर्थः ।

‡ पद्मावती वदति—भोदु-इति । भवतु भवतु = स्वागतोपचारातिशयोऽनावश्यक इत्यर्थः । विश्वस्ता = सञ्जातविश्वासा, निःशङ्केति यावत् । बहुमानवचनेन = विशेषादरसूचकवाक्यप्रयोगेण ।

§ पद्मावत्यास्तथाविधं विनयातिशयं विलोक्य प्रसन्ना वासवदत्ता स्वगतं वदति—णहि-इति । अस्या राजकन्यायाः केवलं स्वरूपमेव न मधुरम्, किन्तु वाण्यपि मधुराऽस्तीत्यर्थः ।

---

पद्मावती—आर्ये ! मैं प्रणाम करती हूँ ।

तापसी—चिरञ्जीव । पुत्रि ! चली आओ, तपोवन तो अतिथि लोगों के लिये अपने घर ही समान है ।

पद्मावती—बस, बस ! मैं जान गई । आप ने मुझ पर बड़ी कृपा की ।

वासवदत्ता—( आप ही आप ) केवल रूप ही नहीं, इसकी वाणी भी मधुर है ।

तापसी—भद्द ! इमं दाव भद्दमुहस्स भइणिअं कोचि राआ ण वरेदि । [ ꣸ भद्रे ! इमां तावत् भद्रमुखस्य भगिनिकां कश्चिद्राजा न वरयति ? ]

चेटी—अत्थि राआ पज्जोदो णाम उज्जइणीए । सो दारअस्स कारणादो दूदसंपादं करोदि । [ † अस्ति राजा प्रद्योतो नामोज्जयिन्याः । स दारकस्य कारणात् दूतसम्पातं करोति । ]

वासवदत्ता—( आत्मगतम् ) भोदु भोदु । एसा अ अत्तणीआ दाणिं संवुत्ता । [ ‡ भवतु भवतु । एषा चात्मीयेदानीं संवृत्ता ]

तापसी—अहो खु इअं आइदी इमस्स बहुमाणस्स । उभआणि

꣸ तापसी चेटीं पृच्छति—भद्दे-इति । भद्रमुखस्य = प्रसन्नसौम्याकृतेर्महाराजदर्शकस्य । कस्मादपि राजकुलादस्या विवाहचर्चा न भवति किमिति प्रश्नः ।

† चेटी वदति—अत्थि-इति । प्रद्योतः = चण्डमहासेनः वासवदत्तायाः पिता । दारकस्य कारणात् = निजसुतेन सह पद्मावत्या विवाहसम्बन्धघटनार्थमित्यर्थः । दूतसम्पातम् = वारं वारं दूतप्रेषणम् । उज्जयिनीराजः प्रद्योतः स्वपुत्रेण सह पद्मावत्या विवाहसम्बन्धं चिकीर्षतीति भावः ।

‡ प्रद्योतराजकुमारेण सह पद्मावत्या भाविनं विवाहसम्बन्धमनुमोदमाना वासवदत्ता स्वगतमाह—भोदु-इति । भवतु भवतु = अस्या मम भर्तृकुले पितृकुले वा सम्बन्धो भवतु नाम, आत्मीया = स्वकीया । ममोभयमप्यभिमतमिति भावः ।

तापसी—भद्रे ! क्या किसी राजकुमार से महाराज दर्शक के इस बहन के ब्याह की बातचीत चलती है ?

चेटी—हाँ, उज्जयिनी के राजा प्रद्योत ने अपने लड़के के साथ इसके ब्याह के लिये दूत भेजा है ।

वासवदत्ता—( अपने मन में ) अब तो यह अपनी हो गई ।

तापसी—यह पद्मावती का स्वरूप इस माननीय कुल के योग्य है । दोनों राजकुल श्रेष्ठ हैं, ऐसा सुना जाता है ।

राअउलाणि महत्तराणि त्ति सुणीअदि । [ ※ अर्हा खल्वियमाकृतिरस्य बहुमानस्य । उभे राजकुले महत्तरे इति श्रूयते । ]

**पद्मावती**—अय्य ! किं दिट्ठो मुणिजणो अत्ताणं अणुग्गहीदुं । अभिप्पेदप्पदाणेण तवस्सिजणो उवणिमन्तीअदु दाव को किं एत्थ इच्छदि त्ति [ † आर्य ! किं दृष्टो मुनिजन आत्मानमनुग्रहीतुम् । अभिप्रेत-प्रदानेन तपस्विजन उपनिमन्त्र्यतां तावत् कः किमत्रेच्छतीति । ]

**काञ्चुकीयः**—यदभिप्रेतं भवत्या । भो भो आश्रमवासिनस्तपस्विनः ! शृण्वन्तु शृण्वन्तु भवन्तः । इहात्रभवती मगधराजपुत्री अनेन विस्रम्भे-णोत्पादितविस्रम्भा धर्मार्थमर्थेनोपनिमन्त्रयते ‡ ।

---

※ तापसी वदति—अर्हा खु-इति । इयम् = अलौकिकरूपगुणादिसम्पन्ना । आकृतिः = पद्मावत्या आकारः । अस्य बहुमानस्य = प्रद्योतकुलसम्बन्धरूप-गौरवस्य । अर्हा = योग्या । उभे राजकुले = प्रद्योत-दर्शककुले । महत्तरे = अति-प्रशस्ते । एतयोः कुलयोः सम्बन्धः श्लाघ्य इत्यर्थः ।

† पद्मावती लज्जावशादिमां चर्चां स्थगयितुं कार्यान्तरमुपक्षिपन्ती कञ्चुकि-नमाह—आर्य–इति । आर्य ! = काञ्चुकीय ! । आत्मानमनुग्रहीतुं = मया दीयमानं वस्तु गृहीत्वा मामनुगृहीतां कर्तुमित्यर्थः । अभिप्रेतप्रदानेन = अभीष्टवस्तु-प्रदानघोषणया । उपनिमन्त्र्यताम् = अभ्यर्थ्यताम् । कः किमत्रेच्छतीति—उप-निमन्त्रणप्रकारः । मुनिजनो येन प्रकारेण निःशङ्कं स्वाभीष्टं प्रकटयेत्तथा घोषणा क्रियतामित्यर्थः ।

‡ काञ्चुकीयो वदति—यदिति । अभिप्रेतम् = अभिमतम् । विश्रम्भेण

---

**पद्मावती**—आर्य ! क्या आपने ऐसे ऋषि-मुनि लोगों को देखा है, जो मुझसे कुछ लेकर मुझे अनुगृहीत करें । यदि नहीं, तो यह सूचित कर दें कि, जो कोई ऋषि-मुनि जो कुछ चाहते हों, अभीष्ट वस्तु के दान से उनकी इच्छा पूरी की जायगी ।

**कञ्चुकी**—जो आपकी इच्छा । हे हे आश्रम में रहने वाले मुनियो ! कृपा-कर सुनते जाँय । यह मगधराज की पुत्री अपने स्वागत से सन्तुष्ट होकर अपने धर्मार्थ को कृतार्थ करने के लिये आप लोगों से प्रार्थना करती है ।

कस्यार्थः कलशेन, को मृगयते वासो, यथानिश्चितं
दीक्षां पारितवान् किमिच्छति पुनर्देयं गुरोर्यद्भवेत्।
आत्मानुग्रहमिच्छतीह नृपजा धर्माभिरामप्रिया
यद्यस्यास्ति समीप्सितं वदतु तत् कस्याद्य किं दीयताम् ॥८॥

=तापसीप्रदर्शितेन स्वागतोपचाररूपविश्वासेन । उत्पादितविश्रम्भा = समुत्पन्न-विश्वासा । तपोवनं नामातिथिजनस्य स्वगेहमिति तापसीवचनान्निःशङ्केत्यर्थः । धर्मार्थमर्थेनोपनिमन्त्रयते = धर्मकार्यार्थं धर्मक्रियोपयोगिवस्तूनां प्रतिग्रहस्वीकरणाय प्रार्थयते । तापसीकृतेन सत्कारेण सञ्जातविश्वासा राजकन्या पद्मावती आत्मनः पुण्योपलब्धये तपोवनवासिभ्यो भवद्भ्यो भवदभीष्टानि वस्तूनि दित्सति, अतो भवन्तो निःशङ्कं स्वाभिलाषं प्रकटयन्त्विति भावः ।

उपनिमन्त्रणप्रकारमाह—कस्यार्थ इति ।

( अन्वयः ) कस्य, कलशेन, अर्थः, कः, वासः, मृगयते, यथानिश्चितं, दीक्षां, पारितवान्, कः, किमिच्छति, यत्पुनः, गुरोः, देयं, भवेत्, धर्माभिरामप्रिया, नृपजा, इह, आत्मानुग्रहम्, इच्छति, यत्, यस्य, समीप्सितं अस्ति, तत्, वदतु, अद्य, कस्य, किं, दीयताम् ॥८॥

( टीका ) कस्य = मुनिजनस्य । कलशेन = जलाहरणोपयोगिना कमण्डल्वा-दिना पात्रेण । अर्थः = प्रयोजनम् । अस्तीति शेषः । कः = कः पुरुषः । वासः = वस्त्रम्, मृगयते = अन्विष्यति, लब्धुमिच्छतीत्यर्थः । यथानिश्चितम् = शास्त्राऽनु-सारं स्वसङ्कल्पाऽनुगुणं विधीन्परिपाल्य। दीक्षाम् = ब्रह्मचर्यपूर्वकं वेदाध्ययनव्रतम्। पारितवान् = समापितवान् । पूर्णदीक्षो गृहस्थाऽऽश्रमं प्रविविक्षुरित्यर्थः । कः = स्नातकः । किम् = वस्तुविशेषम् । इच्छति = कामयते । यत् = वस्तु, पुनः । गुरोः = आचार्यस्य, देयम्भवेत् = अर्पणीयम्भवेत् । गुरोरिति शेषत्वविवक्षया षष्ठी,

किसको कलश ( कमण्डल ) चाहिये ? किसको कौपीन आदि वस्त्रों की आवश्यकता है ? कौन ऐसा है, जिसने विधिपूर्वक शिक्षा समाप्त कर ली है और गुरु को इष्ट दक्षिणा देना चाहता है । राजकुमारी चाहती है कि, वे हम पर कृपा करें । जिनको जो जो इष्ट हो, कहें किनको क्या क्या दिया जाय ॥८॥

**यौगन्धरायणः**—हन्त हृष्ट उपायः*। (प्रकाशम्) भोः ! अहमर्थी।

**पद्मावती**—दिट्ठिआ सहलं मे तवोवणाभिगमणं [ दिष्ट्या सफलं मे तपोवनाभिगमनम् † ]

---

गुरवे दक्षिणारूपतयाऽऽहरणीयम्भवेदित्यर्थः । धर्माऽभिरामप्रिया = धर्मेऽभिरमन्त इति धर्माऽभिरामा धर्मप्रियास्तपस्विन इत्यर्थः । ते प्रिया यस्याः सा, मुक्तहस्तमर्थप्रदानद्वारा तेषां प्रीतिविधायिनीत्यर्थः, नृपजा = राजकुमारी, पद्मावती । इह = अत्र तपोवने । आत्माऽनुग्रहम् = आत्मनि स्वविषयेऽनुग्रहं तपस्विदत्ताऽभिलषिताऽऽशीर्वादरूपं, सत्पात्रवितरणजनितैहिकाऽऽमुष्मिकाऽनन्तफलावाप्तिरूपं वा । इच्छति = अभिलषति । यत् = वस्तु । यस्य = तपस्विनः । समीप्सितम् = अभिलषितम्, अस्ति । तत् स वदतु = कथयतु । स मयेदं वस्त्वावश्यकमिति सूचयत्वित्यर्थः । अद्य । कस्य = तपस्विनः । किं, वस्तु । दीयताम् = अर्प्यताम् । भवद्भिराज्ञापिते सति तद्वस्तु तत्क्षणमेव दीयेतेत्यर्थः ।

अस्मिन् श्लोके चतुर्थचरणे "यद्यस्यास्ति स ईप्सितं वदतु तत्कस्याऽद्य किं दीयताम्" इति पाठः कल्पितश्चेत्समीचीनो भवेत् । "शार्दूलविक्रीडितं" वृत्तम् ।

राजकन्यया तपोवने कृतस्योपनिमन्त्रणस्य प्रकारं वर्णयन् काञ्चुकीय आह—यस्य कमण्डल्वादिजलाहरणपात्रमपेक्षितं स निःशङ्कमागत्य तद्याचताम् । यस्य वस्त्रमपेक्षितं तत्तेन लप्स्यते । यश्च गुरोः सकाशाद्विधिवद्वेदमधीत्य ब्रह्मचर्य्यपूर्वकं स्वाध्यायव्रतं समापितवान्, स्नास्यन् स गुरवे देयां पुष्कलां दक्षिणामपि लभेत । धर्मानुरागिणां सदाचारिणां दर्शनेन सर्वदा प्रीतिमावहन्ती राजकन्या पद्मावती सत्पात्रेषु वितरणं कृत्वैहिकाऽऽमुष्मिकाऽनन्तफलाऽऽवाप्तिं कामयते, अतः सर्वोऽपि याचकः स्वस्वाभीष्टं कथयतु कस्य किमपेक्षितमिति भावः ॥ ८ ॥

* दानघोषणां श्रुत्वा यौगन्धरायणः स्वगतं वदति—हन्त इति । हन्तेति हर्षे, हर्षश्च वासवदत्ताया निक्षेपाऽवसरलाभमूलकः । उपायः = मार्गः । अर्थी—याचकः ।

† पद्मावती वदति–दिट्ठिआ–इति । दिष्ट्या = सौभाग्येन । सफलं =

---

**यौगन्धरायण**—अहा ! मौका मिल गया । (सुनकर) ऐ जी, मैं प्रार्थी हूँ।

**पद्मावती**—अहो ! भाग्य ! आश्रम में मेरा आगमन सफल हुआ ।

तापसी—संतुट्ठतपस्सिजणं इदं अस्समपदं। आअंतुएण इमिणा होदव्वं। [ ❀ संतुष्टतपस्विजनमिदमाश्रमपदम्। आगन्तुकेनानेन भवितव्यम् ]

काञ्चुकीयः—भोः ! किं क्रियताम् † ?

यौगन्धरायणः—‡इयं मे स्वसा। प्रोषितभर्तृकामिमामिच्छाम्यत्र भवत्या कञ्चित् कालं परिपाल्यमानाम्। कुतः—

कार्यं नैवार्थैर्नापि भोगैर्न वस्त्रैर्नाहं काषायं वृत्तिहेतोः प्रपन्नः।

---

सार्थकम्। कस्याऽप्यर्थिनोऽभावाद्विफलमिव भवन्मम तपोवनाभिगमनमिदानी-मेकस्याऽर्थिनो लाभेन सफलं सञ्जातमित्यर्थः।

❀तापसी वदति—संतुट्ठेति। संतुष्टतपस्विजनम् = संतुष्टा अनायासलभ्यैर्वन्यैः फलैरेव परितृप्ताः, अत एव दानद्रव्येषु निरभिलाषास्तपस्विनो जना यत्र तत्। आश्रमवनम् = तपोवनम्। आगन्तुकेन = नवाऽऽगतेन वैदेशिकेन।

† काञ्चुकीयः पृच्छति—भो–इति। किं क्रियताम् = भवतः कृते कोऽथः सम्पाद्यताम्।

‡ यौगन्धरायण उत्तरयति–इयमिति। स्वसा = भगिनी। प्रोषितभर्तृ-काम् = प्रोषितो विदेशं गतो भर्ता पतिर्यस्यास्ताम्। अत्र भवत्या = मान्ययाऽनया राजकुमार्य्या। कञ्चित्कालम् = यावदहमस्या भर्तारमन्विष्य प्रत्यानयामि, तावत्काल-पर्यन्तम्। परिपाल्यमानाम् = राजकन्यया स्वसन्निधौ संस्थाप्य रक्षमाणाम्।

कुतः = यतः। इदं वक्ष्यमाणश्लोकाऽन्वयि।

कार्यमिति।

( अन्वयः ) ( मम ) अर्थैः, नैव कार्यम्, नाऽपि भोगैः, न वस्त्रैः, अहं

---

तापसी—आश्रम के तो सभी तपस्वी सन्तुष्ट हैं। यह कोई परदेशी मालूम होता है।

कञ्चुकी—कहिये, क्या चाहते हैं ?

यौगन्धरायण—यह हमारी बहन है। इसका पति विदेश चला गया है। आप इसकी देखभाल करें, मैं यही चाहता हूँ। क्योंकि—

**धीरा कन्येयं दृष्टधर्मप्रचारा शक्ता चारित्रं रक्षितुं मे भगिन्याः ॥९॥**

**वासवदत्ता—( आत्मगतम् ) हं इह मं णिक्खिविदुकामो अय्य-**

वृत्तिहेतोः काषायं न प्रपन्नः। दृष्टधर्मप्रचारेयं कन्या धीरा ( अस्ति ), ( अतः ) मे भगिन्याश्चारित्रम्, रक्षितुं शक्ता ( अस्ति ) ॥ ९ ॥

( टीका ) ( मम = मे ) अर्थैः = धनैः। नैव कार्यम् = प्रयोजनं नैवाऽस्ति। नाऽपि भोगैः = भोग्यपदार्थैरपि कार्यं नास्ति। न वस्त्रैः = वस्त्रैरपि कार्यं नास्ति। अहं वृत्तिहेतोः = आजीविकासाधनार्थम्। काषायम् = कषायेण रञ्जितं—वस्त्रं, लक्षणया तत्सूचितां प्रव्रज्याम्। न प्रपन्नः = न प्राप्तः। वृत्त्यर्थं मया संन्यासो न गृहीत इति भावः। दृष्टधर्मप्रचारा = दृष्टोऽवलोकितोऽस्माभिरिति शेषः, धर्मप्रचारः = धर्माचरणं यस्याः सा, धर्माचारप्रवणेत्यर्थः। इयं कन्या = मगधराजभगिनी। धीरा = चारित्ररक्षणसमर्था। मे = मम। भगिन्याः = स्वसुः। चारित्रम् = शीलम्, सतीत्वमित्यर्थः। रक्षितुम् = त्रातुम्। शक्ता = समर्था। अस्ति।

अत्र श्लोके अर्थान्तरन्यासोऽलङ्कारः। "वैश्वदेवी" वृत्तम्। तल्लक्षणन्तु— "पञ्चाश्वैश्छिन्ना वैश्वदेवी ममौ यौ" इति।

सन्यासिवेषधारी यौगन्धरायणो राजकन्याऽऽज्ञया धर्मार्थमुपनिमन्त्रणं कुर्वाणं काञ्चुकीयमाह—ममार्थैः प्रयोजनं नास्ति, भोग्यपदार्थैर्वस्त्रैरपि नार्थः, आजीविका-साधनसम्पत्त्यर्थं नाऽहं संन्यासं गृहीतवान्। अयत्नसुलभैर्वन्यैः फलवल्कलादिभिर्मम निर्वाहः सिद्ध्यत्येव। इयं राजकन्या धर्माचरणप्रवणा स्वचारित्ररक्षणसमर्था च लक्ष्यते। मम भगिन्याश्चारित्रमस्याः सन्निधाने सुरक्षितं तिष्ठेदतस्तदेवाऽहं प्रार्थये। तत्र भवत्या राजकन्ययैषु एव ममाभीप्सितोऽर्थः सम्पाद्यताम्, इति भावार्थः ॥९॥

मैं धन, भोग तथा वस्त्र आदि कुछ भी नहीं चाहता और न जीविका-साधन के लिये मैंने संन्यास ही धारण किया है। किन्तु यही चाहता हूँ कि, धैर्यवती मगध-राजकुमारी धर्म-कर्म प्रिय हैं इससे वे हमारे बहन के चारित्र-रक्षण में समर्थ होंगी। अतः वे इसे रक्खें ॥९॥

वासवदत्ता—( आप ही आप ) ओह! आर्य यौगन्धरायण इसी को मुझे सौंपना चाहते हैं। अस्तु, विना विचारे ये कुछ नहीं करते।

योगन्धरायणो । होदु, अविआरिअ कमं ण करिस्सदि । [ * हम् इह मां निक्षेप्तुकाम आर्ययौगन्धरायणः । भवतु, अविचार्य क्रमं न करिष्यति । ]

काञ्चुकीयः—† भवति ! महती खल्वस्य व्यपाश्रयणा । कथं प्रतिजानीमः ? कुतः,

सुखमर्थो भवेत् दातुं सुखं प्राणाः सुखं तपः ।
सुखमन्यद्भवेत् सर्वं दुःखं न्यासस्य रक्षणम् ॥१०॥

* वासवदत्ता स्वगतं वदति—हं इति । हमित्यसम्मतिसूचकमव्ययम् । इह= पद्मावतीसन्निधौ । निक्षेप्तुकामः=निक्षेप्तुं न्यासरूपेण स्थापयितुं कामोऽभिलाषो यस्य सः । "तुङ्काममनसोरपि" इति मलोपः । अविचार्य्य=अविमृश्य । क्रमम्= पादविन्यासम् । मन्निक्षेपरूपेऽस्मिन् कार्ये आर्ययौगन्धरायणो विचारमकृत्वा न किमपि करिष्यति, अतो न मे चिन्तावसर इति भावः ।

† काञ्चुकीय आह—भवति ! इति । भवति !=राजपुत्रि ! महती=गुर्वी, कष्टसाध्या । व्यपाश्रयणा=आश्रयभिक्षा, भगिनीपरिपालनार्थं राजकन्याऽऽश्रया-ऽभ्यर्थनमित्यर्थः । कथं प्रतिजानीमः=कष्टसाध्यामिमां भिक्षां प्रदातुं कथं स्वीकुर्म इत्यर्थः ।

उक्तार्थे हेतुमाह—कुत इति ।

सुखमिति ।

( अन्वयः ) अर्थः, दातुं, सुखं, भवेत्, प्राणाः सुखम्, तपः सुखम्, अन्य-त्सर्वं, सुखं, भवेत्, न्यासस्य, रक्षणं, दुःखम् ॥१०॥

( टीका ) अर्थः=हिरण्यरत्नाऽऽदि धनम् । दातुम्=वितरितुम् । सुखम्भवेत् =अनायासेन दातुं शक्यो भवेदित्यर्थः । प्राणाः=असवः । सुखम्=अनायासेन दातुं शक्या भवेयुः । तपः=अत्र तपःशब्दस्य तपःफले लक्षणा, तपःफलमित्यर्थः ।

कञ्चुकी—देवि ! इस संन्यासी की यह आश्रय-भिक्षा बड़ी कठिन प्रतीत होती है । इसके लिये कैसे प्रतिज्ञा करें । क्योंकि—

धन, प्राण और तप इत्यादि तथा ऐसे ही और सब कुछ का दान सहज ही हो सकता है परन्तु न्यास ( थाती ) का रक्षण तो अत्यन्त कठिन है ॥१०॥

पद्मावती—अय्य ! पढमं उग्घोसिअ को किं इच्छदित्ति अजुत्तं दाणिं विआरिदुं। जं एसो भणादि, तं अणुचिट्ठदु अय्यो । [ *आर्य ! प्रथममुद्घोष्य कः किमिच्छतीत्ययुक्तमिदानीं विचारयितुम् । यदेष भणति, तदनुतिष्ठत्वार्यः ]

काञ्चुकीयः—अनुरूपमेतद्भवत्याभिहितम्† ।

---

सुखम् = अकष्टेन दातुं शक्यम् । अन्यत्सवम् = न्यासरक्षणादितरत्सकलमपि स्वायत्तं वस्तु सुखम्भवेत् = अनायासेन दातुं शक्यम्भवेत् । न्यासस्य = निक्षेपस्य । रक्षणम् = धारणम् । दुःखम् = कष्टकरम्, तत्कथमपि सम्पादयितुं न शक्यमित्यर्थः ।

अत्र प्रथमपाद उपात्तस्य "भवेत्" इत्यस्य भवेयुरिति वचनव्यत्ययेन प्राणा इत्यत्र योजना । अत्र अर्थान्तरन्यासोऽलङ्कारः "अनुष्टुब्" वृत्तम् ।

न्यासरक्षणस्य दुष्करत्वमुपपादयन् काञ्चुकीय आह—याचमानाय रजतहिरण्यरत्नादिकमर्थजातमकष्टं दातुं शक्यते । अवसरविशेषे स्वप्राणदानेनैव देशराष्ट्रकुला-ऽऽदिरक्षासम्भवे सति विहाय ममतां प्राणा अपि परित्यज्यन्ते । किम्बहुना, उदारचेतसा पुरुषेण स्वायत्तं सर्वमपि दातुमनायासेन शक्यते । न्यासस्य रक्षणमेव केवलं दुःशकम् । अर्थप्राणतपःफलादिदानाऽपेक्षयाऽपि निक्षेपधारणं बाढं दुष्करमिति भावः ॥१०॥

* पद्मावती वदति—अय्य-इति । विचारयितुम् = सुकरम्, दुष्करं वेति निर्णयितुम् । अनुतिष्ठतु = स्वीकरोतु । कः किमिच्छतीति प्रथमं स्वमुखेनैवोद्घोष्य पश्चाद्याचकप्रार्थनायाः सुकरत्वदुष्करत्वविचारणमनुचितमिति दुष्करमपि तद्याचितमिदानीवश्यमेवाङ्गीकार्यमिति भावः ।

† काञ्चुकीयो वदति—अनुरूपमिति । अनुरूपम् = कुलस्य दातृतायाश्चानुगुणम् । एतत् = प्रतिज्ञातार्थपालनम् ।

---

पद्मावती—आर्य, कौन क्या चाहता है, पहिले इस बात की घोषणा कर फिर उसमें इधर उधर करना ठीक नहीं है । ये जो कहते हैं, आपको करना ही पड़ेगा ।

कञ्चुकी—आपने अपने अनुरूप ही कहा ।

चेटी—चिरं जीवदु भट्टिदारिआ एवं सच्चवादिणी । [ चिरं जीवतु भर्तृदारिकैवं सत्यवादिनी* ]

तापसी—†चिरं जीवदु भद्दे ! [ चिरं जीवतु भद्रे ! ]

काञ्चुकीयः—‡भवति ! तथा । ( उपगम्य ) भोः ! अभ्युपगतमत्र भवतो भगिन्याः परिपालनमत्रभवत्या ।

यौगन्धरायणः—§अनुगृहीतोऽस्मि तत्रभवत्या । वत्से ! उपसर्पात्रभवतीम् ।

वासवदत्ता—( आत्मगतम् ) का गई । एसा गच्छामि मंदभाआ [ का गतिः । एषा गच्छामि मन्दभागा △ ]

* चेटी वदति—चिरमिति । एवं सत्यवादिनी = प्रतिज्ञातं शक्यमशक्यं वेति विचारमकृत्वा तदवश्यं पूरयितव्यमेवेति यथार्थभाषणशीला ।

† राजकन्यायाः सविशेषं सत्यनिष्ठां दृष्ट्वा सन्तुष्टा तापसी तां शुभाशीर्भिर्वर्द्धयति—चिरमिति । भवतीत्यध्याहारः ।

‡ काञ्चुकीय आह—भवति ! इति । तथा = आज्ञां स्वीकरोमीत्यर्थः । अभ्युपगतम् = स्वीकृतम् ।

§ यौगन्धरायणो वदति—अनुगृहीतोऽस्मीति । उपसर्प = समीपं गच्छ ।

△ वासवदत्ता स्वगतं वदति—का गई इति । का गतिः = उपायान्तराभावादिदमेवेदानीं कर्तुमापतितमित्यर्थः । मन्दभागा = मन्दः अल्पः भागो भाग्यं यस्याः

दासी—इस प्रकार सत्य बोलनेवाली राजकुमारी बहुत दिनों तक जीती रहें ।

तापसी—कल्याणी, बहुत दिनों तक जीती रहो ।

कञ्चुकी—बहुत ठीक, ( पास जाकर ) श्रीमती राजकुमारी ने श्रीमान् की बहन की देखरेख स्वीकार कर ली ।

यौगन्धरायण—श्रीमती ने बड़ी कृपा की। बेटी, राजकुमारी के पास जा।

वासवदत्ता—क्या करूँ, अब तो मुझ मन्दभागिनी को जाना ही पड़ा ।

पद्मावती——भोदु भोदु । अत्तणीआ दाणिं संवुत्ता । [*भवतु भवतु । आत्मीयेदानीं संवृत्ता ]

तापसी——जा ईदिसी से आइदी, इयं वि राअदारिअत्ति तक्केमि । [†या ईदृश्यस्या आकृतिः, इयमपि राजदारिकेति तर्कयामि ।

चेटी—सुट्ठु अय्या भणादि । अहं वि अणुहूदसुहत्ति पेक्खामि [‡सुष्ठु आर्या भणति । अहमपि अनुभूतसुखेति पश्यामि । ]

यौगन्धरायणः——(आत्मगतम्) § हंत भोः । अर्धमवसि

---

सा । "भागो रूप्यार्द्धके भाग्यैकदेशयोः" इति हैमः । स्वजनविच्छेदकातराय ममेदानीमेकलोऽलम्बभूतो यौगन्धरायणोऽपि विच्छिद्यत इत्यहो ! मे दौर्भाग्य मिति भावः ।

* सविषादं मन्दं मन्दमुपसर्पन्तीं वासवदत्तामाश्वासयन्ती पद्मावती वदति—भोदु-इति । भवतु, भवतु = विषादो न क्रियतामित्यर्थः । आत्मीयेदानीं संवृत्त = त्वमिदानीं मम निकटसम्बन्धिनीव स्वकीया जाताऽसि । तथा च स्वजनमध्य गायास्ते खेदोऽनवसरः । स्वगृह इवात्र निर्विशङ्कं वसेत्यर्थः ।

† तापसी चिन्तयति—जा ईदिसीति । या = दृश्यमाना । आकृतिः = मूर्तिः ईदृशी = सामान्यकन्याजनासुलभमार्दवसौकुमार्यसौशील्यादिसद्गुणसम्पन्ना । तत हेतोरियमपि-राजदारिका = कस्याऽपि राज्ञो दुहिता—इति तर्कयामि = सम्भावयामि

‡ तापसीचिन्तितमर्थमेव चेट्यप्यनुमोदते—सुट्ठु-इति । अनुभूतसुख = अनुभूतं-उपभुक्तं सुखं-राजकन्यासुलभमङ्गसंस्कारादिक यया सा । अस्याः शरीर सौकुमार्याद्यवलोकनेनेयं राजकन्यावत्परिपालिताऽस्तीत्यनुमीयत इत्यर्थः ।

§ यौगन्धरायणः स्वगतं वदति—हन्त भोः इति । भारमुक्तिजन्यानन्दसूचक

---

पद्मावती—शोक न कर, अब तू अपनी हो गयी ।

तापसी—जब इसकी ऐसी आकृति है, तो यह भी किसी राजा की कन्या होगी, ऐसा मैं समझती हूँ ।

चेटी—ठीक कह रही हो । इसके सुकुमार शरीरादि के देखने से मुझे भी यही अनुमान हो रहा है कि, यह राजकुल की कन्या की तरह पाली गयी है

भारस्य। यथा मन्त्रिभिः सह समर्थितं, तथा परिणमति। ततः प्रतिष्ठिते स्वामिनि तत्र भवतीमुपनयतो मे इहात्र भवती मगधराजपुत्री विश्वासस्थानं भविष्यति। कुतः।

पद्मावती नरपतेर्महिषी भवित्री
दृष्टा विपत्तिरथ यैः प्रथमं प्रदिष्टा।

मिदमव्ययद्वयम्। अर्द्धमवसितं भारस्य = भारस्य-गुरुतरकार्यस्य। अर्द्धम् = अर्द्धभागः। अवसितं = निष्पन्नम्। यौगन्धरायणेन विपत्त्यापहृतस्वामिराज्यप्रत्यावर्तनभारो गृहीतः। स च पद्मावत्या सह स्वामिनः परिणये सत्येव घटेतेति निश्चितम्। स च क्वचिदासे वासवदत्ताव्यसने सति सम्पद्येत। तत्र वासवदत्ताया अपसारणपूर्वकं पद्मावतीहस्ते न्यसन सम्पन्नमिति स्वीकृतगुरुतरकार्यभागस्यार्द्धो भागः सम्पन्न इति यौगन्धरायणोक्तेरभिप्रायः। यथा मन्त्रिभिः सह समर्थितं तथा परिणमति—यथा = यादृशम्। मन्त्रिभिः सह = रुमण्वदादिभिः सह। समर्थितं = स्थिरीकृतं मन्त्रयित्वा कर्तव्यत्वेन निर्द्धारितम्। तथा = तादृशमेव। परिणमति = सम्पद्यते—दैवानुकूल्येन घटते इत्यर्थः। ततः = अस्मादेव हेतोः। स्वामिना सह पद्मावत्याः परिणयादौ सम्पन्ने तत्साहाय्येन शत्रुहृतराज्यांशप्रत्यावर्त्तनपूर्वकं पुनः स्वामिनि स्वराज्ये प्रतिष्ठिते तत्र भवतीम् = वासवदत्ताम्, उपनयतः = स्वामिसमीपं प्रापयतः, मे = मम यौगन्धराणयस्य, इह = वासवदत्तायाम्, अत्र भवती मगधराजपुत्री = मान्या, स्वामिना परिणीता पद्मावती, विश्वासस्थानं = स्वामिनो वासवदत्ताविषये

यौगन्धरायण—(आप ही आप) अच्छा, आधा भार तो उतर गया। जैसा मैंने मन्त्रियों से निश्चय किया था, वैसा ही हो रहा है। फिर जब मेरे स्वामी वत्सदेश के राजसिंहासन पर बैठ जायँगे और मैं वासवदत्ता को लेकर फिर उन के पास उपस्थित होऊँगा, तो श्रीमगधराजकुमारी पद्मावती ही मेरी साक्षिणी होगी क्योंकि—

जिन पुष्पभद्रकादि सिद्ध आचार्यों ने भविष्य विपत्ति को पहिले ही कह दिया था और तदनुसार यह विपत्ति हमलोगों के सामने आ भी गयी। तत्पश्चात् उन्हीं लोगों के कहने से कि, पद्मावती वत्सराज की पत्नी होगी, इसी विश्वास

तत्प्रत्ययात् कृतमिदं न हि सिद्धवाक्या-
न्युत्क्रम्य गच्छति विधिः सुपरीक्षितानि ॥११॥

शीलशुद्धिप्रत्ययजनने विश्वसनीया साक्षिणी भविष्यति । अनेनैतन्नाटकीयमखिल-मितिवृत्तं सूचितम् ।

आत्मनो विचारान् समर्थयन्नाह—पद्मावतीति ।

( अन्वयः ) यैः प्रथमं भवित्री विपत्तिः प्रदिष्टा, दृष्टा, अथ पद्मावती नरपतेः भवित्री महिषी प्रदिष्टा । तत्प्रत्ययात् इदं कृतम् । हि विधिः सुपरीक्षितानि सिद्ध--वाक्यानि उत्क्रम्य न गच्छति ॥ ११ ॥

( टीका ) यैः = भविष्यदर्थवादिभिः पुष्पभद्रकप्रभृतिभिः सिद्धैः । प्रथमं = पूर्वम् । भवित्री = भाविनी शत्रुभिः करिष्यमाणा राज्यांशापहाररूपा । विपत्तिः = आपत्तिः । प्रदिष्टा = इदमित्थं भविष्यतीति सूचिता । सा च तदनन्तर--मस्माभिः दृष्टा = प्रत्यक्षमवलोकिता । अथ = तथाभूतविपत्तिनिपातानन्तरम् । पद्मावती = मगधराजकुमारी । नरपतेः = वत्सराजस्य । भवित्री = भाविनी । महिषी = पट्टाभिषिक्ता महाराज्ञी । प्रदिष्टा = कथिता । तत्प्रत्ययात् = तेषु-भविष्य--दर्थवादिषु प्रत्ययो विश्वासस्तस्मात् । भविष्यदर्थवादिभिः प्रथममुक्ता स्वामिनो राज्यप्रच्युतिरूपा विपत्तिर्यस्मात्फलिता, तस्माद् द्वितीया पद्मावतीपरिणयनरूपा समृद्धिरपि निश्चयेन फलिष्यतीति विश्वासादित्यर्थः । इदं कृतम् = पद्मावत्या हस्ते वासवदत्ताया निक्षेपणमनुष्ठितम् । उक्तार्थं समर्थयते— न हीति । हि = यस्मात्-कारणात् । विधिः = दैवम् । सुपरीक्षितानि = बहुशस्तत्र तत्र सम्यक् परीक्ष्य सत्यत्वेन निर्द्धारितानि । सिद्धवाक्यानि सिद्धानां = वाक्सिद्धानां वाक्यानि = वचनानि । उत्क्रम्य = उल्लङ्घ्य । न गच्छति = न व्रजति—फलप्रदो न भवति । अपि तु सिद्धवाक्यानुरोधेनैव दैवगतेः साफल्यं भवतीत्यर्थः । "वसन्ततिलकं" वृत्तम् ।

वासवदत्तां पद्मावतीसंरक्षणे स्थापयित्वा प्रस्तुतकार्यार्द्धसम्पूर्तिसमाश्वस्तचेता यौगन्धरायणः स्वकृतिं समर्थयन्नाह—पुष्पभद्रकप्रभृतिभिः सिद्धैः पूर्वमुक्तमासीत्

पर हमलोग यह सब करने में लग गये क्योंकि—भाग्य, सिद्ध पुरुषों के अच्छी तरह परीक्षा किये गये वचनों के विपरीत, अपना फल नहीं दिखाता ॥ ११ ॥

( ❀ ततः प्रविशति ब्रह्मचारी )

ब्रह्मचारी—( ऊर्ध्वमवलोक्य ) स्थितो मध्याह्नः। दृढमस्मि परिश्रान्तः। अथ कस्मिन् प्रदेशे विश्रमयिष्ये। ( परिक्रम्य ) भवतु, दृष्टम्। अभितस्तपोवनेन भवितव्यम्। तथाहि—

विस्रब्धं हरिणाश्चरन्त्यचकिता देशागतप्रत्यया
वृक्षाः पुष्पफलैः समृद्धविटपाः सर्वे दयारक्षिताः।

यत् पद्मावती वत्सराजोदयनस्य महिषी भविष्यतीति। तथासति चिरवियुक्ताया अपि वासवदत्तायाः शीलादिविषये स्वमहिष्या पद्मावत्या कथ्यमानं साद्यं तद्विश्वासेनावश्यमेव स्वामी वत्सराजः स्वीकरिष्यति। भविष्यदर्थवादिनां वचनस्य सत्यतायां च काऽपि शङ्का नोपतिष्ठते। यतस्तैरुक्ताऽस्मत्स्वामिनो राज्यप्रच्युतिरवितथा जाता, प्रत्यक्षं दृष्टा चास्माभिः अग्रे च पद्मावत्या सह महाराजस्योदयनस्य परिणयोऽपि तैरुक्तोऽवश्यमेव घटेत, तद्विश्वासादेव मया पद्मावत्या हस्ते वासवदत्ताया निक्षेपणं कृतम्। दैवमपि सिद्धोक्तिमुल्लङ्घ्य गन्तुं न प्रभवति, अपि तु सिद्धवचनानुसारेणैव चलति, इति भावः॥ ११॥

❀ अथ वासवदत्तावियुक्तवत्सराजदशावर्णनार्थं, पद्मावतीहृदये वत्सराजविषयकानुरागबीजवपनार्थं, वासवदत्तासमाश्वासनार्थं च तदनुगुणपात्रप्रवेशमारचयति कविः—ततः प्रविशति ब्रह्मचारीति। स्थितो मध्याह्नः = सम्प्रति गगनमध्यमागतो ललाटन्तपः सूर्य इत्यर्थः। दृढमस्मि परिश्रान्तः = मार्गश्रमेणात्यन्तं क्लान्तोऽस्मीत्यर्थः। विश्रमयिष्ये = विश्रान्तिं प्रापयिष्ये। आत्मानमिति शेषः। कस्मिन् स्थाने विश्रम्य विगतक्लमो भविष्यामीत्यर्थः। दृष्टम् = उपलब्धम्, विश्रामयोग्यं स्थानमिति शेषः। अभितः = समीपे 'समीपोभयतः शीघ्रसाकल्याभिमुखेऽभितः' इत्यमरः। अस्य विश्रान्तिस्थानस्य समीपे तपोवनं भवेदित्यर्थः।

( तदनन्तर ब्रह्मचारी प्रवेश करता है )

ब्रह्मचारी—( ऊपर देखकर ) दोपहर होगया। मार्ग के परिश्रम से मैं बहुत थक गया हूँ। कहाँ चलकर विश्राम करूँ। ( घूमकर ) अच्छा, स्थान मिल गया। चारों ओर तपोवन ही मालूम पड़ता है। देखो—

भूयिष्ठं कपिलानि गोकुलधनान्यक्षेत्रवत्यो दिशो
निःसन्दिग्धमिदं तपोवनमयं धूमो हि बह्वाश्रयः ॥१२॥

तदेवाह—तथाहि—विस्रब्धमिति ।

( अन्वयः ) देशागतप्रत्ययाः अचकिता हरिणा विस्रब्धं चरन्ति, दयारक्षिताः सर्वे वृक्षाः पुष्पफलैः समृद्धविटपाः ( सन्ति ) गोकुलधनानि कपिलानि भूयिष्ठं ( सन्ति ) दिशः अक्षेत्रवत्यः ( सन्ति ) इदं निःसन्दिग्धं तपोवनं ( अस्ति ) हि अयं बह्वाश्रयो धूमः ( अस्ति ) ॥ ११ ॥

( टीका ) देशागतप्रत्ययाः = देशात् निर्भयमिदं स्थानमिदं स्थानमिति सम्यक् परिचितात् शान्ततपोवनप्रदेशात् तत्रत्यजनाद्वा आगतः सञ्जातः प्रत्ययो विश्वासो येषां ते तथाभूताः । अतएव अचकिताः = अविचलिताः आगन्तुकजनसन्निधानेऽपि निर्भयास्तिष्ठन्तः । अन्यत्र मृगादयो वन्याः पशवो दूरादपि जनं वीक्ष्य व्याधभयेन झटिति विचलिताः सन्तः पलायन्ते, नेह तथेति भावः । हरिणाः = मृगाः, विस्रब्धं = विश्वासयुक्तं, निर्भयमित्यर्थः । चरन्ति = विहरन्ति । समानः प्रयोगो यथाऽभिज्ञानशाकुन्तले—"विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगाः" इति । दयारक्षिताः = दयया, पत्रशाखाच्छेदनाद्यकरणेन, पुष्पफलत्रोटनपीडाद्यकरणात्मिकया करुणया रक्षिताः काले सलिलसेचनादिना पालिताः संवर्धिता इति यावत् । अत एव सर्वे = सकलाः, वृक्षाः = तरवः, पुष्पफलैः = पुष्पैः फलैश्च, समृद्धविटपाः = समृद्धाः पुष्पफलसम्पन्नाः विटपाः शाखा येषां तथाभूताः सन्ति । गोकुलधनानि = गवां धेनूनां कुलानि समुदायाः धनानीव । आश्रमवासिनां ऋषीणां होमादिसर्वप्रयोजनसाधनत्वात् धनतुल्यानि गोवृन्दानीत्यर्थः । कपिलानि = कपिलवर्णानि तत्प्रायाणि वा । होमेषु तद्दुग्धस्य समधिकं प्राशस्त्यात् तत्सन्निधानस्य पावनत्वाच्च । तथा चोक्तम्—

यहाँ पर निर्भय होकर हरिण चरते हैं, प्रेम और यत्न से रक्षित वृक्षों की डालियाँ पुष्प और फलों से लदी हुई हैं, कपिला गायें भी बहुत चरती फिरती हैं, चारों तरफ की भूमि परती पड़ी हुई है। होम का धुआँ भी बहुत निकल रहा है। इससे यह निश्चय ही तपोवन है॥ १२ ॥

* यावत् प्रविशामि। (प्रविश्य) अये आश्रमविरुद्धः खल्वेष जनः। (अन्यतो विलोक्य) अथवा तपस्विजनोऽप्यत्र। निर्दोषमुपसर्पणम्। अये! स्त्रीजनः।

---

अग्निचित् कपिला सत्री राजा भिक्षुर्महोदधिः।
दृष्टमात्राः पुनन्त्येते तस्मात् पश्येत नित्यशः॥ इति॥

दिशः = पर्यन्तभूमयः, अक्षेत्रवत्यः = क्षेत्राणि-कृष्यर्थं हलादिना संस्कृता भूमयः केदाररूपाः तद्वत्यो न भवन्तीत्यक्षेत्रवत्यः सन्ति। अत्र परितः कृष्टा भूमिर्नास्तीत्यर्थः। इदं = पुरतो दृश्यमानम्। निःसन्दिग्धं = निश्चयेन। तपोवनं = मुनिब्रह्मचारिप्रभृतिनिवासयोग्य आश्रमः अस्ति। हि = यस्मात् कारणात्, अयं = प्रत्यक्षं दृश्यमानः बह्वाश्रयः = बहवः—होमे वह्नौ हुता घृत-यव-तिल-समिदादयः आश्रयाः—उद्गमस्थानानि यस्य तथाभूतः धूमः अस्ति।

अत्र हरिणानां निर्भयसञ्चरणेनाऽऽश्रमवासिनां दयालुत्वम्, वृक्षाणां पुष्पलतासम्पत्त्या सन्तोषविशेषः, कपिलाभूयस्त्वेनातिपवित्रत्वम्, गोकुलेषु धनत्वबुध्या हिरण्यरौप्यादिनिःस्पृहत्वम्, केदाराद्यसम्बन्धेन शान्तत्वम्, धूमोद्गमेनाग्निहोत्रिप्राचुर्यम्, इत्येतेऽर्थाः सूच्यन्ते। स्वभावोक्तिर्वाक्यार्थहेतुकं काव्यलिङ्गं चालङ्कारौ। "शार्दूलविक्रीडितं" वृत्तम्।

ब्रह्मचारी परितो भूभागस्य शोभामवलोक्य तपोवनमेवेदमिति निश्चिनोति—यस्मादस्मिन् भूभागे हरिणा निर्भयाः सन्तो विचरन्ति, फलपुष्पपल्लवैः सम्पन्ना वृक्षाः शोभन्ते, भूयिष्ठं कपिला गावः स्वच्छन्दं चरन्ति, क्षेत्राणि कृष्टभूमयो नात्र लक्ष्यन्ते, आश्रमवासिभिर्माध्याह्निके होमे वह्नौ तिल-यव-घृतादिहवनादुद्भूतः सुरभिधूमश्च तर्पयति घ्राणमिति निःसन्देहं तपोवनमेवेदमिति भावः॥ १२॥

* अये-इति। अये इत्याश्चर्ये शङ्कायां वा। आश्रमविरुद्धः = आश्रमनिवासाननुरूपः, नागरिकवेषत्वात्। एष जनः = काञ्चुकीयः। तपस्विजनोऽप्यत्र =

---

अच्छा भीतर चलूँ (भीतर जाकर) यह आदमी तो आश्रम के विरुद्ध ही मालूम होता है। (दूसरी ओर देखकर) यहाँ तपस्वी भी हैं। जाने में कोई दोष नहीं। अरे! स्त्री भी दिखलाई देती है।

काञ्चुकीयः—* स्वैरं स्वैरं प्रविशतु भवान्। सर्वजनसाधारण-माश्रमपदं नाम।

वासवदत्ता—† हम्।

पद्मावती—अम्मो परपुरुसदंसणं परिहरदि अय्या। भोदु, सुपरिबालणीओ खु मण्णासो। [अम्मो परपुरुषदर्शनं परिहरत्यार्या। भवतु, सुपरिपालनीयः खलु मन्न्यासः ‡]

काञ्चुकीयः—§ भोः! पूर्वं प्रविष्टाः स्मः। प्रतिगृह्यतामतिथिसत्कारः।

---

तपस्विसमुचितवेषोऽपि जनोऽत्र वर्त्तते। निर्दोषमुपसर्पणम् = अत्र तपस्विनो निवासेन मम गमनं न दोषावहमित्यर्थः। पुनः सशङ्कमाह—'अये स्त्रीजन इति। स्त्रीजनः = पद्मावत्यादिः।

* ब्रह्मचारिणं तपोवनप्रवेशे शङ्कमानं विभाव्य काञ्चुकीयो वदति—स्वैर-मिति। निःशङ्कमित्यर्थः। सर्वेति। सर्वजनप्रवेशयोग्यमित्यर्थः।

† वासवदत्ताऽपरिचितमेनं प्रविशन्तं दृष्ट्वाऽरुचिपूर्वकमाह—हमिति। हमिति—अरुचावसम्मतौ वा।

‡ अम्मो इति। अम्मो इति हर्षद्योतक आश्चर्यद्योतको वितर्कद्योतको वा निपातः। स च वासवदत्तां स्वशीलरक्षणे सातिशयं जागरूकां विभाव्य पद्मावती-मुखात् साश्चर्यं सहर्षं वाऽकस्मादुद्गतः। परिहरति = निषेधति। भवतु = अस्या इच्छानुसारं भवत्वित्यर्थः। सुपरिपालनीयः = सुखेन परिपालयितुं शक्यः। मन्न्यासः = अर्थिभगिनीरूपः।

§ काञ्चुकीयो वदति—भो इति। पूर्वं प्रविष्टाः स्मः = भवदागमनात् पूर्वं

---

कञ्चुकी—निःशङ्क चले आइये। आश्रम में किसी को रोक टोक नहीं है।

वासवदत्ता—हां!

पद्मावती—(आप ही आप) यह दूसरे पुरुष का मुँह देखना नहीं चाहती। अब मेरे न्यास की रक्षा बहुत सरल हो गयी।

कञ्चुकी—अजी! हम पहिले से आए हुए हैं। इससे हमारा अतिथि-सत्कार ग्रहण कीजिये।

ब्रह्मचारी—( आचम्य ) भवतु भवतु। निवृत्तपरिश्रमोऽस्मि* ।

यौगन्धरायणः—†भोः ! कुत आगम्यते, क्व गन्तव्यं, काधिष्ठानमार्यस्य ।

ब्रह्मचारी—भोः ! श्रूयताम् । राजगृहतोऽस्मि । ‡श्रुतिविशेषणार्थं वत्सभूमौ लावाणकं नाम ग्रामस्तत्रोषितवानस्मि ।

वासवदत्ता—( आत्मगतम् ) हा लावाणकं नाम । लावाणकसं-

---

वयमत्रागताः स्मः । तेन अत्रत्या वयं भवदातिथ्यकरणेऽधिकृताः स्मः । प्रतिगृह्यतामतिथिसत्कारः = अस्माभिः क्रियमाणा वैधीपूजा स्वीक्रियताम् ।

* ब्रह्मचारी वदति—भवतु इति । भवतु भवतु = तिष्ठतु तिष्ठतु अधिकं मास्तु, एतावानेवोपचारः पर्याप्त इत्यर्थः । निवृत्तपरिश्रमोऽस्मि = अपगतक्लमः सम्पन्नोऽस्मि ।

† यौगन्धरायणो वदति—भो इति । अधिष्ठानम् = निवासभूमिः ।

‡ ब्रह्मचारी वदति—भो इति । राजगृहतोऽस्मि = राजगृहादागतोऽस्मि । "अपादाने चाहीयरुहोः" इत्यनेन तत आगत इत्यर्थे तसिः । श्रुतिविशेषणार्थम् = श्रुतेर्विशिष्टज्ञानसम्पादनार्थमित्यर्थः । वत्सभूमौ = वत्सराज्ये । उषितवानस्मि = पूर्वं कञ्चित्कालं तत्र कृतनिवासोऽस्मि ।

---

ब्रह्मचारी—( आचमन कर ) बस रहने दीजिये । थकावट दूर हो गयी ।

यौगन्धरायण—महाराज ! कहाँ से आते हैं, कहाँ जायँगे और कहाँ आपका स्थान है ।

ब्रह्मचारी—अच्छा, सुनिये । मैं राजगृह से आ रहा हूं । वत्सराज के राज्य में लावाणक नाम का एक गाँव है । उसमें वेद पढ़ने के लिये मैं कुछ दिन तक ठहरा था ।

वासवदत्ता—( आप ही आप ) हा ! लावाणक !, लावाणक का नाम लेने से तो दुःख नवीन सा हो गया ।

कित्तणेण पुणो णवीकिदो विअ मे सन्दावो । [ ❀हा लावाणकं नाम । लावाणकसंकीर्तनेन पुनर्नवीकृत इव मे संतापः ]

**यौगन्धरायणः**—†अथ परिसमाप्ता विद्या ।

**ब्रह्मचारी**—न खलु तावत् ‡ ।

**यौगन्धरायणः**—§यद्यनवसिता विद्या, किमागमनप्रयोजनम् ?

**ब्रह्मचारी**—□तत्र खल्वतिदारुणं व्यसनं संवृत्तम् ।

**यौगन्धरायणः**—कथमिव △ ।

---

❀ ब्रह्मचारिणो वचनं श्रृण्वन्ती वासवदत्ता स्वगतमाह—हा लावाणकं नाम इति । हा = कष्टम् । लावाणकसंकीर्तनेन = ब्रह्मचारिणो वचने लावाणक—इति नाम्न उल्लेखेन । मे = मम । सन्तापः = पूर्वमनुभूतः प्रियतमवत्सराजविरहजनितः क्लेशः । लावाणकग्राम एव तस्यारम्भात् । पुनर्नवीकृतः = सद्यः समुत्पन्न इव दुःसहः संवृत्तः ।

† यौगन्धरायणः पृच्छति—अथ इति । अथ इति प्रश्ने । किमित्यर्थः । भवतो विद्या परिसमाप्ता किमिति प्रश्नः ।

‡ ब्रह्मचारी उत्तरयति—नेति । इदानीं यावन्न परिसमाप्तेत्यर्थः ।

§ पुनराह यौगन्धरायणः—यदीति । अनवसिता = असमाप्ता । यदि ते विद्या न समाप्ता तर्हि लावाणकं परित्यज्य कुतो हेतोरत्राऽऽगतोऽसीत्यर्थः ।

□ ब्रह्मचारी उत्तरयति—तत्रेति । तत्र खलु = लावाणकग्रामे । अतिदारुणम् = घोरम् । व्यसनम् = विपत् । संवृत्तम् = सम्पन्नम् ।

△ यौगन्धरायणः पृच्छति—कथमिव इति । कीदृशी विपत् संवृत्तेत्यर्थः ।

---

**यौगन्धरायण**—क्या विद्याध्ययन समाप्त हो गया ?

**ब्रह्मचारी**—अभी नहीं ।

**यौगन्धरायण**—जब अध्ययन समाप्त नहीं हुआ, तो यहाँ आने का क्या कारण ?

**ब्रह्मचारी**—वहाँ कठिन विपत्ति का चक्कर आ पड़ा ।

**यौगन्धरायण**—कैसा ?

ब्रह्मचारी—तत्रोदयनो नाम राजा प्रतिवसति ❀ ।

यौगन्धरायणः—श्रूयते तत्र भवानुदयनः । किं सः । †

ब्रह्मचारी—‡तस्यावन्तिराजपुत्री वासवदत्ता नाम पत्नी दृढमभिप्रेता किल ।

यौगन्धरायणः—§भवितव्यम् । ततस्ततः ।

ब्रह्मचारी—□ततस्तस्मिन् मृगयानिष्क्रान्ते राजनि ग्रामदाहेन सा दग्धा ।

वासवदत्ता—( आत्मगतम् ) अलिअं अलिअं एदं । जीवामि मंदभाआ । [ ○अलीकमलीकमेतत् । जीवामि मन्दभागा ] ।

---

❀ ब्रह्मचारी उत्तरयति—तत्रेति । तत्र = लावाणकग्रामे । प्रतिवसति = मृगयार्थं समागत्याऽधुना तत्र कृतनिवासोऽस्ति ।

† यौगन्धरायणो वदति—श्रूयत इति । श्रूयते = अस्माभिरप्याकर्ण्यते प्रसिद्धत्वात् । किं सः = स उदयनः किम् ? किं तस्यैव विषये भवता किमपि व्यसनं संवृत्तमित्युक्तम् ? अथवा स राजा उदयनः सम्प्रति किमारम्भोऽस्तीति प्रष्टुराशयः ।

‡ ब्रह्मचारी उत्तरयति—तस्येति । तस्य = राज्ञ उदयनस्य । दृढमभिप्रेता किल = दृढमत्यन्तम् अभिप्रेता इष्टा प्रिया । किल इति लोकवार्तायाम् ।

§ यौगन्धरायणो वदति—भवितव्यमिति । भवितुमर्हतीत्यर्थः ।

□ ब्रह्मचारी वदति—तत इति । मृगयानिष्क्रान्ते = आखेटकार्थं बहिर्निर्गते ।

○ वासवदत्ता स्वगतं वदति—अलिअं-इति । स मद्दाहवृत्तान्तः सर्वथा

---

ब्रह्मचारी—वहाँ पर आखेट के लिये उदयन नामक राजा रहते हैं ।

यौगन्धरायण—हाँ, उदयन का नाम सुना है, उनका क्या समाचार है ?

ब्रह्मचारी—उनकी अवन्तिराजकुमारी वासवदत्ता नाम की पत्नी बड़ी प्यारी थी ।

यौगन्धरायण—होगी, तो इससे क्या ?

ब्रह्मचारी—जब राजा शिकार खेलने गये, तब गाँव में आग लगने से वह जल गयी ।

**यौगन्धरायणः**— ततस्ततः ?

**ब्रह्मचारी**—*ततस्तामभ्यवपत्तुकामो यौगन्धरायणो नाम सचिव-स्तस्मिन्नेवाग्नौ पतितः।

**यौगन्धरायण**—सत्यं पतित इति। ततस्ततः।

**ब्रह्मचारी**—ततः प्रतिनिवृत्तो राजा तद्वृत्तान्तं श्रुत्वा तयोर्वियोग-जनितसन्तापस्तस्मिन्नेवाग्नौ प्राणान् परित्यक्तुकामोऽमात्यैर्महता यत्नेन वारितः †।

**वासवदत्ता**—( आत्मगतम् ) जाणामि जाणामि अय्यउत्तस्स मइ

---

मिथ्येत्यर्थः। दार्ढ्यद्योतनाय वीप्सा।

* ब्रह्मचारी प्राह—ततस्तामिति। ताम्=वासवदत्ताम्। अभ्यवपत्तु-कामः=अभ्यवपत्तुं वह्निदाहव्यसनात् समुद्धर्तुं कामो अभिलाषो यस्य सः। "व्यसन-साहाय्यमभ्यवपत्तिरिति कौटिल्यः"।

† ब्रह्मचारी वदति—तत इति। तयोर्वियोगजनितसन्तापः=तयोः पत्न्य-मात्ययोर्वियोगेन विश्लेषेण जनित उत्पन्नः सन्तापः अतिदुःखं यस्य सः। अमात्यैः =रुमण्वदादिभिः।

---

**वासवदत्ता**—( आप ही आप ) बिलकुल झूठ, मैं अभागिन तो अभी जीवित ही हूँ।

**यौगन्धरायण**—फिर क्या हुआ ?

**ब्रह्मचारी**—इसके बाद उसको बचाने के लिये मन्त्री यौगन्धरायण भी उसी आग में पतित हुआ।

**यौगन्धरायण**—सचमुच पतित हुआ। फिर ?

**ब्रह्मचारी**—फिर जब राजा को वापस आने पर यह समाचार मालूम हुआ तब उनके वियोग से दुःखी होकर वे भी आग में कूद कर प्राण देने को प्रस्तुत हो गये। मन्त्रियों ने बहुत कुछ समझा बुझा कर उन्हें रोका।

**वासवदत्ता**—( आप ही आप ) आर्यपुत्र का मुझ पर जैसा प्रेम है, मैं खूब जानती हूँ।

साणुक्कोसत्तणं [ जानामि ज्ञानाम्यार्यपुत्रस्य मयि सानुक्रोशत्वम् ❀ ]

यौगन्धरायण—ततस्ततः ।

ब्रह्मचारी—ततस्तस्याः † शरीरोपभुक्तानि दग्धशेषाण्याभरणानि परिष्वज्य राजा मोहमुपगतः ।

सर्वे—हा !

वासवदत्ता—( स्वगतम् ) सकामो दाणिं अय्य जोअंधराअणो होदु । [ सकाम इदानीमार्ययौगन्धरायणो भवतु ]

चेटी—भट्टिदारिए, रोदिदि खु इअं अय्या [ ‡ भर्तृदारिके रोदिति खल्वियमार्या ]

पद्मावती—साणुक्कोसाए होदव्वं [ § सानुक्रोशया भवितव्यम् ]

---

❀ वासवदत्ता स्वगतं वदति = जाणामि इति । सानुक्रोशत्वम् = दयार्द्रचित्तत्वं सहृदयत्वम् । मयि बाढं स्निह्यत्यार्य्यपुत्र इत्यर्थः ।

† ब्रह्मचारी वदति—ततस्तस्या इति । तस्याः = वासवदत्तायाः शरीरोपभुक्तानि = शरीरे देहे, उपभुक्तानि = उपयुक्तानि परिहितानि । दग्धशेषाणि = दग्धेभ्यः शेषाणि, एकदेशदग्धानीत्यर्थः । परिष्वज्य = उरसा आश्लिष्य । प्रियजनोपभुक्तवस्तुस्पर्शेण विरहापनोदनायेति भावः । मोहं = मूर्च्छाम् ।

‡ चेटी पद्मावतीं वदति—भट्टिदारिए इति । इयमार्या = अर्थिनो भगिनी ।

§ पद्मावती वदति—साणुक्कोसाए इति । सानुक्रोशया = परदुःखश्रवणद्रुतचित्तया ।

---

यौगन्धरायण—आगे क्या हुआ ?

ब्रह्मचारी—तदनन्तर वासवदत्ता के जलने से बचे हुए आभूषणों को छाती से लगा कर राजा मूर्च्छित हो गये ।

सब कोई—हा ! अफसोस ! अफसोस !!

वासवदत्ता—(आप ही आप) आर्य यौगन्धरायण की इच्छा पूर्ण हो ।

चेटी—राजकुमारी, यह रो रही है ।

पद्मावती—यह बहुत दयालु जान पड़ती है ।

**यौगन्धरायणः**—अथ किमथ किम् । प्रकृत्या सानुक्रोशा मे भगिनी* । ततस्ततः ।

**ब्रह्मचारी**—ततः शनैः शनैः †प्रतिलब्धसंज्ञः संवृत्तः ।

**पद्मावती**—दिट्ठिआ धरइ, मोहं गदो त्ति सुणिअ सुण्णं विअ मे हिअअं । [‡दिष्ट्या ध्रियते । मोहं गत इति श्रुत्वा शून्यमिव मे हृदयम्]

**यौगन्धरायणः**—ततस्ततः ?

**ब्रह्मचारी**—△ततः स राजा महीतलपरिसर्पणपांसुपाटलशरीरः

---

* यौगन्धरायणो वदति—अथ किमिति । भवत्या यथोच्यते तत्तथैवेत्यर्थः । शङ्कान्तरपरिहाराय त्वरया द्विरुक्तिः । प्रकृत्या = स्वभावतः ।

† ब्रह्मचारी वदति—ततः इति । प्रतिलब्धसंज्ञः = पुनः प्राप्तचेतन इत्यर्थः । संवृत्तः = सञ्जातः ।

‡ पद्मावती वदति—दिट्ठिआ इति । दिष्ट्या = सौभाग्येन । ध्रियते = जीवति, शून्यमिव = चेतनारहितमिव । अनेन वचनेन पद्मावत्या अपि राज्ञि उदयने रतिरङ्कुरितेति सूचितम् ।

△ब्रह्मचारी वदति—ततः स राजेति । महीतलपरिसर्पणपांसुपाटलशरीरः = महीतले,भूमौ यत्परिसर्पणं परिलुण्ठनं तेन लग्नाः ये पांसवो धूलयस्तैः पाटलं श्वेतरक्तं धूलिधूसरितं शरीरं यस्य सः तथाविधः । प्रियशिष्ये = वीणावादनादिलालित-

---

**यौगन्धरायण**—हाँ, बहुत ठीक है । सचमुच मेरी बहन का हृदय दया से भरा है । फिर क्या हुआ ?

**ब्रह्मचारी**—तब धीरे २ उनकी मूर्च्छा दूर हुई ।

**पद्मावती**—बड़े भाग्य की बात है कि वे जीते हैं । 'मूर्च्छित हो गये' यह सुनकर मेरा हृदय सूना सा हो गया ।

**यौगन्धरायण**—फिर क्या हुआ ?

**ब्रह्मचारी**—इसके बाद कुछ समय तक वे पृथ्वी पर लोटते और छटपटाते रहे । उनका शरीर धूल से भर गया । फिर सहसा उठ बैठे और 'हा वासवदत्ता !

सहसोत्थाय 'हा वासवदत्ते ! हा अवन्तिराजपुत्रि ! हा प्रिये ! हा प्रियशिष्ये !' इति किमपि किमपि बहु प्रलपितवान् । किं बहुना,

नैवेदानीं तादृशाश्चक्रवाका
नैवाप्यन्ते स्त्रीविशेषैर्वियुक्ताः ।
धन्या सा स्त्री यां तथा वेत्ति भर्ता
भर्तृस्नेहात् सा हि दग्धाऽप्यदग्धा ॥१३॥

कलाविधौ मया शिक्षिते प्रियान्तेवासिनि । "प्रियशिष्या ललिते कलाविधौ" इति कालिदासोक्तेः । किं बहुना = वासवदत्ताविरहकातरस्योदयनस्य दुर्दशां कियद्वर्णयामि संक्षेपेणैवोक्तमित्यर्थः ।

उदयनस्य विरहवेदनामहत्त्वं स्तौति—नैवेति ।

( अन्वयः ) इदानीं चक्रवाकाः तादृशाः नैव, स्त्रीविशेषैर्वियुक्ताः अन्येऽपि नैवाप्यन्ते, सा स्त्री धन्या, भर्त्ता यां तथा वेत्ति, हि सा दग्धा अपि भर्तृस्नेहात्, अदग्धा ॥ १३ ॥

( टीका ) इदानीम् = एषु दिनेषु । चक्रवाकाः = प्रियाविरहशोकासहनशीलतया प्रसिद्धाः द्वन्द्वचराः कोकाख्याः पक्षिविशेषाः । तादृशाः = तथाविधाः शोकाकुलाः यथा सम्प्रति राजा उदयनः । नैव = नोपलभ्यन्ते । तेषां चक्रवाकपक्षिणां तु प्रातः पुनः प्रियादर्शनप्रत्याशा हृदि तिष्ठतीति राज्ञा उदयनेन न तेषां किञ्चिदपि साम्यमिति भावः । स्त्रीविशेषैर्वियुक्ताः = स्त्रीविशेषैः = रूपलावण्यसतीत्वादिगुणाविक्ययुक्ताभिः स्त्रीभिरित्यर्थः । वियुक्ताः = विश्लेषिताः विरहाकुलाः । अन्येऽपि = इत-

हा अवन्तिराजकुमारी ! हा प्रिये ! हा प्रियशिष्ये !' इत्यादि न जाने क्या क्या बकबक करते रहे । अधिक क्या कहूँ ।

इस समय न तो चकवा चकई नामक पक्षी ही और न प्रधान प्रधान पतिव्रताओं के वियोगी ही कोई वैसे हैं, जैसे कि राजा हैं। जिसका स्वामी इस प्रकार प्यार करता है, वह स्त्री धन्य है । यद्यपि वह जल गयी है, तो भी उसके स्वामी का उस पर जैसा प्रेम है, उससे तो प्रतीत होता है कि, वह जीती ही है ॥ १३ ॥

**यौगन्धरायणः**—*अथ भोः ! तं तु पर्यवस्थापयितुं न कश्चिद्यत्नवानमात्यः ?

रेऽपि प्रख्याताः प्रणयिनो रामदुष्यन्तादयः । तादृशा इति पूर्वानुषङ्गः । नैवाप्यन्ते = नोपलभ्यन्ते । उदयनस्तु विरहशोकसंवेदनायां सर्वानप्येतानतिशेत इति भावः । सा स्त्री = वासवदत्ता । धन्या = सौभाग्यवती अस्तीत्यर्थः । भर्ता = उदयनः । याम् = वासवदत्ताम् । तथा = तेन लोकातिगप्रकारेण । वेत्ति = जानाति । हि = निश्चयेन । सा = स्त्री । दग्धाऽपि = दाहं प्राप्ताऽपि । भर्तृस्नेहात् = पत्युः स्नेहातिरेकेण । अदग्धा = जीविता अस्ति ।

अत्र स्नेहशब्दः श्लेषेण दाहोपशमनकारकपदार्थानामपि द्योतकः । उपरतामपि यां भर्ता एवं स्मरति सा जीवतीत्येव मन्तव्यमिति भावः । अस्मिन् पद्ये "शालिनी" वृत्तम् ।

राज्ञ उदयनस्य विरहमहत्त्वं स्तुवन् ब्रह्मचारी वदति—जगति द्वन्द्वचराश्चक्रवाकाः खलु नियतिनिर्मितं रात्रिवियोगं सहमानाः विरहिण इति प्रख्यायन्ते, परन्तु तेषां प्रातः पुनः प्रियादर्शनप्रत्याशा हृदि तिष्ठतीति अत्यन्तोपरतां प्रियामुद्दिश्य विरहकातरस्य राज्ञ उदयनस्य नेषदपि तैः साम्यं सम्भवति । इन्दुमती-शकुन्तला-सीतादिभिः स्त्रीरत्नैः वियुक्ता अज-दुष्यन्त-रामादयो विरहिणोऽपि उदयनविरहस्य षोडशीमपि कलां न बिभ्रति । लोकोत्तर एवाय विरही राजा उदयनः । किञ्च यामुपरतां स्त्रियं भर्ता इत्थं लोकातिगप्रकारेण चिन्तयति, नूनं लीलावतीकुलशेखरमणिरेव सा रमणी । वह्निना दग्धाऽपि सा भर्तुरलौकिकस्नेहोद्रेकात्मकवारिणा सिक्तेव अदग्धा जीवत्येवेति सम्भावयामः । अहो ! लोकातिगं वासवदत्तोदयनयोः प्रेमेति भावः ॥ १३ ॥

*यौगन्धरायणो वदति—अथ भोः-इति । अथ भोः = किम् । तम् = उदयनम् । पर्यवस्थापयितुम् = समाश्वासनादिभिः प्रकृतिस्थं सम्पादयितुम् । केनाप्यमात्येन समाश्वास्य किं स प्रकृतिस्थो न सम्पादित इति प्रश्नः ।

**यौगन्धरायण**—क्या उन को शान्त करने का प्रयत्न कोई मन्त्री नहीं करता है ?

ब्रह्मचारी—*अस्ति रुमण्वान्नामामात्यो दृढं प्रयत्नवांस्तत्रभवन्तं पर्यवस्थापयितुम्। स हि,

अनाहारे तुल्यः सततरुदितक्षामवदनः
शरीरेऽसंस्कारं नृपतिसमदुःखं परिवहन्।

* ब्रह्मचारी वदति—अस्तीति। दृढम् = बाढम्।

उदयनस्य समाश्वासने रुमण्वतोऽमात्यस्य प्रयत्नं वर्णयति—अनाहार इति।

( अन्वयः ) स हि, अनाहारे तुल्यः सततरुदितक्षामवदनः नृपतिसमदुःखं शरीरे संस्कारं परिवहन्, दिवा वा रात्रौ वा यत्नैः नरपतिं परिचरति, यदि नृपः सद्यः प्राणान् त्यजति, तस्यापि उपरमः ॥ १४ ॥

( टीका ) स हि—इति गद्यस्थेनाऽन्वयः सः = रुमण्वान्। हि = निश्चयेन। अनाहारे = भोजनाग्रहणे। यद्वा-अनाहार इति राज्ञो विशेषणम्। राज्ञि अगृहीताहारे सतीत्यर्थः। तुल्यः = समः। नृपतिनेति शेषः। यथा पत्नीशोकेन राजा आहारं न गृह्णाति, तथा स्वामिभक्त्युदयेन रुमण्वानपि आहारं न गृह्णातीत्यर्थः। सततरुदितक्षामवदनः = सततं निरन्तरं यद्रुदितं तेन क्षामं कृशं वदनं मुखं यस्य सः। यथा राज्ञो वदनं निरन्तरं पतद्भिरश्रुभिर्मलिनं भवति, तथैव रुमण्वतोऽपीति साम्यम्। नृपतिसमदुःखम् = नृपतिनोदयनेन समं सदृशं दुःखं कष्टं यस्मिन् कर्म्मणि यथा स्यात्तथेति। शरीरे = देहे। संस्कारमसंस्कारमिति च द्विविधश्छेदः। नृपतिः यथा स्वस्य राजतयाऽवश्यकर्तव्यं गन्धमाल्यानुलेपनोद्वर्तनादिकं शरीरसंस्कारं कष्टेन परिवहति, तथैव रुमण्वानपि राजाऽमात्योचितं शरीरसंस्कारमनिच्छयैव करोतीत्यर्थः। यद्वा दुःखितो राजावश्यकर्त्तव्यमपि संस्कारमनादृत्य शरीरेऽसंस्कारं परिवहति, तथैव रुमण्वानपीत्यर्थः। दिवा वा रात्रौ वा

ब्रह्मचारी—हाँ, रुमण्वान् नाम का एक मन्त्री है, जो राजा को धीरज धराने का बड़ा प्रयत्न करता है।

वह राजा के भोजन न करने से स्वयं भी नहीं भोजन करता, सदा रोते रहने के कारण जैसे राजा का मुख मलीन हो गया है, वैसे ही उसका भी। राजा के समान ही शोक दुःख प्रकट करने वाली उसकी शारीरिक दशा भी है।

दिवा वा रात्रौ वा परिचरति यत्नैर्नरपतिं
नृपः प्राणान् सद्यस्त्यजति यदि तस्याप्युपरमः ॥१४॥

वासवदत्ता—( स्वगतम् ) दिट्ठिआ सुणिक्खित्तो दाणीं अय्यउत्तो । [ दिष्ट्या *सुनिक्षिप्त इदानीमार्यपुत्रः ]

=दिवसे च रात्रौ च सततमित्यर्थः । यत्नैः=अनेकविधैः सान्त्वनाद्यैरुपायैः । नृपतिं=राजानमुदयनम् । परिचरति=सेवते । यदि=चेत् । नृपः=राजा उदयनः । सद्यः=आशु । प्राणान्=असून् । त्यजति=मुञ्चति । वर्तमानसामीप्ये लट् । अमोक्ष्यदित्यर्थः ( तदा ) तस्यापि=रुमण्वतोऽपि । उपरमः=प्राणोपरमः जीवितावसानम् ( अभविष्यत् ) । अस्मिन् पद्ये "शिखरिणी" वृत्तम् ।

रुमण्वता क्रियमाणं राज्ञः समाश्वासप्रकारं वर्णयन् ब्रह्मचारी प्राह—शोकमग्नो राजा यथाहारं न गृह्णाति तदा रुमण्वानपि अकृतभोजन एव तिष्ठति, यथा च राजा शोकातिरेकेण निरन्तररुदितोच्छूननयनो भवति, रुमण्वानपि स्वामिनं रुदन्तं दृष्ट्वा तद्दुःखेन स्वयं रोदिति । किञ्च, राजा केवलं राजभावमहत्तासंरक्षणाय दुःखदुःखेन शरीरेऽत्यावश्यकं संस्कारं वहति, तथैव रुमण्वानपि अनिच्छन्नेव अमात्योचितं शरीरसंस्कारं वहति । यद्वा—यथा राजा शरीरे आवश्यकस्यापि गन्धमाल्यानुलेपनोद्वर्तनादिसंस्कारस्याभावमेव बहुमन्यते तथैवाऽमात्यो रुमण्वानपि राजानं छायेवानुसरन् स्वयमप्यसंस्कृताङ्गस्तिष्ठति । किञ्च अहोरात्रं बहुविधैः सान्त्वनाद्युपायैः नरपतिं शुश्रूषते । यदि नृपः शोकातिरेकात् सद्यः प्राणानत्यक्ष्यत्तदाऽविलम्बं रुमण्वतोऽपि प्राणोपरमोऽभविष्यत् । इत्थममात्यो रुमण्वान् राजानमन्यदुष्करैरुपायैः सान्त्वयति इति भावः ॥१४॥

*वासवदत्ता स्वगतं वदति–दिट्ठिआ-इति । दिष्ट्येति हर्षे । इदानीम्=मद्वियोगदुःखदशायाम् । सुनिक्षिप्तः=विश्वस्तस्य स्निग्धस्य रुमण्वतो हस्ते निक्षेपरूपतां प्राप्तः इति तस्य सुरक्षाविषये निश्चिन्ताऽहमानन्दमनुभवामीत्यर्थः ।

वह रात दिन बड़े ही उद्योग से राजा की देख-रेख करता है । यहाँ तक कि राजा प्राण छोड़ने को उद्यत हो, तो वह भी वैसा करने को तैयार हो जाता है ॥१४॥

वासवदत्ता—भाग्य से ही मेरे स्वामी का भार एक उत्तम पुरुष के हाथ में गया ।

यौगन्धरायणः—( आत्मगतम् ) अहो *महद्भारमुद्वहति रुमण्वान् । कुतः,

सविश्रमो ह्ययं भारः प्रसक्तस्तस्य तु श्रमः ।
तस्मिन् सर्वमधीनं हि यत्राधीनो नराधिपः ॥१५॥

*यौगन्धरायणः आत्मगतं वदति—अहो इति । महद्भारम्=अत्र महदिति क्रियाविशेषणं पृथक् पदम् । इतरैर्वोढुमशक्यं राजशरीररक्षणरूपमतिकष्टेन यथा स्यात्तथा राजसंरक्षणधुराम् । अत्र महाभार इत्येव पाठः साधुः ।

रुमण्वतो महाभारोद्वहनं समर्थयते—कुतः—सविश्रम इति ।

( अन्वयः ) हि अयम् भारः सविश्रमः, तस्य तु प्रसक्तः श्रमः ( अस्ति ) हि यत्र नराधिपः अधीनः, तस्मिन् सर्वमधीनम् ॥१५॥

( टीका ) हि=निश्चयेन । अयम्=मया स्वयं धृतः । राजपत्न्याः वासवदत्ताया रक्षणरूपः । भारः=गुरुतरकार्यरूपा धूः । राजपत्नीरक्षणकार्यस्य बहुप्रयाससाध्यत्वात्तत्र भारशब्दः उपचरितः । स-विश्रमः=विश्रामसहितः । पद्मावतीसन्निधौ वासवदत्तायाः न्यसनात् इदानीं स भारोऽपगतप्राय एवेत्यर्थः । तस्य तु =रुमण्वतस्तु । प्रसक्तः=सततः, इदानीमप्यनुवृत्त इत्यर्थः । श्रमः=श्रमजनको राजरक्षणरूपो भारः अस्ति । हि=यस्मात् कारणात् । यस्मिन्=रुमण्वति । नराधिपः=प्रजापालको राजा उदयनः । अधीनः=रक्षणीयत्वेनायत्तः । तस्मिन्=तत्र, राजरक्षणभारनम्रे रुमण्वति । सर्वम्=अखिलं राज्यकार्यजातम् । अधीनम्=आयत्तं भवेत् । "अनुष्टुब्" वृत्तम् ।

रुमण्वतो महाभारोद्वहनमहत्तां विमृशन् यौगन्धरायणः स्वगतमाह—मया हि राजपत्न्याः वासवदत्तायाः रक्षणरूपो भारः स्वयं गृहीतः, रुमण्वता च राजरक्षण-

यौगन्धरायण—( आप ही आप ) अहा ! रुमण्वान् कितने बड़े बोझ को सम्भाले हुए है । क्योंकि—

मेरा तो यह भार कुछ हलका हो गया है, पर रुमण्वान् का भार पहले ही का सा बना हुआ है ! जिसके हाथ में राजा की देखरेख है, उसके ही आधीन सब कुछ है । उसका बोझ बहुत ही चढ़ा बढ़ा समझना चाहिये ॥१५॥

( प्रकाशम् ) अथ भोः ! *पर्यवस्थापित इदानीं स राजा ।

ब्रह्मचारी—†तदिदानीं न जाने । इह तया सह हसितम्, इह तया सह कथितम्, इह तया सह पर्युषितम्, इह तया सह कुपितम्, इह तया सह शयितम्, इत्येवं तं विलपन्तं राजानममात्यैर्महता यत्नेन तस्माद् ग्रामाद् गृहीत्वापक्रान्तम् । ततो निष्क्रान्ते राजनि प्रोषितनक्षत्रचन्द्रमिव नभोऽरमणीयः संवृत्तः स ग्रामः । ततोऽहमपि निर्गतोऽस्मि ।

रूपो भारो गृहीतः । तत्र मम भारस्तु वासवदत्तायाः पद्मावतीहस्ते विन्यसनात् इदानीमपगतप्राय एव । रुमण्वतो भारस्तु अद्याप्यनुवर्तत एव । किञ्च—राजरक्षणभारो हि सर्वतो महीयान्, यतः राजरक्षणं हि यदधीनं भवेत् सकलं राज्यकार्यजातमपि तदधीनमेव भवेत् । तस्मादितरदुर्वहं महान्तं भारं सम्प्रति रुमण्वान् वहतीति भावः॥

*यौगन्धरायणः प्रकाशमाह—अथ भोः-इति । पर्यवस्थापितः = रुमण्वता परिचरणैः राजा स्वां प्रकृतिम् आपादितः किमिति प्रश्नः ?

† ब्रह्मचारी उत्तरयति—तदिदानीमिति । इह = अस्मिन् देशे । तया सह = वासवदत्तया सह । हसितम् = हास्यरसोऽनुतः । कथितम् = वार्तालापः कृतः । पर्युषितम् = अध्युषितम् । कुपितम् = कृतककोप उद्भावितः । शयितम् = शयनीयमारचितम् । महता यत्नेन = गन्तुमनिच्छतोऽपि गमनसम्पादनरूपेणेत्यर्थः । अपक्रान्तम् = अपसृतम् । ततः = तस्माल्लावाणकग्रामात् । प्रोषितनक्षत्रचन्द्रमिव नभः = प्रोषितान्यन्तर्हितानि मेघावृतानि नक्षत्राणि तारकाः, चन्द्र इन्दुश्च यत्र तत्तादृशमाकाशमिव । अरमणीयः = शून्यः । ततः तेन हेतुना तस्माद् ग्रामाच्चाऽहमपि प्रस्थितोऽस्मीति राजा पर्यवस्थापितो नवेति वर्तमानवृत्तं न जान इति सम्बन्धः ।

( प्रकट ) तो क्या रुमण्वान् ने राजा को सम्हाल कर स्थिर कर लिया ?

ब्रह्मचारी—यह मैं नहीं जानता । 'यहाँ उसके साथ हँसा था, यहाँ उसके साथ भाषण किया था, यहाँ उसके साथ बैठा था, यहाँ उससे कोप किया था', यहाँ उसके साथ शयन किया था', इस प्रकार कह कह कर रोते हुए राजा को मन्त्री लोग बड़े यत्न के साथ उस गाँव से लेकर चले गये । राजा के चले जाने के बाद चन्द्रमा और नक्षत्रों से शून्य आकाश के सदृश वह ग्राम अरमणीय हो गया । तदनन्तर मैं भी वहाँ से बाहर चल दिया ।

तापसी—सो खु गुणवंतो णाम राआ, जो आअन्तुएण वि इमिणा एव्वं पसंसीअदि। [ * स खलु गुणवान् नाम राजा, य आगन्तुकेनाऽप्यनेनैवं प्रशस्यते। ]

चेटी—भट्टिदारिए! किंणु खु अवरा इत्थिआ तस्स हत्थं गमिस्सदि [ † भर्तृदारिके! किंनु खलु अपरा स्त्री तस्य हस्तं गमिष्यति। ]

पद्मावती—( आत्मगतम् ) ‡मम हिअएण एव्व सह मंतिदं। [ मम हृदयेनैव सह मन्त्रितम् ]

ब्रह्मचारी— आपृच्छामि भवन्तौ। गच्छामस्तावत्।

---

* तापसी वदति—सो खु–इति। गुणवान् = कन्याजनलोभनीयनिरतिशयसौन्दर्यदयालुत्वादिगुणसम्पन्नः। आगन्तुकेनाऽपि = देशान्तरवासिना अपरिचितेन पान्थेनाऽपि।

† तदेवानुमोदमाना चेटी आह—भट्टिदारिए–इति। किन्तु खलु = अपि नाम। अपरा स्त्री = काऽपि भाग्यवती राजवनिता। तस्य = उदयनस्य। हस्तं गमिष्यति = तत्पाणिपीडनसौभाग्यं लप्स्यत इति प्रश्नः। वासवदत्ताविरहे तस्य विरहदुरवस्थाश्रवणेन सर्वथाऽसम्भावितमप्येतज्जन्मान्तरीयपुण्यबलसञ्जातदैवानुकूल्यायाः कस्याश्चिद् कन्यायाः सौभाग्येन यदीदं सम्भवेत्, नूनं धन्यैव सा सम्पद्येतेति भावः।

‡ पद्मावती आत्मगतं वदति—मम हिअएण–इति। मन्त्रितम् = जिज्ञासितम्। मम हृदयेऽपीदृश्येव जिज्ञासोदेतीति भावः।

§ ब्रह्मचारी वदति—आपृच्छामीति। आपृच्छामि = युवयोरनुज्ञामभिलषामीत्यर्थः। अत्र वासवदत्तोदयनयोः दुरवस्थादर्शनेन संभ्रान्तमतिना ब्रह्मचारिणा आपृच्छामीतिप्रयोगे आङि नुपृच्छ्योरित्यात्मनेपदं नानुस्मृतम्।

---

तापसी—वह राजा बहुत ही गुणवान् मालूम होता है, जिसकी प्रशंसा यह मुसाफिर भी कर रहा है।

चेटी—राजकुमारी, क्या वह दूसरा ब्याह करेगा?

पद्मावती—( आप ही आप ) मेरे मन की ही बात कही।

ब्रह्मचारी—जब आप दोनों की आज्ञा हो, मैं चला जाऊँ।

**उभौ**—गम्यतामर्थसिद्धये* ।

**ब्रह्मचारी**—तथाऽस्तु । ( निष्क्रान्तः )

**यौगन्धरायणः**—†साधु, अहमपि तत्र भवत्याऽभ्यनुज्ञातो गन्तुमिच्छामि ।

**काञ्चुकीयः**—तत्रभवत्याभ्युनुज्ञातो गन्तुमिच्छति किल ।

**पद्मावती**—अय्यस्स भइणिआ अय्येण विना उक्कण्ठिस्सिदि [ ‡ आर्यस्य भगिनिकाऽऽर्येण विनोत्कण्ठिष्यते ]

**यौगन्धरायणः**—△साधुजनहस्तगतैषा नोत्कण्ठिष्यति । ( काञ्चुकीयमवलोक्य ) गच्छामस्तावत् ।

---

*अर्थसिद्धये = अपरिसमाप्तविद्यासम्पादनाय ।

† यौगन्धरायणो वदति—साध्विति । साधु = ममाभ्यर्थितं भवत्यानुमतमिति धन्यवादो मया दीयत इत्यर्थः । तत्रभवत्या = पद्मावत्या । कृतकृत्योऽहमिदानीं जिगमिषामीत्यर्थः ।

‡ पद्मावती वदति—अय्यस्स इति । उत्कण्ठिष्यते—भवन्तं विना भवद्विरहे दुर्मना भविष्यतीत्यर्थः ।

△ यौगन्धरायणो वदति—साधुजनेति । साधुजनहस्तगता = साधुजनस्य सज्जनस्य तत्रभवत्याः, हस्तं गता—निरपायं संश्रयमाश्रिता नोत्कण्ठिष्यति = नोत्सुका भविष्यति ।

---

**दोनों**—आप अपने अर्थसिद्धि के लिये जाइये ।

**ब्रह्मचारी**—अच्छा । ( चला गया )

**यौगन्धरायण**—अच्छा । यदि आप आज्ञा दें, तो मैं भी जाऊँ ।

**कञ्चुकी**—आप की आज्ञा पाकर ये जाना चाहते हैं ।

**पद्मावती**—आपके बिना आपकी बहन बहुत उदास होगी ।

**यौगन्धरायण**—इसको अच्छा संग मिल गया, इससे उदास न होगी । ( कञ्चुकी को देख कर ) अब मैं जाता हूँ ।

काञ्चुकी:——गच्छतु भवान् पुनर्दर्शनाय*।

यौगन्धरायणः——तथास्तु । ( निष्क्रान्तः )

काञ्चुकीय——† समय इदानीमभ्यन्तरं प्रवेष्टुम् ।

पद्मावती——अय्ये ! वंदामि । [ आर्ये ! वन्दे । ]

तापसी——जादे ! तव सदिसं भत्तारं लभेहि ।

[ जाते ! तव सदृशं भर्त्तारं लभस्व ‡ ]

वासवदत्ता——अय्ये ! वंदामि दाव अहं ।

[ आर्ये ! वन्दे तावदहम् ]

तापसी——तुवं पि अइरेण भत्तारं समासादेहि ।

[ त्वमपि अचिरेण भर्तारं समासादय ]

वासवदत्ता——अणुग्गहीदह्मि । [ अनुगृहीतास्मि ]

काञ्चुकीयः——§ तदागम्यताम् , इत इतो भवति ! । सम्प्रति हि,

---

* पुनर्दर्शनाय = पुनस्त्वाऽऽगमनं ममाभिप्रेतमित्यर्थः ।

† काञ्चुकीयो वदति—समय इति । अभ्यन्तरम् = उटजाभ्यन्तरम् ।

‡ तापसी आशीर्वदति—जादे-इति । सदृशम् = अनुगुणम् ।

§ काञ्चुकीयो वदति—तदागम्यतामिति । तदागम्यताम् = तत्तस्मात्,

---

कञ्चुकी—जाइये, फिर दर्शन दीजियेगा ।

यौगन्धरायण—बहुत अच्छा ( चला गया )

कञ्चुकी—भीतर चलने का समय हो गया ।

पद्मावती—आर्ये ! मैं प्रणाम करती हूँ ।

तापसी—बेटी, तुम्हारे अनुकूल ही स्वामी मिले ।

वासवदत्ता—आर्ये ! मैं भी प्रणाम करती हूँ ।

तापसी—तेरा भी पति तुझे तुरत मिल जाय ।

वासवदत्ता—आपने बड़ी कृपा की ।

कञ्चुकी—अच्छा, आइये । इधर आइये ।

खगा वासोपेताः सलिलमवगाढो मुनिजनः
प्रदीप्तोऽग्निर्भाति प्रविचरति धूमो मुनिवनम् ।
परिभ्रष्टो दूराद् रविरपि च संक्षिप्तकिरणो
रथं व्यावर्त्यासौ प्रविशति शनैरस्तशिखरम् ॥१६॥

( निष्क्रान्ताः सर्वे )

इति प्रथमोऽङ्कः ।

---

समयः समुपस्थितः इति हेतोरुटजाभ्यन्तरं प्रवेष्टुं प्रस्थीयताम् ।

सन्ध्यासमयं वर्णयति—सम्प्रति हि-खगा इति ।

(अन्वयः) हि सम्प्रति, खगाः वासोपेताः, मुनिजनः सलिलमवगाढः, प्रदीप्तः, अग्निः, भाति, धूमः, मुनिवनं प्रविचरति, अपि च दूरात्परिभ्रष्टः संक्षिप्तकिरणः असौ रविः रथं व्यावर्त्य शनैः अस्तशिखरं प्रविशति ।

( टीका ) हि = निश्चयेन । सम्प्रति = इदानीम्, निशासामीप्ये । खगाः— पक्षिणः । वासोपेताः = वासं स्वस्वनीडादिकमुपेताः प्राप्ताः । मुनिजनः = मुनिलोकः । सायन्तनकर्मकरणार्थम् । सलिलमवगाढः = स्नातुमवतीर्णः । प्रदीप्तः = प्रकर्षेण दीप्तः, होमार्थं प्रज्वलितः । अग्निः = वह्निः । भाति = प्रकाशते । धूमः = अग्निजन्यः । मुनिवनम् = मुनीनामाश्रमं तपोवनम् । प्रविचरति = प्रकर्षेण विचरति, उत्थायोत्थायोद्गच्छति । अपि च = अन्यच्च । दूरात् = सुदूरप्रदेशात्, गगनमध्यात् ।

---

सन्ध्या हो गयी । इस समय-चिड़ियाँ अपने घोसलों में चली गयीं, मुनि लोग स्नान करने लगे, आग बल गयी, तपोवन में धुआँ फैल गया और बहुत ऊँचे से गिरे हुए सूर्य भी किरणों को समेट और रथ लौटा कर धीरे २ अस्ताचल को आ रहे हैं ॥ १६ ॥

( सब चले गये )

परिभ्रष्टः = प्रच्युतः । अधः पतितः, इव-इति शेषः । संक्षिप्तकिरणः = संक्षिप्ताः स्वात्मन्युपसंहृताः किरणाः रश्मयो येन तथाभूतः । असौ रविः = सूर्योऽपि । रथं = 'सप्त युञ्जन्ति रथमेकचक्रम्' इत्यागमप्रसिद्धं स्वकीयं यानम् । व्यावर्त्य = नियम्य । शनैः = मन्दम् । अस्तशिखरम् = अस्ताचलशृङ्गम् । प्रविशति = याति । अत्र सायं सन्ध्या यातीति तात्पर्यम् । प्रथमतो गिरिगमनमेव सामान्यजनदुःशकं भवति, शिखरगमनं तु ततोऽपि दुःशकम् । अस्तगिरेः शिखरे रथचारणव्यसनशीलः, किन्तु दूरात् परिभ्रष्टतयोत्तरकालार्थं समुपजातचेतनो रविरनिष्टभयेन किरणानात्मन्युपसंहृत्य रथं जवगतेर्नियम्य शनैरस्तशिखरं प्रविशतीत्यर्थो ध्वनितः । सूर्यदशावर्णनभङ्गया संसारिणो जनस्योपचयापचयौ नियताविति च ध्वन्यते । "शिखरिणी" वृत्तम् ।

सन्ध्यासमयं वर्णयन् काञ्चुकीयो वदति—सम्प्रति हि सन्ध्यासमये समासन्ने आहारान्वेषणार्थं दिनं परिभ्रान्ताः पक्षिगः स्वस्वनीडेषूपायान्ति, कर्मठो मुनिलोकः सायन्तनकर्मसम्पत्तये नदीतटाकादिजलं स्नातुमवतीर्णः, ततः मुनिभिर्होमार्थं प्रज्वलितोऽग्निः प्रकाशते, हविर्द्रव्यप्रक्षेपेण समुत्थितो धूमः तपोवनं परितः प्रसरति । किञ्च दूराद्गगनमध्यादधः पतित इव स्वात्मनि समुपहृतसमस्तकिरणोऽसौ रविः सप्ताश्वं स्वकीयं रथं जवगतेर्निवार्य शनैरस्ताचलशृङ्गं प्रविशति । ततः सन्ध्यासमयोऽयमिति उटजाभ्यन्तरं प्रविश्यतामिति भावः ।

स्वप्नवासवदत्तस्य व्याख्याने "श्रीः" पदाङ्किते ।
नारायणीये तस्यायमादिमोऽङ्कः समाप्तिमैत् ॥ १ ॥

इति श्रीमन्नारायणशास्त्रिणा प्रणीतायां स्वप्नवासवदत्तस्य "श्री"-रित्यभिधायां व्याख्यायां प्रथमोऽङ्कः ॥ १ ॥

पहला अङ्क समाप्त

—

# द्वितीयोऽङ्कः* ।

( ततः प्रविशति चेटी )

**चेटी**—कुञ्जरिए ! कुञ्जरिए ! कहिं कहिं भट्टिदारिआ पदुमावदी। किं भणासि, एसा भट्टिदारिआ माहवीलदामण्डवस्स पस्सदो कन्दुएण कीलदित्ति । जाव भट्टिदारिअं उवसप्पामि । ( परिक्रम्यावलोक्य )

## अथ द्वितीयोऽङ्कः ।

* अत्र द्वितीयेऽङ्के—पद्मावत्याः स्ववयस्याभिः सह कन्दुकक्रीडा, सखीभिः विश्रम्भालापः, प्रथमाङ्कसूचितस्य पद्मावत्या उदयनविषयकाभिलाषस्य सम्यक् परिपोषः, पद्मावतीभ्रातुर्महाराजदर्शकस्य वत्सराजायोदयनाय पद्मावतीं दातुमध्यवसायः, विवाहपूर्वाङ्गभूतकौतुकमङ्गलाचारानुष्ठानत्वरा, इत्येवमादयोऽर्थाः प्रतिपादयिष्यन्ते ।

तत्र कन्दुककेलिप्रसक्तायाः पद्मावत्याः प्रवेशसंसूचनाय तदनुगुणस्य चेटीरूपस्य पात्रस्य प्रवेशं तावदुपक्षिपति— ततः प्रविशति चेटीति । ततः = द्वितीयाङ्कप्रारम्भे । चेटी = परिचारिका । प्रविशति = रङ्गमञ्चमुपागच्छति । अथ रङ्गस्थलं प्रविष्टा चेटी कुञ्जरिकाख्यामपरां चेटीं नामोल्लेखपुरःसरमामन्त्र्य,

"किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत् ।
श्रुत्वेवानुक्तमप्येकस्तत् स्यादाकाशभाषितम् ॥"

इति लक्षणानुगुणाकाशभाषितविधया वचनमुपक्षिपति—कुञ्जरिए इति । कुञ्जरिक इत्याह्वाने वीप्सया त्वरा द्योत्यते। सम्प्रति राजदारिका पद्मावती कुत्रास्ति, तत्कथयेत्यर्थः । किं भणसि = किं कथयसि । माधवीलतामण्डपस्य = वासन्तीलतानिकुञ्जस्य । पार्श्वतः = समीपे ।

### दूसरा अङ्क

**चेटी**—कुञ्जरिके ! ओ कुञ्जरिके ! राजकुमारी पद्मावती कहाँ है ? क्या कहती है ? राजकुमारी माधवीलतामण्डप के समीप गेंद खेल रही है ? तो मैं

अम्मो इअं भट्टिदारिआ उक्करिद्कण्णचूलिएण वाआमसञ्जादसेदबिन्दुविइत्तिदेण परिस्सन्तरमणीअदंसणेण मुहेण कन्दुएण कीलन्दी इदो एव्व आअच्छदि । जाव उवसप्पिस्सं । [ कुञ्जरिके ! कुञ्जरिके ! कुत्र कुत्र भर्तृदारिका पद्मावती । किं भणसि, एषा भर्तृदारिका माधवीलतामण्डपस्य पार्श्वतः कन्दुकेन क्रीडतीति । यावद् भर्तृदारिकामुपसर्पामि । अम्मो इयं भर्तृदारिका उत्क्षिप्तकर्णचूलिकेन व्यायामसञ्जातस्वेदबिन्दुविचित्रितेन परिश्रान्तरमणीयदर्शनेन मुखेन कन्दुकेन क्रीडन्तीत एवाऽगच्छति । यावदुपसर्प्स्यामि । ]

( निष्क्रान्ता )

---

इत्थं पद्मावत्याः स्थितिस्थानमवस्थां च बुद्ध्वा चेटी अनन्तरकरणीयं कार्यं प्रस्तौति—जाव भट्टिदारिअं उवसप्पामि-इति । परिक्रम्यावलोक्य = इतस्ततोऽन्विष्य दृष्ट्वा । अम्मो = विस्मयसूचकमव्ययमिदम् । उत्क्षिप्तकर्णचूलिकेन=उत्क्षिप्ता अधोलम्बनवारणार्थमूर्द्ध्वं कृता कर्णचूलिका कर्णाभरणविशेषो यस्मिंस्तेन । व्यायामसञ्जातस्वेदबिन्दुविचित्रितेन =व्यायामात् कन्दुकास्फालनजन्यपरिश्रमात् सञ्जाता उत्पन्नाः ये स्वेदबिन्दवः स्वेदजलकणास्तैः विचित्रितेन, लोकोत्तरां सुषमां दधता । परिश्रान्तरमणीयदर्शनेन = परिश्रान्तेन परिश्रान्त्या, रमणीयं मनोहरम् , दर्शनमवलोकनं यस्य तेन । मुखेन = आननेन, उपलक्षितेत्यर्थः । इत्थम्भूता राजदुहिता पद्मावती कन्दुकक्रीडाप्रसिताऽस्मिन्नेव प्रदेशे समागच्छतीत्यर्थः । यावदुपसर्प्स्यामि =यावदिति वाक्यालङ्कारे उपसर्प्स्यामि भर्तृदारिकासमीपमुपगच्छाम्येव । भविष्यत्त्वमत्राविवक्षितम् । उपसर्पणस्य तदानीमेव प्रकृतत्वात् ।

निष्क्रान्ता—इति । निष्क्रान्ता इति कथनेन चेट्याः पद्मावतीस्थितिस्थानावस्थाप्रदर्शनपूर्वकं रङ्गमञ्चादपगमनं दर्शितम् ।

---

अभी उनके पास चलती हूँ । ( घूम कर और देख कर ) अहा ! राजकुमारी तो यहाँ हैं और झूमते हुए कर्णफूल को ऊपर की ओर किये हुए कन्दुकक्रीडनरूप व्यायाम से उत्पन्न पसीने के बूँदों की झलक से जिसके मुखमण्डल की शोभा विचित्र मालूम पड़ रही है तथा श्रम करने से जिसके मुखमण्डल की छवि

प्रवेशकः❀ ।

( ततः प्रविशति कन्दुकेन क्रीडन्ती पद्मावती सपरिवारा वासवदत्तया सह † )

**वासवदत्ता**—हला ! एसो दे कन्दुओ । [ हला ! एष ते कन्दुकः ‡ । ]

**पद्मावती**—अय्ये ! भोदु दाणिं एत्तअं । [ आर्ये ! भवत्विदानीमेतावत् । § ]

**वासवदत्ता**—हला ! अदिचिरं कन्दुएण कीलिअ अहिअसञ्जाद-

❀ प्रवेशक इति । "प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा" इत्युक्तलक्षणः, पञ्चविधोपक्षेपकान्यतमः पात्रप्रवेशसूचकः सन्दर्भः ।

† पूर्वोक्तप्रवेशकसूचितं वासवदत्तया सह कन्दुकेन क्रीडन्त्याः सपरिवारायाः पद्मावत्याः प्रवेशमाह—ततः प्रविशतीति । सपरिवारा = चेटीसहिता ।

‡ भूमौ पतितं कन्दुकं पद्मावत्याः पुरः स्थापयन्ती वासवदत्ता वदति—हलाइति । हला = सखी । 'हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति' इत्यमरः ।

§ चिरक्रीडनपरिश्रान्ता कन्दुकक्रीडायामरुचिं प्रदर्शयन्ती पद्मावती प्राह—अय्ये इति । आर्ये इति सम्बोधनेन पद्मावत्याः वासवदत्तायामादरभावो द्योत्यते । एतावत् क्रीडनं पर्याप्तम्, परिश्रान्ताऽहमतोऽधिकं न क्रीडितुमिच्छामीत्यर्थः ।

मनोहर मालूम पड़ रही है ऐसी, गेंद खेलती हुई इधर ही आ रही हैं । तो मैं उनके पास चलूँ ।

( चली गयी )

प्रवेशक

( सहेलियों समेत वासवदत्ता के साथ गेंद खेलती हुई पद्मावती आती है )

वासवदत्ता—सखि ! यह तुम्हारा गेंद है ।

पद्मावती—आर्ये ! बस इस समय इतना ही रहने दो ।

वासवदत्ता—सखी ! बहुत देर तक गेंद खेलने से तेरे ये लाल लाल हाथ मानों पराये से हो गये हैं ।

राआ परकेरआ विअ दे हत्था संवुत्ता। [ हला! अतिचिरं कन्दुकेन क्रीडित्वाधिकसञ्जातरागौ परकीयाविव ते हस्तौ संवृत्तौ। * ]

चेटी—कीलदु कीलदु दाव भट्टिदारिआ। णिव्वत्तीअदु दाव अअं कण्णाभावरमणीओ कालो। [ क्रीडतु क्रीडतु तावद् भर्तृदारिका। निर्वर्त्यतां तावद् अयं कन्याभावरमणीयः कालः। † ]

पद्मावती—अय्ये! किं दाणिं मं ओहसिदुं विअ णिज्झाअसि। [ आर्ये! किमिदानीं मामपहसितुमिव निध्यायसि। ‡ ]

* तमर्थमनुमोदमाना वासवदत्ता सपरिहासमाह—हला-इति। अतिचिरं कन्दुकेन क्रीडित्वा = क्लान्ताया इत्यध्याहार्यम्। चिरकालपर्यन्तं कन्दुकेन क्रीडनाद्धेतोः क्लान्तायाः। अधिकसञ्जातरागौ = स्वभावतो रक्तावपि कन्दुकाहरणपरिश्रमादत्यन्तं रक्तिमानं वहन्तौ। परकीयाविव = अन्यदीयाविवेत्युत्प्रेक्षा। अन्यदीयौ हस्तौ यथा स्वकार्येऽक्षमौ भवतस्तथैव चिरक्रीडनपरिश्रान्तौ ते हस्ताविदानीमन्यदीयसाहाय्यं विना कन्दुकक्रीडने अक्षमौ संवृत्तावित्यर्थः। समधिकरागौ ते हस्तावचिरेणैव विवाहमङ्गलप्रसङ्गेन परकीयौ भविष्यत इति गूढोऽर्थः।

† कन्दुकक्रीडायां पुनः प्रवर्तयन्ती चेटी वदति—कीलदु-इति। क्रीडतु क्रीडतु = पुनः पुनः खेलतु। पौनः पुन्ये द्वित्वम्। यावदसञ्जातपाणिपीडना भर्तृदारिका तावत्पुनः पुनः क्रीडत्वित्यर्थः। अयं कालः कन्याभावरमणीयो निर्वर्त्यतामिति सम्बन्धः। अयं कालः = कैशोरं वयः। कन्याभावरमणीयः = कन्याभावेन कौमार्येण, कैशोरकालयेति यावत्। रमणीयः = मनोहरः। निर्वर्त्यताम् = क्रियताम्, उपभुज्यतामित्यर्थः। कैशोरवयस्कया भवत्या कन्दुकक्रीडनादिबाललीलाभिः समयोऽयं यापयितुं योग्य इत्यर्थः।

‡ पद्मावती वदति—अय्य-इति। मामपहसितुमिव = मम उपहासं कर्तुमिव। निध्यायसि = निर्वर्णयसि। "निर्वर्णनं तु निध्यानम्" इति कोशः। मन्ये, मम किमपि छिद्रमन्विष्य समुपहासं कर्तुं मां निर्वर्णयसीति भावः।

चेटी—राजकुमारी, खूब गेंद खेल लीजिये। यही तो गेंद खेल लेने का समय है।

पद्मावती—क्या अब तू मुझसे हँसी करने लगी?

वासवदत्ता—णहि णहि। हला! अधिअं अज्ज सोहदि। अभिदो विअ दे अज्ज वरमुहं पेक्खामि। [नहि नहि। हला! अधिकमद्य शोभते। अभित इव तेऽद्य वरमुखं पश्यामि। ❀ ]

पद्मावती—अवेहि। मा दाणिं मं ओहस। [ अपेहि। मेदानीं मामपहस। † ]

वासवदत्ता—एसह्मि तुह्णीआ भविस्सस्महासेणवहू!। [ एषास्मि तूष्णीका भविष्यन्महासेनवधूः!। ‡ ]

---

❀ तां निषेधन्ती वासवदत्ता वदत—णहि णहि-इति। नहि नहीति द्वित्वं निषेधदार्ढ्याय। पूर्ववाक्यार्थस्यायं निषेधः। हला! अद्य ते मुखं पूर्वापेक्षयाधिकं शोभते। हला! अद्य ते वरमुखमभित इव पश्यामीति सम्बन्धः। हला = सखि!। अद्य = इदानीम्। ते = तव। वरमुखम् = वरं सुन्दरं च तन्मुखम्। अभित इव = सर्वत इव, सर्वभावेनेत्यर्थः। पश्यामि = अवलोकयामि। इदानीमवर्णनीया त्वन्मुखसुषमा बलादिव मां द्रष्टुमुद्योजयतीत्यर्थः। किं वा, हला = सखि!। ते = तव। वरमुखम् = वरस्य परिणेतुः मुखम्। अभित इव = आसन्नमिव। पश्यामि = तर्कयामि। अविलम्बेन तव परिणयोत्सवो भवेत्तदनन्तरं पतिगृहं गतायाः सख्यास्तव मुखदर्शनं सर्वथा दुर्लभं स्यादितीदानीं त्वामहं सस्पृहं निवर्णयामीत्यर्थः। "समीपोभयतः शीघ्रसाकल्याभिमुखेऽभितः" इत्यमरः।

† पद्मावती कृतककोपेनाह—अवेहि इति। अपेहि = अपसर मा इति निषेधार्थकमव्ययम्। इदानीं तव परिहासो न मे रोचतेऽतो नोपहसितव्यमित्यर्थः।

‡ अथ वरविषये पद्मावत्याः हृद्गतं भावं जिज्ञासमाना वासवदत्ता तस्याः भाविश्वशुरकुलविशेषसूचकपदेन तां सम्बोधयन्ती वदति—एसह्मि-इति। हे

---

वासवदत्ता—नहीं नहीं! तू अब बहुत शोभित हो रही है। अब शीघ्र ही तेरे वर का दर्शन होने वाला है।

पद्मावती—हटो, जाओ! मुझसे छेड़छाड़ न करो।

वासवदत्ता—अच्छा, महासेन की भावी पुत्रवधू, ले, अब मैं चुप रहती हूँ।

पद्मावती—को एसो महासेणो णाम। [ क एष महासेनो नाम। ]

वासवदत्ता—अत्थि उज्जइणीओ राआ पज्जोदो णाम। तस्स बलपरिमाणणिव्वुत्तं णामहेअं महासेणो त्ति। [ अस्ति उज्जयिन्या राजा प्रद्योतो नाम। तस्य बलपरिमाणनिर्वृत्तं नामधेयं महासेन इति। ❀ ]

चेटी—भट्टिदारिआ तेण रण्णा सह सम्बन्धं णेच्छदि। [ भर्तृदारिका तेन राज्ञा सह सम्बन्धं नेच्छति†। ]

---

भविष्यन्महासेनवधूः = महासेन इति राज्ञः प्रद्योतस्यैव नामान्तरम्, तस्य वधूः स्नुषा। "वधूर्जाया स्नुषा स्त्री च" इत्यमरः। भविष्यन्ती चासौ महासेनवधूश्चेति तत्सम्बुद्धौ। भाविनि महासेनस्नुषे! प्रथमाङ्कोक्तचेटीवाक्यश्रवणसम्भावितपद्मावती हृद्गतभावावगमार्थमिदं परिहासवचनम्। एषा = पूर्वं कृतोपहासाऽहम्। अस्मीत्यनेनाहं पदाक्षेपः। तूष्णीका = तूष्णींशीला। मौनधारिणीति यावत्। "तूष्णींशीलस्तु तूष्णीकः" इत्यमरः। अस्मि = भवामि। चेट्या तु प्रद्योतो मम श्वशुरत्वेन पूर्वमुल्लिखित आसीत्। इदानीमियं महासेनं तथात्वेन कीर्तयति तत्किमिदमिति सन्दिह्य पद्मावती पृच्छति—को एसो इति।

❀ वासवदत्ता महासेनपरिचयं प्रस्तौति—अत्थि-इति उज्जयिनीय इति पाठे, उज्जयिन्या अयमुज्जयिनीस्वामीत्यर्थः। बलपरिमाणनिर्वृत्तम् = बलस्य सेनायाः परिमाणेन महत्त्वरूपेण निर्वृत्तं सम्पन्नम्। नामधेयं = नाम। महती सेना यस्य स महासेनः। उज्जयिनीराजस्य प्रद्योतस्य असंख्यातसेनाबलसद्भावान्महासेन इति नाम प्रथितमित्यर्थः।

† विवाहविषये स्वमनोगतं वक्तुं लज्जमानायाः पद्मावत्या आकूतं चेटी दर्शयति—भट्टिदारिआ-इति। भर्तृदारिका = पद्मावती। तेन राज्ञा = प्रद्योतेन

---

पद्मावती—ये महासेन कौन हैं?

वासवदत्ता—उज्जयिनी के राजा प्रद्योत हैं। बड़ी भारी सेना के अधिकारी होने के कारण उन्हीं का दूसरा नाम महासेन है।

चेटी—राजकुमारी उनके यहाँ सम्बन्ध करना नहीं चाहती।

**वासवदत्ता**—अह केण खु दाणि अभिलसदि। [ अथ केन खल्विदानीमभिलषति। ❀ ]

**चेटी**—अत्थि वच्छराओ उअअणो णाम। तस्स गुणाणि भट्टिदारिआ अभिलसदि। [ अस्ति वत्सराज उदयनो नाम तस्य गुणान् भर्तृदारिकाभिलषति। † ]

**वासवदत्ता**—( आत्मगतम् ) अय्यउत्तं भत्तारं अभिलषदि। ( प्रकाशम् ) केण कारणेण [आर्यपुत्रं भर्तारमभिलषति। केन कारणेन। ‡]

---

सह। सम्बन्धम् = तत्पुत्रपाणिपीडनात्मकम्। पद्मावती प्रद्योतराजकुमारं वरीतुं नेच्छतीत्यर्थः।

❀ चेटीवचनं श्रुत्वा पुनर्वासवदत्ता पृच्छति—अह इति। अथ = पक्षान्तरे। केन = किं नामधेयेन राज्ञा, सहेति शेषः। खल्विति वाक्यालङ्कारे सम्बन्धमित्यध्याहार्यम। अभिलषति = वाञ्छति। यदि ते भर्तृदारिका प्रद्योतराजकुमारेण सम्बन्धं नेच्छति, तर्हि केन राज्ञा पुनः सम्बन्धस्तस्या अभिलषित इत्यर्थः।

चेटी पद्मावती मनोभावं प्रकाशयति—अत्थि-इति। वत्सराजः = वत्सनामकदेशस्वामी, उदयन इति तन्नामधेयम्। तस्योदयनस्य गुणान् = सौन्दर्यदाक्षिण्यादीन्, वत्सराजोदयनस्य गुणेषु लुब्धा मे भर्तृदारिका तमेव वरीतुमिच्छतीत्यर्थः।

† अथ वासवदत्ता आत्मनः प्राणप्रियं वत्सराजमुदयनं कामयमानां पद्मावतीं चेटीमुखाद्विदित्वा स्वगतं सचिन्तमाह—अय्यउत्तमिति। आर्यपुत्रम् = मम महाराजोदयनमभिलषति वाञ्छति, लब्धुमिति शेषः। किमियं पद्मावती मम सपत्नी भवितुमिच्छतीति चिन्ता।

‡ अथ स्वस्वरूपगोपनं कुर्वती वासवदत्ता प्रकाशमाह—केण कारणेण इति। वत्सराजस्योदयनस्य केन गुणेनेयमाकृष्टा सती तं वरीतुमिच्छतीति प्रश्नः।

---

**वासवदत्ता**—फिर किससे सम्बन्ध करना चाहती है ?

**चेटी**—वत्सदेश के राजा उदयन के गुणों पर मुग्ध हुई राजकुमारी उन्हीं से सम्बन्ध करना चाहती है।

**वासवदत्ता**—( मन में ) ओ ! मेरे स्वामी को चाहती है। ( प्रकट ) क्या कारण है ?

चेटी—साणुक्कोसो त्ति । [ सानुक्रोश इति । ❀ ]

वासवदत्ता—( आत्मगतम् ) जाणामि जाणामि । अअं वि जणो एव्वं उम्मादिदो । [ जानामि जानामि । अयमपि जन एवमुन्मादितः † ]

चेटी—भट्टिदारिए ! जदि सो राआ विरूवो भवे । [ भर्तृदारिके ! यदि स राजा विरूपो भवेत् । ‡ ]

वासवदत्ता—णहि णहि । दंसणीओ एव्व । [ नहि नहि । दर्शनीय एव । § ]

---

❀ चेटी उत्तरयति—साणुक्कोसो त्ति-इति । सानुक्रोशः = दयालुः । उदयनो राजा दयालुरस्तीति हेतुना मम भर्तृदारिका तमेव कामयते, तस्य दयालुत्वमेव पद्मावत्याः प्रेमोत्पत्तौ निमित्तमित्यर्थः ।

† वत्सराजस्योदयनस्य दयालुत्वं स्वानुभवेन जानती वासवदत्ता स्वगतमाह-जाणामि जाणामि-इति । जानामि जानामीति द्विरुक्तिर्दार्ढ्याय । सानुक्रोश इति जानामीति सम्बन्धः । आर्यपुत्रो बाढं दयालुरस्ति तस्य दयालुत्वं मया बहुशोऽनुभूतमित्यर्थः । अयमपि जनः = अयं जनोऽपीति योजना, अहमपीत्यर्थः । एवम् = तस्य सानुक्रोशतया । उन्मादितः = उन्मादं गमितः । चेट्या सत्यमेवोक्तमार्यपुत्रेण दयालुत्वगुणेनैवाहं स्वाधीनी कृताऽस्मीति भावः ।

‡ अथ पद्मावत्याः प्रेमदार्ढ्यं परीक्षितुं चेटी पृच्छति—भट्टिदारिए इति । स राजा = उदयनः । विरूपः = कुरूपः, असुन्दर इत्यर्थः । दयालुत्वमिव वरस्य सौन्दर्यमपि कन्यकाः कामयन्ते, इति हेतोः राज्ञ उदयनस्य कुरूपत्वसम्भावनायां पद्मावत्याः प्रेम स्थिरं स्यान्न वेति जिज्ञासितुं चेट्याः प्रश्नोऽयम् ।

§ चेट्याः प्रश्नं निशम्य राज्ञ उदयनस्य सौन्दर्ये बाढं परिचिता वासवदत्ता

---

चेटी—दयालु होने से ।

वासवदत्ता—(मन में) हाँ, हाँ । मैं भी इसी बातपर मुग्ध हो गयी थी ।

चेटी—राजकुमारी, यदि यह राजा कुरूप हो तो ।

वासवदत्ता—नहीं नहीं, वे बड़े सुन्दर हैं ?

**पद्मावती**—अय्ये ! कहं तुवं जाणासि । [ आर्ये ! कथं त्वं जानासि । * ]

**वासवदत्ता**—( आत्मगतम् ) अय्यउत्तपक्खवादेण अदिक्कन्दो समुदाआरो । किं दाणिं करिस्सं । होदु, दिट्ठं । ( प्रकाशम् ) हला ! एव्वं उज्जइणीओ जणो मन्तेदि । [ † आर्यपुत्रपक्षपातेनातिक्रान्तः समुदाचारः । किमिदानीं करिष्यामि । भवतु, दृष्टम् । हला ! एवमुज्जयिन्या जनो मन्त्रयते । ‡ ]

---

वदति—णहि णहि इति । विरूपत्वनिषेधं द्रढयितुं नहि नहीति द्विर्वचनम् । स खलु राजा विरूपस्तु नास्त्येव, न च साधारणः, अपि तु दर्शनीय एव । एवकारेण सौन्दर्यस्यायोगो व्यवच्छिद्यते, नूनं सुन्दर एव स इत्यर्थः ।

* वासवदत्तामुखेन तस्य सुन्दरतां निशम्य तद्विषये अधिकं जिज्ञासमाना पद्मावती पृच्छति—अय्ये-इति । आर्ये ! =पूजनीये वासवदत्ते ! स राजा उदयनः सुन्दर एवेति कथं त्वयावगतम् ? किं त्वं तं प्रत्यक्षं दृष्टवत्यसि, उत परेषां वचनैस्तस्य सौन्दर्य्यं जानासि, इति प्रश्नः ।

† पद्मावत्याः वचनं श्रुत्वा आर्यपुत्रस्वरूपपरिचयप्रदानेन स्वस्वरूपप्रकाशमाशङ्कमाना वासवदत्ता स्वगतं विमृशति—अय्यउत्तपक्खवादेण इति । आर्यपुत्रपक्षपातेन=आर्यपुत्रस्य । भर्तुरुदयनस्य, पक्षपातेन=तत्पक्षानुकूल्येन, तत्सौन्दर्यप्रशंसयैति यावत् । समुदाचारः=अज्ञातवासानुकूल आचारः कर्तव्यम्, अतिक्रान्तः उल्लंघितः । आर्यपुत्रप्रेमावेशमग्नया मया तत्सौन्दर्यप्रतिपादनेन स्वस्वरूपाविष्करणद्वाराऽज्ञातवासानुकूलं कर्तव्यं विस्मृतमित्यर्थः । इदानीं कीदृगुत्तरप्रदानेन स्वस्वरूपं गोपयेयम् । भवतु=अस्तु । दृष्टम्=समुचितमुत्तरमुपलब्धमित्यर्थः ।

‡ इत्थं मनसा विमृश्य प्रकाशमाह—हला—इति । उज्जयिनीयो जनः=उज्जयिनीवासी लोकः । एवं मन्त्रयते=वत्सराजो नूनं दर्शनीय इति कथयति ।

---

**पद्मावती**—राजकुमारी, ! कैसे जानती है ।

**वासवदत्ता**—( मन में ) ओह ! मैंने स्वामी के पक्षपात से सदाचार का

पद्मावती—जुज्जइ । ण खु एसो उज्जइणीदुल्लहो । सव्वजणमणोभिरामं खु सोभग्गं णाम । [ युज्यते । न खल्वेष उज्जयिनीदुर्लभः । सर्वजनमनोभिरामं खलु सौभाग्यं नाम ।※ ]

( प्रविश्य † )

---

मया राज्ञ उदयनस्य यत्सुन्दरत्वं प्रतिपादितं तदुज्जयिनीवासिनां कथनेनैव, न मया प्रत्यक्षं दृष्टः स राजा, किञ्च–सततं राजदर्शनसौभाग्यभाज उज्जयिनीवासिनो जनाः यत्कथयन्ति तत्सत्यमेव भवेत्, नह्यमूला प्रसिद्धिर्भवति, तस्माद्राज्ञः सौन्दर्ये न त्वया सन्देहः कार्य इत्यर्थः ।

※ वासवदत्तोक्तमर्थमनुमोदमाना पद्मावती वदति—जुज्जइ–इति । युज्यते = उपपद्यते त्वदुक्तमिति शेषः । उज्जयिनीवासिनामुक्तिः सत्या प्रतीयत इत्यर्थः । तत्र कारणमाह—न खल्विति । एष उज्जयिनीदुर्लभो न खल्विति सम्बन्धः । एषः = राजा उदयनः । उज्जयिनीदुर्लभः । उज्जयिनीपदेन उज्जयिनीवासिनो लक्षयितव्याः । उज्जयिन्यां राज्ञ उदयनस्य श्वशुरालयत्वात् तत्राऽसकृद्गमनस्य सम्भवादुज्जयिनीवासिभिः राज्ञो दर्शनं सुलभमेव । सौभाग्यं नाम सर्वजनमनोभिरामं खल्विति सम्बन्धः । सौभाग्यम् = दर्शनीयत्वम् । नामेति प्रसिद्धौ । सर्वजनमनोभिरामम् = सर्वेषां जनानां मनसश्चित्तस्याभिरामं कमनीयमाकर्षकमित्यर्थः । सौन्दर्यं हि सर्वेषां सचेतसां चक्षुः बलादाकर्षतीव, अतः कन्दर्पकोटिकमनीयं वत्सराजमुदयनं दृष्ट्वा तत्सौन्दर्यसम्मुग्धचेतसः सर्व एवोज्जयिनीवासिनो जनास्तं बाढं प्रशंसन्ति इति हेतोः सख्यास्तव वचनस्य सत्यतां सम्भावयामीति तात्पर्यम् । एतावता सन्दर्भेण पद्मावत्याः हृदये वत्सराजविषयकानुरागस्य अङ्कुरितत्वं पल्लवितत्वं च कविना ध्वनितम् ।

† अथ वत्सराजाय पद्मावत्याः वाग्दानवृत्तं सूचयिष्यन् कविः धात्रीप्रवेश-

---

उल्लङ्घन कर दिया । अब क्या करूँ ? अच्छा ( प्रकट ) उज्जयिनी के लोग ऐसा कहते हैं ।

पद्मावती—हाँ, ठीक है, उज्जयिनी के लिये वे दुर्लभ नहीं हैं और दूसरी बात यह कि, सुन्दरता सबको अच्छी लगती है ।

**धात्री**—जेदु भट्टिदारिआ। भट्टिदारिए। दिण्णासि। [ जयतु भर्तृदारिका। भर्तृदारिके ! दत्तासि। ❀ ]

**वासवदत्ता**—अय्ये ! कस्स। [ आर्य्ये ! कस्मै। † ]

**धात्री**—वच्छराअस्स उदअणस्स। [ वत्सराजायोदयनाय। ‡ ]

**वासवदत्ता**—अह कुसली सो राआ। [ अथ कुशली स राजा। § ]

---

माह—ततः प्रविशति धात्री—इति। ततः=पद्मावत्याः वत्सर.जेऽनुराग-प्रदर्शनानन्तरम्। धात्री=उपमाता, दाई, इति भाषायाम्। प्रकरणात् पद्मावत्या उपमाता बोधव्या।

❀ प्रविष्टा च सा पद्मावत्याः वाग्दानवृत्तं प्रस्तौति—जेदु इति। जयत्वित्याशीः। आशीर्वादप्रयोगकारणीभूतां सौभाग्योपनतिमाह—दत्तासि-इति। दत्तासि=वाचा समर्पितासीत्यर्थः। भर्तृदारिके ! अद्य तव गुरुजनेन तव वाग्दानं कृतं, तेन त्वं सञ्जातपरिणयेव सौभाग्यशिखरमारूढासीति शुभाशीर्भिस्त्वां वर्द्धयामीति भावः।

† वासवदत्ता पृच्छति—अय्य-इति। आर्ये=पूज्ये। स्वसख्याः पद्मावत्याः उपमाता वासवदत्ताया अपि पूज्यैवेति सम्बोधनं समुचितम्। दत्तेति पूर्वानुवृत्तिः। कस्मै पुरुषधौरेयायेयं मे सखी पद्मावती दत्ता=प्रतिपादिता किं नामधेयोऽस्या वर इति तन्नाम स्पष्टं निर्दिशेति तात्पर्यम्।

‡ धात्री उत्तरयति—वच्छराअस्स-इति। वत्सदेशस्वामिने उदयनायेयं प्रतिपादितेत्यर्थः। वत्सराजायेति विशेषणेनोदयनान्तरव्यवच्छेदः सूचितः।

§ वासवदत्ता तस्य राज्ञः कुशलं पृच्छति—अह-इति। अथेति प्रश्ने। वत्सराजस्य राज्ञ उदयनस्य कुशलं वर्तते किमिति प्रश्नः। ब्रह्मचारिमुखाल्लावाणकग्रामे राज्ञो विरहदुरवस्थां श्रुतवत्याः राजकुशलप्रश्नः समुचित एव।

---

**धाई**—राजकुमारी की जय हो। (बैठकर) राजकुमारी, तुम दे दो गयी हो।

**वासवदत्ता**—आर्ये ! किसके लिये ?

**धाई**—वत्सराज उदयन के लिये।

**वासवदत्ता**—राजा कुशल से तो हैं न ?

धात्री—कुसलो सो आअदो । तस्स भट्टिदारिआ पडिच्छिदा अ ।
[ कुशली स आगतः । तस्य भर्तृदारिका प्रतीष्टा च । ※ ]

वासवदत्ता—अच्चाहिदं । [ अत्याहितम् । † ]

धात्री—किं एत्थ अच्चाहिदं । [ किमत्रात्याहितम् । ‡ ]

वासवदत्ता—ण हु किञ्चि । तह णाम सन्तप्पिअ उदासीणो होदि

---

※ धात्री उत्तरयति–कुसली-इति । सकुशलः स राजा, आगतः = उपस्थितः, राजगृहमिति शेषः । किञ्च तस्य भर्तृदारिका वाचा दत्ता, तेन च प्रतीष्टा = स्वीकृता । देहेन कुशली स राजा सम्प्रति राजगृहमुपस्थितोऽस्ति, वाचा दत्तां भर्तृदारिकां पद्मावतीं च सानन्दं स्वीकृतवान्, पद्मावत्युदयनयोर्विवाहस्य वाङ्निश्चयः संवृत्त इति भावः ।

† आत्मनः प्रियतमेनोदयनेन कृतं पद्मावतीपरिग्रहनिश्चयं निशम्य स्त्रीस्वभावसुलभं चित्ते समुद्भूतमावेगं रोद्धुमपारयन्ती वासवदत्ता साविक्षेपमाह—अच्चाहिदमिति । अत्याहितम् = महदनिष्टम्, अन्याय्यम् । मयि वासवदत्तायां तथाविधमलौकिकं प्रणयमविगणय्य पुनः पद्मावतीपरिग्रहप्रवृत्तिलक्षणं राज्ञः कार्यमत्यन्तमन्याय्यम्, तेनानर्थावहं कार्यमिदमिति भावः ।

‡ शङ्कमाना धात्री महाभयस्वरूपं पृच्छति—किमिति । अत्र = उदयनकर्तृकपद्मावतीपरिग्रहनिश्चये । राज्ञा उदयनेन योऽयं पद्मावतीपरिग्रहनिश्चयः कृतः, तद्विषये भवत्या कीदृशं महाभयं सम्भाव्यते, तत्स्पष्टोक्रियतामिति प्रश्नाभिप्रायः ।
तथा चोक्तम्—

वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ॥ इति ।

---

धाई—हाँ, कुशल से हैं, और यहीं आये हुए हैं । उन्होंने राजकुमारी के साथ सम्बन्ध करने का वचन भी दिया है ।

वासवदत्ता—ओह ! भारी अनर्थ हुआ ।

धाई—इसमें अनर्थ क्या हुआ ।

वासवदत्ता—कुछ भी नहीं । यही कि, वे वासवदत्ता के विरह से इतने

त्ति। [ न खलु किञ्चित्। तथा नाम सन्तप्योदासीनो भवतीति। ✲ ]

**धात्री—** अय्ये ! आअमप्पहाणाणि सुलहपय्यवत्थाणाणि महापुरुषसहिअआणि होन्ति। [ आर्ये! आगमप्रधानानि सुलभपर्यवस्थानानि महापुरुषहृदयानि भवन्ति। † ]

---

✲ सहसा मुखान्निर्गतस्य स्ववचनस्य चातुर्येण संगतिं दर्शयन्ती वासवदत्ता वदति ण हु इति। खलुर्वाक्यालङ्कारे, नान्यत्किञ्चिदत्याहितमित्यर्थः। तथा नाम सन्तप्य = यथा ब्रह्मचारिणा निगदितम्, अस्माभिश्च श्रुतम्, तथा प्रमीतपत्नीविषये शोकपर्याकुलो भूत्वा सम्प्रति, उदासीनो भवति = नवपत्नीपरिग्रहनिश्चयेन निस्नेहताप्रदर्शनपुरःसरमौदासीन्यमवलम्बते। अत्र विषये नान्यत्किञ्चिन्महाभयं वर्तते, केवलमिदमेव यत् स राजा लावाणकग्रामे स्वपूर्वपत्नीं दग्धां सम्भाव्य तद्विषये तथा बहुप्रकारं विलप्य सम्प्रति नवपत्नीपरिग्रहं निश्चिनोति तस्मान्निःस्नेहप्रकृतिकः स राजा लक्ष्यत इत्येव-शङ्कास्पदमस्तीति भावः।

† अत्याहितं निषेधन्तीं धात्री वदति—अय्ये-इति। आगमप्रधानानि महापुरुषहृदयानि सुलभपर्यवस्थानानि भवन्तीति सम्बन्धः। आगमप्रधानानि आगमः शास्त्रम्, शास्त्रोपदेश इति यावत, स एव प्रधानं मुख्यो येषां तानि, शास्त्रोपदेशैकायत्तप्रवृत्तीनीत्यर्थः। महापुरुषहृदयानि = महापुरुषाणां महात्मनाम्, हृदयानि चेतांसि, सुलभपर्यवस्थानानि=सुलभं सुकरमनायाससाध्यम्, पर्यवस्थानं विकारपरित्यागपूर्वकं स्वस्वरूपावस्थितिर्येषां तथाविधानि, भवन्ति = जायन्ते। "विपदि धैर्य्यमथाभ्युदये क्षमा" इत्युक्तलक्षणाः महात्मानः खलु स्वतन्त्रा अपि शास्त्रैकपरतन्त्रा भवन्ति, तेषां सर्वा अपि प्रवृत्तयः शास्त्रानुसारेणैव भवन्ति, इत्थं च ते तात्कालिकविपदुपनिपातविकृतचेतसोऽपि विवेकबलेन झटिति विकृतिं विधूय स्वकीयां स्थिरां प्रकृतिं त्वरितं प्रपद्यन्ते—

प्रकृते च स राजा उदयनः दग्धत्वेन सम्भावितायाः स्वपूर्वपत्न्याः विषये तदानीं तथा विलप्याऽपि तद्विषये विपुलं प्रणयं वहन्नपि पद्मावती स्वीकर्तुं यदि

---

दुखी थे, सो अब उससे उदासीन हो गये।

**धाई—**शास्त्रज्ञानी महापुरुषों के हृदय दुःख में भी सहज ही पहिले की तरह हो जाते हैं।

वासवदत्ता—अय्ये ! सअं एव्व तेण वरिदा। [ आर्ये ! स्वयमेव तेन वृत्ता। ❀ ]

धात्री—णहि णहि। अण्णप्पओअणेण इह आअरस अभिजण-विण्णाणवओरूवं पेक्खिअ सअं एव्व महाराएण दिण्णा। [ नहि नहि, अन्यप्रयोजनेनेहागतस्याभिजनविज्ञानवयोरूपं दृष्ट्वा स्वयमेव महाराजेन दत्ता। † ]

वासवदत्ता—(आत्मगतम्) एव्वं। अणवरद्धो दाणिं एत्थ अय्य-उत्तो। [ एवम्। अनपराद्ध इदानीमत्रार्यपुत्रः। ‡ ]

---

प्रतिजानीते, तर्हि नात्र किमप्यत्याहितम्, न चैतावता तस्य निःस्नेहप्रवृत्तिकत्वं शङ्कितुं योग्यमिति भावः।

❀ पुनरप्युदयनस्य मनोभावं जिज्ञासितुं वासवदत्ता पृच्छति—अय्ये-इति। स्वयमेव = कन्यकागुरुजनाग्रहं विनैव। तेन वृता = पद्मावतीं प्रार्थयितुमेवात्रागतेन तेन वत्सराजेनोदयनेन पद्मावती पत्नीत्वेन कामिता किमिति प्रश्नः।

† धात्री उत्तरयति—णहि णहि-इति। नहि नहि = त्वदुक्तं सर्वथा नास्त्ये-वेत्यर्थः। नञ्द्वयेन निषेधदार्ढ्यं द्योत्यते। उदयनः पद्मावतीप्राप्तीच्छया नैवात्रा-गतः, किन्तु अन्यप्रयोजनेन = केनापि कारणान्तरेण। इह = राजगृहे। अभिजन-विज्ञानवयोरूपम् = अभिजनः कुलम्, "सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ" इत्यमरः। विज्ञानम् शिल्पकौशलं शास्त्रपाटवं च, "विज्ञानं शिल्पशास्त्रयोः" इत्यमरः। वयः तारुण्यमेतेषां समाहारः, एतत्सर्वम्। दृष्ट्वा = पर्यालोच्य। महा-राजेन = दर्शकेन। दत्ता = प्रतिपादिता। महाराजो दर्शकः राज्ञ उदयनस्य—

"कुलं च शीलं च सनाथता च, विद्या च वित्तं च वपुर्वयश्च"

इत्याद्यनुसारेण कुलशीलकौशलसौन्दर्याणि पर्यालोच्य सद्गुणसम्पन्नाय तस्मै वराय तेनाप्रार्थितामपि स्वां भगिनीं प्रतिपादयितुमैच्छदिति भावः।

‡ इत्थं धात्रीवचनेन अपेतशङ्का समाश्वस्तचित्ता वासवदत्ता स्वगतमाह-

---

वासवदत्ता—आर्ये ! क्या स्वयं उन्होंने पद्मावती को माँगा है ?

धाई—नहीं नहीं। वे दूसरे काम के लिये यहाँ आये थे। महाराज ने उनका अच्छा कुल, विद्या, ज्ञान और रूप देखकर स्वयं पद्मावती को दे दिया।

( प्रविश्यापरा ❀ )

चेटी—तुवरदु तुवरदु दाव। अय्या। अज्ज एव्व किल सोभणं णक्खत्तं। अज्ज एव्व कोदुअमङ्गलं कादव्वं त्ति अह्माणं भट्टिणी भणादि। [ त्वरतां त्वरतां तावदार्या। अद्यैव किल शोभनं नक्षत्रम्। अद्यैव कौतुकमङ्गलं कर्तव्यमित्यस्माकं भट्टिनी भणति। † ]

वासवदत्ता—( आत्मगतम् ) जह जह तुवरदि, तह तह अन्धी-

---

एव्वमिति। एवम् = ईदृशः किल आर्यपुत्रस्य पद्मावतीपरिग्रहप्रकारः। अत्र = पद्मावतीपरिग्रहनिश्चये। अनपराद्धः = अकृतापराधः, निर्दोष इत्यर्थः। अत्र प्रयोजनान्तरेण समागत आर्यपुत्रः अप्रार्थितामुपनतां पद्मावतीं नाम कन्यारत्नं प्रतिगृह्णन् नैव शङ्काविषयो भवति, वृथैव मया तस्मिन् निःस्नेहत्वमारोपितमिति भावः।

❀ पद्मावतीविवाहकौतुकमङ्गलाचरणाय धात्रीं त्वरयितुमपरस्याश्चेट्याः प्रवेशमाह—प्रविश्य—इति। अपरा = चेटी।

† प्रविष्टा चेटी वदति—तुवरदु-इति। द्विरुक्त्या त्वरातिशयो द्योत्यते तावदिति वाक्यालङ्कारे। आर्या = धात्री। किलेति निश्चये। शोभनं नक्षत्रम् = उत्तराफाल्गुन्यादि निर्दोषं वैवाहिकं नक्षत्रम्। नक्षत्रशब्दः सत्तिथि-वार-योगादीनामप्युपलक्षकः। तथा चोक्तं पारस्करगृह्ये—

"पुण्याहे कुमार्याः पाणिं गृह्णीयात्। त्रिषु त्रिषूत्तरादिषु स्वातौ, मृगशिरसि, रोहिण्यां वा"इति॥

कौतुकमङ्गलम् = कौतुकं कङ्कणापरनामकं विवाहसूत्रम्, तस्य मङ्गलं माङ्गलिकाचारः। "कौतुकं त्वभिलाषे स्यादुत्सवे नर्महर्षयोः। विवाहसूत्रगीतादि भोगयोरपि न द्वयोः" इति मेदिनी। तच्च दूर्वाङ्कुरहरिद्रादियुक्तमाचाराद्विरच्यते विवाहेषु।

दूर्वायवाङ्कुराश्चैव बालकं चूतपल्लवाः।
हरिद्राद्वयसिद्धार्थशिखिपत्रोरगत्वचः ॥

---

वासवदत्ता—( मन में ) ऐसी बात है, तब स्वामी का इसमें कोई दोष नहीं है। ( दूसरी चेटी आई )

चेटी—चलिये, शीघ्र चलिये। आज ही शुभ लगन है। हमारी स्वामिनी कहती हैं कि, आज ही सगुन होना चाहिये।

करेदि मे हिअअं। [यथा यथा त्वरते, तथा तथान्धीकरोति मे हृदयम् । ❀]

धात्री—एदु एदु भट्टिदारिआ । [ एत्वेतु भर्तृदारिका । † ]

( निष्क्रान्ताः सर्वे )

इति द्वितीयोऽङ्कः ।

---

कङ्कणौषधयश्चैताः कौतुकाख्यया नव स्मृताः ।

इति मात्स्योक्तेश्च। भट्टिनी = स्वामिनी, दर्शकराजपत्नीत्यर्थः । "देवी कृताभिषेकायामितरासु तु भट्टिनी" इत्यमरकोशानुसारेण राज्ञो दर्शकस्यानभिषिक्ता राज्ञी ग्राह्या । अद्यैव किल शोभनं मुहूर्तं वर्तते, अतो वैवाहिककौतुकमङ्गलाचारा अद्यैव सम्पादनीया इत्यस्माकं भट्टिनी आज्ञापयतीत्यर्थः ।

❀ इत्थं चेटीवचनं निशम्य स्त्रीस्वभावसुलभामसूयां हृदये वहन्ती वासवदत्ता स्वगतं विमृशति—जह—इति । अत्र कर्तृपदं चेटीत्यनुसन्धेयम् । अन्धीकरोति = अनन्धमप्यन्धं सम्पादयति । यथा यथा इयं चेटी पद्मावतीवैवाहिककौतुकमङ्गलाचरणाय धात्रीं त्वरयति, तथा तथा मदीयं चेतः विवेकशून्यतारूपामन्धतां प्रापयतीत्यर्थः । सापत्न्यं मे दुःसहं प्रतीयत इति भावः ।

† वैवाहिककौतुकमङ्गलाचरणाय पद्मावतीं गन्तुं प्रवर्तयन्ती धात्री वदति—एदु—इति । द्विरुक्त्या त्वरा प्रतीयते । कौतुकमङ्गलारम्भे कन्याया अप्युपस्थितिरावश्यकीति भर्तृदारिकयापि अवश्यं तत्र गन्तव्यमित्यर्थः ।

स्वप्नवासवदत्तस्य व्याख्याने "श्रीः" पदाङ्किते ।

नारायणीये तस्यायं द्वितीयोऽङ्कः समाप्तिमैत् ॥

इति श्रीनारायणशास्त्रिप्रणीतायां स्वप्नवासवदत्तस्य "श्री"रित्यभिधायां टीकायां द्वितीयोऽङ्कः समाप्तः ।

---

वासवदत्ता—( मन में ) जैसे जैसे महारानी शीघ्रता कर रही हैं, वैसे वैसे हमारा हृदय सूना होता जाता है ।

धाई—राजकुमारि ! आइये ।

( सब चले गये )

दूसरा अङ्क समाप्त ।

—०—

# अथ तृतीयोऽङ्कः* ।

—:०:*:०:—

( ततः प्रविशति विचिन्तयन्ती वासवदत्ता † )

**वासवदत्ता**—विवाहामोदसङ्कुले अन्तेउरचउस्साले परित्तजिअ पदुमावदिं इहअ अदह्मि पमदवणं । जाव दाणिं भाअधेअणिव्वुत्तं दुःखं विणोदेमि । ( परिक्रम्य ) अहो अच्चाहिदं । अय्यउत्तो वि णाम परकेरओ संवुत्तो । जाव उवविसामि ( उपविश्य ) धञ्ञा खु चक्कवाअवहू, जा अण्णोण्णविरहिदा ण जीवइ । ण खु अहं पाणाणि परित्तजामि । अय्यउत्तं

---

## अथ तृतीयोऽङ्कः ।

* अस्मिन्नङ्के द्वितीयाङ्कोपक्षिप्तपद्मावतीपरिणयमङ्गलम्, स्वप्रियस्य पत्न्यन्तरपरिग्रहौत्सुक्यावलोकनेन विषण्णाया वासवदत्तायाः स्वमनोविनोदनाय गुप्ततया प्रमदवनगमनम्, वासवदत्ताऽन्वेषणप्रसङ्गेन सख्याः प्रमदवनं गत्वा वासवदत्तोपलम्भः, तस्यै कौतुकमालागुम्फनाय राजमहिषीसन्देशकथनम्, प्रसङ्गेन तत्रोभयोः सरससंलापः, अन्तःखिन्नाया अपि वासवदत्तायाः स्वकराभ्यामेव कौतुकमालां विरच्य सखीद्वारा पद्मावतीसविधे प्रेषणम्, इत्यादयोऽर्था वर्णयिष्यन्ते ।

† अथ स्वप्रियतमेन राज्ञा उदयनेन साकं सख्याः पद्मावत्या विवाहसम्बन्धं निश्चितमवगत्य चिन्ताक्रान्ताया वासवदत्तायाः प्रवेशमाह—ततः प्रविशतीति । विचिन्तयन्ती = चिन्तां कुर्वाणा ।

---

## तीसरा अङ्क ।

( सोचती हुई वासवदत्ता आती है )

**वासवदत्ता**—ब्याह की हँसी खुशी से चहल पहल वाले राजगृह में मैं पद्मावती को छोड़ आरामबाग में चली आई हूँ । दैववशात् सिर पर आये हुए बोझ को जरा हलका तो करूँ । ( घूम कर ) ओह ! अनर्थ हो गया । स्वामी

पेक्खामि त्ति एदिणा मणोरहेण जीवामि मन्दभाआ । [ * विवाहामोद-सङ्कुले अन्तःपुरचतुश्शाले परित्यज्य पद्मावतीमिहागतास्मि प्रमदवनम् । यावदिदानीं भागधेयनिर्वृत्तं दुःखं विनोदयामि । अहो ! अत्याहितम् । आर्यपुत्रोऽपि नाम परकीयः संवृत्तः । यावद् उपविशामि । धन्या खलु चक्रवाकवधूः, याऽन्योन्यविरहिता न जीवति । न खल्वहं प्राणान् परि-

---

* वासवदत्ता स्वमनोगतं चिन्ताप्रकारं प्रकटयति विवाहामोद–इति । विवाहामोदसंकुले = विवाहस्य उदयनपद्मावत्योर्भविष्यतः परिणयस्य । आमोदः प्रहर्षः, तेन सङ्कुले व्याप्ते, अनेकविधकार्यव्यापृतहर्षोत्फुल्लविविधजनाकीर्णे इत्यर्थः । अन्तःपुरचतुश्शाले = अन्तःपुरं राजपत्नीनां भवनम्, तत्र यच्चतुश्शालम्, अन्योन्याभिमुखीभिश्चतसृभिः शालाभियुक्तं स्थानं—चत्वरादिकं तस्मिन् । पद्मावतीं परित्यज्य तथाविधे जनसंमर्दे मया प्रच्छन्नया स्थातुं न सुशकमिति तां परित्यज्य इह एकान्ते प्रमदवनम् = प्रमदानां राजयोषितां वनं क्रीडोद्यानम् । "स्यादेतदेव प्रमदवनमन्तःपुरोचितम्" इत्यमरः । प्रमदवनमित्यत्र 'ङ्यापोः संज्ञा छन्दसोर्बहुलमि'त्यनेन ह्रस्वः । अन्तःपुरोचितमुद्यानम् । आगताऽस्मि = उपस्थिताऽस्मि । भागधेयनिर्वृत्तम् = स्वकीयदुर्भाग्योपनतम् । दुःखम् = कष्टम् । विनोदयामि यावत् = अपनेष्यामि, लघूकरिष्यामीत्यर्थः । यावत्पुरानिपातयोरिति भविष्यदर्थे लट् । परिक्रम्य = इतस्ततः किञ्चित् परिभ्रम्य । अहो ! अत्याहितम् = आश्चर्यम्, मम कृते महद्भयमुपस्थितम् । आर्यपुत्रोऽपि नाम परकीयः संवृत्तः = अन्यदीयो जातः । य आर्यपुत्रः पूर्वं मय्येकगतप्राणतया मदीय एवाऽऽसीत्, सोऽपि नामेदानीं परस्याः पद्मावत्याः संवृत्तः । हा ! धिङ् मे दुर्दैवविलसितमित्यर्थः । उपविशामीत्यनेन वासवदत्तायाश्चिन्तामूलकं दौर्बल्यमवस्थानाशक्तिश्च द्योत्यते । उपविश्य = क्वापि स्थाने स्थितिं कृत्वा ।

चक्रवाकवधूदृष्टान्तेनात्मानं निन्दति—धन्येति । चक्रवाकवधूः = कोकी ।

---

भी दूसरे हो गये । अच्छा, थोड़ी देर बैठूँ । ( बैठती है ) चकई पक्षी ही प्रशंसनीय है, जो चकवा से बिछुड़ते ही मर जाती है । पर मुझे मौत नहीं । मैं अभागिन स्वामी के दर्शन की इच्छा से अब तक जी रही हूँ ।

त्यजामि । आर्यपुत्रं पश्यामीति एतेन मनोरथेन जीवामि मन्दभागा । ]

( ततः प्रविशति पुष्पाणि गृहीत्वा चेटी ❀ )

**चेटी**—कहिं णु खु गदा अय्या आवन्तिआ । (परिक्रम्यावलोक्य) अम्मो इअं चिन्तासुञ्ञहिअआ णीहारपडिहदचन्दलेहा विअ अमण्डिअभद्दअं वेसं धारअन्दी पिअङ्गुसिलापट्टए उवविट्ठा । जाव उवसप्पामि । (उपसृत्य) अय्ये ! आवन्तिए ! को कालो, तुमं अण्णेसामि ।

---

धन्या = अभिनन्दितुं योग्या । खल्विति निश्चये । या = चक्रवाकवधूः अन्योन्यविरहिता = मिथोवियुक्ता, प्रियेण विरहितेति यावत् । न जीवति = प्राणांस्त्यक्तुं समोहते । न खल्वहं प्राणान् परित्यजामि = अहन्तु वियुक्तापि प्राणान् न परित्यजामि जीवाम्येव, अतः प्रियविप्रयोगे प्राणपरित्यागसाहसमनुतिष्ठन्त्याः तिर्यग्जातिसम्भूतायाश्चक्रवाक्या अपि वाढमहं निन्दनीयाऽस्मीत्यर्थः ।

आत्मनः प्राणापरित्यागे कारणमाह—आर्यपुत्रमिति । आर्यपुत्रम् = भर्तारमुदयनम् । आर्यपुत्र इति पतिं प्रति पत्न्याः उदाहरणसमुदाचारो नाट्ये । पश्यामि = अवलोकयिष्यामि । वर्तमानसामीप्ये भविष्यदर्थे लट् । एतेन = आर्यपुत्रदर्शनप्रत्याशारूपेण । मनोरथेन = अभिलाषेण । जीवामि = प्राणधारणं करोमि । पद्मावतीविवाहप्रसङ्गेनेहागत आर्यपुत्रो मे नयनगोचरो भवेदित्याशातन्तुनैव प्रियविप्रयुक्ताऽप्यहं जीवामीत्यर्थः । मन्दभागा = प्रियविप्रयोगरूपदुर्भाग्यवती ।

"जीवन्नरो भद्रशतानि पश्येत्" "आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानाम् । सद्यः पाति प्रणयि हृदयं विप्रयोगे रुणद्धि", इत्याद्याः सहृदयानां सूक्तयोऽत्र प्रमाणानि । उक्तेन सन्दर्भेण वासवदत्तागतो विप्रलम्भशृङ्गारः पोषितः ।

❀ वासवदत्ताद्वारा पद्मावत्या विवाहमङ्गलस्रज ग्रथयितुं गृहीतपुष्पायाश्चेट्याः प्रवेशमाह—ततः प्रविशतीति ।

---

( फूल लेकर चेटी आती है )

**चेटी**—ओ ! अवन्तिका ( वासवदत्ता ) कहाँ चली गयी ! ( घूम कर और देख कर ) अरे ! यह तो चिन्ता के मारे अपने आप को भी भूल कर कुहरे के

[ कनु खलु गता आर्यावन्तिका । अम्मो इयं चिन्ताशून्यहृदया नीहारप्रतिहतचन्द्रलेखेवामण्डितभद्रकं वेषं धारयन्ती प्रियङ्गुशिलापट्टके उपविष्टा । यावदुपसर्पामि । आर्ये ! आवन्तिके ! कः कालः, त्वामन्विष्यामि । ❀ ]

❀वासवदत्ताविषये मनसि वितर्कं कुर्वन्ती चेटी वदति—कहिम् इति । आवन्तिका = अवन्त्यां भवा, उज्जयिनीप्रान्तोत्पन्नेत्यर्थः । अर्थिभगिनी । आवन्तिकेति नाम्नैव वासवदत्ता तत्र प्रविष्टाऽऽसीत् । आर्या = पूज्या, वासवदत्तेति यावत् ।

साम्प्रतं वासवदत्ता क्वास्तीति चेटी वितर्कयति, किञ्चिदन्तरं गत्वा प्रमदवने स्थितां तां दृष्ट्वा साश्चर्यं वदति—अम्मो इति । अनेनाश्चर्यमानन्दश्चाभिव्यज्यते । चिन्ताशून्यहृदया = चिन्तया प्रोषितस्वपतिविषयक चिन्तयेन शून्यं प्रकृतहर्षावसरोचितकर्तव्यज्ञानविधुरं हृदयं चित्तं यस्यास्तादृशी, अत एव, नीहारप्रतिहतचन्द्रलेखेव = नीहारेण तुहिनेन प्रतिहता ताडिता छन्नप्रभेति यावत् । चन्द्रलेखेव चन्द्रकलेव । चिन्ताव्याप्ताया वासवदत्ताया नीहारजालाच्छन्नच्छायया चन्द्रलेखया समं साम्यम् । अमण्डितभद्रकम् = अमण्डितः अनलङ्कृतश्चासौ भद्रकः सुन्दरस्तम्, अलङ्काररहितमपि सुन्दरमित्यर्थः, निसर्गसुन्दरमिति यावत् । वेषम् = नेपथ्यम्, स्वरूपमित्यर्थः । धारयन्ती = वहन्ती । प्रियङ्गुशिलापट्टके = गन्धफलीतरोरधः शिलापीठे । "प्रियङ्गुः फलिनी फली । विष्वक्सेना गन्धफली" इत्यमरः । उपविष्टा = स्थिता, आसीना, अस्तीति शेषः । इयं वासवदत्ता चिन्ताक्रान्ता तुहिनच्छन्नचन्द्रकलेव नैसर्गिकं रामणीयकं वहन्ती फलिनीवृक्षतलगते शिलातले उपविष्टा दृश्यत इति भावः । यावदुपसर्पामि = तत्समीपमुपगच्छामि । उपसृत्य = समीपं गत्वा । वदतीति शेषः । कः कालः = कियान् समयः । अतीत इति शेषः ।

पड़ने से चन्द्रमा की भाँति फीकी मालूम पड़ती हुई प्रियङ्गुलता के नीचे पत्थर पर बैठी हुई है, तौभी ( बिना श्रृङ्गार के भी ) कैसी सुन्दर मालूम हो रही है । अच्छा, उसके समीप चलूँ । ( पास जाकर ) आर्ये ! अवन्तिके ! भला मैं कब से तुमको ढूँढ रही हूँ ।

वासवदत्ता—किण्णिमित्तं। [ किन्निमित्तम्। ❀ ]

चेटी—अह्माअं भट्टिणी भणादि—महाकुलप्पसूदा सिणिद्धा णिउणा त्ति इमं दाव कोदुअमालिअं गुह्मदु अय्या। [ अस्माकं भट्टिनी भणति—महाकुलप्रसूता स्निग्धा निपुणेति इमां तावत् कौतुकमालिकां गुम्फतवार्या। † ]

वासवदत्ता—अह कस्स किल गुह्मिदव्वं। [ अथ कस्मैकिल गुम्फितव्यम्। ‡ ]

त्वामन्विष्यामि=तवान्वेषणं करोमि। बहोः कालात् त्वामन्विष्यन्तां सम्प्रति त्वामत्र पश्यामि। भूयान् कालो व्यतीतस्तवादृष्टाया इति भावः।

❀ वासवदत्ता चेटीं प्रति स्वान्वेषणकारणं पृच्छति—किण्णिमित्तमिति। केन निमित्तेन मामन्विष्यसीति प्रश्नः।

† चेटी उत्तरयति—अह्माअमिति। अस्माकं भट्टिनी=महाराजदर्शक-स्यानभिषिक्ता राज्ञी। भणति=कथयति।

स्वामिन्या उक्तिमाह—महाकुलेति। महाकुलप्रसूता=महति प्रशस्ते, कुले वंशे प्रसूता जाता महाकुलीनेत्यर्थः। स्निग्धा=पद्मावत्यां स्नेहयुक्ता। निपुणा=प्रकृतकार्यसम्पादनकुशला। इति हेतौ, अस्माद्धेतोरित्यर्थः। महाकुलप्रसूतेत्यादि-प्रशंसापरवचनं तस्याः झटिति मालानिष्पादनाभिमुखीकरणार्थम्। आर्या=भवती। इमाम्=गुम्फनीयाम्। तावदिति वाक्यालङ्कारे। कौतुकमालिकाम्=विवाहसमये कन्यकाजनेन हस्ते धारणीयां सौभाग्यसूचिकां विविधपुष्पौषधमयीं मङ्गलस्रजं गुम्फतु=ग्रथ्नातु। महाकुलीनया पद्मावत्याः प्रियवयस्यया मालागुम्फनकुशलया च भवत्या इयं विवाहमङ्गलमालिका ग्रथनीयेति भट्टिनी भवतीम् अनुरुणद्धीति भावः।

‡ वासवदत्ता पृच्छति—अह-इति। अथेति प्रश्ने। किलेति वाक्यालङ्कारे।

वासवदत्ता—कहो क्या मतलब है ?

चेटी—स्वामिनी कह रही है कि, तुम बड़े घर की, प्रेमी और चतुर हो। इसलिये तुम्हीं को सोहाग की माला गूंथने का काम दिया जाय।

वासवदत्ता—किसके लिये माला गूँथूँ ?

चेटी—अह्माअं भट्टिदारिआए। [ अस्माकं भर्तृदारिकायै। ※ ]

वासवदत्ता—( आत्मगतम् ) एदं वि मए कत्तव्वं आसी। अहो अकरुणा खु इस्सरा। [ एतदपि मया कर्तव्यमासीत्। अहो अकरुणाः खल्वीश्वराः। † ]

चेटी—अय्ये ! मा दाणिं अण्णं चिन्तिअ। एसो जामादुओ मणिभूमीए ह्णाअदि। सिग्घं दाव गुह्मदु अय्या। [ आर्ये ! मेदानीमन्यच्चिन्तयित्वा। एष जामाता मणिभूम्यां स्नायति। शीघ्रं तावद् गुम्फत्वार्या। ‡ ]

---

गुम्फितव्यम् = ग्रथनीयम्। कस्योपयोगाय मया मालिका ग्रथनीयेति प्रश्नः।

※ चेटी उत्तरयति—अह्माअमिति। भर्तृदारिकायै = राजकुमार्यै, पद्मावत्यर्थं विवाहकौतुकमालां भवती ग्रथनातु, इत्यर्थः।

† चेटीवचनं श्रुत्वा वासवदत्ता स्वगतं विमृशति—एदंपि-इति। एतदपि = सपत्न्याः कृते स्वयं विवाहकौतुकमालाग्रथनमपि। अपि शब्देन प्रियस्य दुःसहं वियोगदुःखं सोढ्वा स्वयमेव सपत्नीसम्पादनाय प्रयतनं तु मया कृतमेव, इदानीं दुर्दैवेन तस्याः सपत्न्याः विवाहकौतुकमालाग्रथनमपि मद्द्वारा सम्पादनीयमित्यापतितमिति ध्वन्यते। अहो ! विधातुः खलत्वमिति भावः। किञ्च—अहो ! साश्चर्यखेदद्योतकमिदम्। ईश्वरा अकरुणाः खल्विति सम्बन्धः। ईश्वराः = प्रभवाः, समर्थाः जनाः, देवता वा, अकरुणाः खलु = निर्दयचेतसो निश्चयेन सन्ति। इयं खलु स्वामिनी मम मनोभावमविगणय्य मामेव मालिकागुम्फने नियुङ्क्ते किमितरा आज्ञाविधेया दास्यो न सन्ति ? अथवा मम दुर्दैवस्यैवेदं विलसितम्।

‡ वासवदत्तां तूष्णीम्भूतां किमपि चिन्तयन्तीमिव विलोक्य चेटी वदति अय्ये-इति। इदानीम् = समासन्ने विवाहमुहूर्ते। अन्यत् चिन्तयित्वा = अन्यत्कि-

---

चेटी—राजकुमारी के लिये।

वासवदत्ता—(मन में) यह भी करना पड़ा। हाय रे ! निर्दयी परमेश्वर !।

चेटी—बेकार चिन्ता छोड़ दे। दुलहा मणि की चौकी पर स्नान कर रहे हैं। इस से आप जल्दी गूँथ दें।

**वासवदत्ता**—( आत्मगतम् ) ण सक्कुणोमि अण्णं चिन्तेदुं । ( प्रकाशम् ) हला ! किं दिट्ठो जामादुओ । [ न शक्नोम्यन्यच्चिन्तयितुम् । हला ! किं दृष्टो जामाता । ❀ ]

**चेटी**—आम दिट्ठो भट्टिदारिआए सिणेहेण अह्माअं कोदूहलेण अ । [ आं दृष्टो भर्तृदारिकायाः स्नेहेनास्माकं कौतूहलेन च । † ]

**वासवदत्ता**—कीदिसो जामादुओ । [ कीदृशो जामाता । ‡ ]

---

मपि न चिन्तयेत्यर्थः । मा चिन्तयित्वेत्यत्र मा योगे क्त्वा प्रत्ययः—प्रयोगस्तु महाकवेः स्वातन्त्र्यं द्योतयति—"सहि मा एव्वं मन्तिअ" "मा मा अतिमेत्तं मम किदे उक्कंठिदुं" इत्यादयः कालिदासादिमहाकवीनां प्रयोगा अपि कथञ्चिन्नेयाः । जामाता = वरः, राजा उदयनः । मणिभूम्याम् = मणिनिर्मितस्थण्डिले । स्नायति = स्नाति, स्नानं करोति । तावदिति वाक्यालङ्कारे । गुम्फतु = ग्रथ्नातु । मालामिति शेषः । जामाता मङ्गलस्नानार्थं मणिमयवेदिकायामुपस्थित एव, स्नानानन्तरमेव हि कौतुकमाला अपेक्ष्येत, अतो विहाय चिन्तान्तरं सत्वरं भवत्या मालिका ग्रथ्यतामिति भावः ।

❀ वासवदत्ता स्वगतं वदति—ण-इति । मम प्रियपतिं विहाय नान्यत्किमपि मया चिन्तयितुं शक्यते, किञ्च मम दुर्दैवं विजनेऽपि दुःखं शोचितुमवसरं न ददातीत्यर्थः ।

प्रकाशमाह—हला-इति । अपि नाम जामातुर्दर्शनं ते संवृत्तमिति प्रश्नार्थः ।

† चेटी उत्तरयति—आमेति । आम्—स्वीकृतिसूचकमव्ययमिदम् । अथ किमित्यर्थः । भर्तृदारिकायाः = पद्मावत्याः । राजकुमार्यां पद्मावत्यां स्नेहेन जामातृदर्शनकौतूहलेन च दृष्टो मया जामातेत्यर्थः ।

‡ चेटीमुखेन तद्वर्णनं श्रोतुकामा वासवदत्ता पुनश्चेटीं पृच्छति—कीदिसो

---

**वासवदत्ता**—( मन में ) अब सोच विचार कर क्या होगा । ( प्रकट ) क्या तुमने दुलहा को देखा है ?

**चेटी**—हाँ, राजकुमारी के प्यार और अपने कौतुक के कारण देखा है ।

**वासवदत्ता**—दामाद कैसा है ?

चेटी—अय्ये ! भणामि दाव ण ईरिसो दिट्ठपुरुवो । [ आर्ये ! भणामि तावद्, नेदृशो दृष्टपूर्वः । ❀ ]

वासवदत्ता—हला ! भणाहि भणाहि, किं दंसणीओ । [ हला ! भण भण, किं दर्शनीयः । † ]

चेटी—सक्कं भणिदुं सरचावहीणो कामदेवो त्ति । [ शक्यं भणितुं शरचापहीनः कामदेव इति । ‡ ]

वासवदत्ता—होदु एत्तअं । [भवत्वेतावत् । △]

---

जामादुओ-इति।। सुन्दरोऽसुन्दरो वा कीदृशो जामाताऽस्ति, तत्स्वरूपं वर्णयेत्यर्थः ।

❀ चेटी उत्तरयति—अय्ये-इति। भणामि = कथयामि । यथार्थमिति शेषः । सत्यमेवाहं कथयामीत्यर्थः । ईदृशो न दृष्टपूर्वः = एवंविधो वरः पूर्वं मया न कदाप्यवलोकित इत्यर्थः ।

† वासवदत्ता पुनः सोत्कण्ठं पृच्छति—हला-इति । भण भणेति द्विप्रयोगेण वासवदत्ताया उत्कण्ठाविषयो द्योत्यते । किं दर्शनीयः = किं सुन्दरः ? तवोत्तरं गूढमासीदिति पुनरहं पृच्छामीत्यर्थः ।

‡ चेट्युत्तरयति—सक्कमिति । जामातेति पूर्वानुवृत्तिः । स जामाता कौसुमधनुर्बाणरहितः साक्षात् कामदेव एवेति वक्तुं शक्यम्, यद्यस्य हस्तयोः कौसुमे बाणधनुषी निधीयेते, तर्हि साक्षात् कामदेव एवायमिति प्रतीयेतेति भावः। "सअं खु भअवं सरचावहीणो कामदेवो त्ति" इति पाठे-स्वयं खलु भगवाञ्छरचापहीनः कामदेव इति" इति संस्कृतम् ।

△ वासवदत्ता वदति—होदु एत्तअं-इति । इयदेव वर्णनं पर्याप्तमित्यर्थः । परपुरुषगुणानुवर्णनं साध्वीभिः नाधिकं श्रोतव्यमिति भावः ।

---

चेटी—वाह ! ऐसा दामाद तो कभी देखा ही नहीं ।

वासवदत्ता—कहो, कहो, क्या सचमुच देखने योग्य है ?

चेटी—बस, जान लो कि बिना धनुषबाण के कामदेव हैं ।

वासवदत्ता—अच्छा, जाने दो ।

चेटी—किण्णिमित्तं वारेसि। [ किन्निमित्तं वारयसि। ❀ ]

वासवदत्ता—अजुत्तं परपुरुससङ्कित्तणं सोदुं। [ अयुक्तं परपुरुषसङ्कीर्तनं श्रोतुम्। † ]

चेटी—तेण हि गुह्मदु अय्या सिग्घं। [ तेन हि गुम्फत्वार्या शीघ्रम्। ‡ ]

वासवदत्ता—आणेहि। (आत्मगतम्) इअं गुह्मामि मन्दभाआ §।

---

❀ जामातृगुणवर्णनं निषेधन्तीं वासवदत्तां चेटी पृच्छति—किण्णिमित्तं वारयसि इति। जामातृगुणवर्णनं कुर्वतीं मां किमर्थं वारयसीति तात्पर्यम्।

† वासवदत्तोत्तरयति—अजुत्तं परपुरुससङ्कित्तणं सोदुं-इति। परपुरुषसङ्कीर्तनम् = परकीयपुरुषगुणानुवर्णनम्, साध्वीभिः श्रोतुं न योग्यमित्यर्थः अत एव त्वं मया वारिताऽसि, नान्यत्किमपि सम्भाव्यतां त्वयेति भावः।

‡ चेटी वदति—तेण हि गुह्मदु अय्या सिग्घं इति। तेन हि = इत्थं तर्हीत्यर्थः। गुम्फतु = ग्रथ्नातु। मालामिति शेषः।

§ मालाग्रथनोद्युक्ता वासवदत्ता वदति—आणेहि-इति। पुष्पाणि गुम्फनसामग्रीं चेति शेषः।

स्वगतं वदति—इअं गुह्मामि मन्दभाआ इति। मन्दभागा = सपत्नीविवाहकौतुकमालागुम्फिका, अत एव मन्दभाग्येत्यर्थः। वर्जयित्वा विलोक्य = गुम्फनीयेषु पुष्पेषु कमपि विजातीयं पदार्थं दृष्ट्वा तं पृथक् संस्थाप्येत्यर्थः।

चेटीं पृच्छति—इमं दाव ओसहं किं णाम—इति। तावन्नाम च वाक्या-

---

चेटी—मना क्यों करने लगी ?

वासवदत्ता—परपुरुष का गुणानुवाद सुनना ठीक नहीं है।

चेटी—अच्छा तो शीघ्र माला गूंथ दो।

वासवदत्ता—लाओ ( मन में ) मैं अभागिनी गूंथ देती हूँ। ( पृथक् रख कर और देख कर ) इस औषधि का क्या नाम है।

( वर्जयित्वा, विलोक्य ) इमं दाव ओसहं किं णाम । [ आनय । इयं गुम्फामि मन्दभागा । इदं तावदौषधं किं नाम । ]

चेटी—अविहवाकरणं णाम । [ अविधवाकरणं नाम ।❀ ]

वासवदत्ता—( आत्मगतम् ) इदं बहुसो गुम्फिदव्वं मम अ पदुमावदीए अ । ( प्रकाशम् ) इमं दाव ओसहं किं णाम । [ इदं बहुशो गुम्फितव्यं मम च पद्मावत्याश्च । इदं तावदौषधं किं नाम । † ]

चेटी—सवत्तिमद्दणं णाम । [ सपत्नीमर्दनं नाम । ‡ ]

---

लङ्कारौ । गुम्फनीयैः पुष्पैः सह समागतोऽयमौषधिविशेषः किंनामा किं प्रयोजनक इति प्रश्नः ।

❀ चेटी उत्तरयति—अविहवाकरणं नाम-इति । नामेति प्रसिद्धौ । अविधवाकरणम् = अविधवा सुवासिनीसौभाग्यवती क्रियतेऽनेनेति तत्, चिरतरसौभाग्यसम्पादकमित्यर्थः । आत्मनः सौभाग्यसंवर्द्धनाय पत्युरायुरभिवृद्धये च विवाहकौतुकमङ्गलमालायामयमौषधिविशेषो ग्रथनीय इति पुरन्ध्रीणामाचारः ।

† औषधिविशेषस्य परमोपयोगितां श्रुत्वा वासवदत्ता स्वगतं चिन्तयति—इदं बहुसो गुम्फिदव्वं मम अ पदुमावदीए अ-इति । बहुशः = बाहुल्येनेत्यर्थः । मम च पद्मावत्याश्चं कस्त्रामिकतयोभयोरप्यवैधव्यस्येष्टत्वादयमौषधिविशेषो बाहुल्येन गुम्फनीय इत्यर्थः ।

औषधान्तरं दृष्ट्वा पुनः प्रकाशं पृच्छति—इमं दाव ओसहं किं णाम इति ।

‡ चेट्युत्तरयति—सवत्तिमद्दणं णाम इति । सपत्नी मर्द्यतेऽनेनेति तत् । अस्मिन्नौषधे धारिते सति तद्धारयित्रीं सपत्नी न किञ्चित्कर्तुं प्रभवतीत्यर्थः ।

---

चेटी—यह सोहाग बढ़ाने वाली औषधि है ।

वासवदत्ता—( मन में ) पद्मावती और अपने लिये बहुत बार इसे गूथूंगी । ( प्रकट ) इस औषधि का क्या नाम है ?

चेटी—सौत के गर्व को तोड़ने वाली ।

**वासवदत्ता**—इदं ण गुह्मिदव्वं । [ इदं न गुम्फितव्यम् । ❀ ]

**चेटी**—कीस । [ कस्मात् । † ]

**वासवदत्ता**—उवरदा तस्स भय्या, तं णिप्पओअण त्ति ।

[ उपरता तस्य भार्या, तन्निष्प्रयोजनमिति । ‡ ]

( प्रविश्यापरा § )

**चेटी**—तुवरदु तुवरदु अय्या । एसो जामादुओ अविहवाहि अब्भन्तरचदुस्सालं पवेसीअदि । [ त्वरतां त्वरतामार्या । एष जामाता अविधवाभिरभ्यन्तरचतुश्शालं प्रवेश्यते । ▽ ]

---

❀ आत्मनो भवित्री सपत्नी पद्मावती इममौषधिविशेषं धारयेच्चेत् तत् सपत्नीभूतामात्मानं मर्दयेत् इति भीत्या तद्गुम्फनं निषेधन्ती वासवदत्ता वदति—इदं ण गुह्मिदव्वं इति । इदमौषधमत्र मया न गुम्फितुं शक्यत इत्यर्थः ।

† चेटी तत्कारणं पृच्छति—कीस-इति । कस्मात् कारणादित्यर्थः ।

‡ वासवदत्तोत्तरयति— उवरदा तस्स भय्या, तं णिप्पओअणं त्ति-इति । उपरता = मृता । तस्य = उदयनस्य भार्या = वासवदत्ता । निष्प्रयोजनम् = निष्फलम् । महाराजस्योदयनस्य पूर्वभार्यायाः वासवदत्तायाः लावाणकग्रामे दग्धत्वेन प्रसिद्धेः प्रकृते सपत्न्यभावात् सपत्नीमर्दनमौषधं निष्फलमेवेति भावः ।

§ चेटीं विलम्बमानां दृष्ट्वा तां त्वरयितुमपरस्याश्चेट्याः प्रवेशमाह—प्रविश्यापरेति ।

▽ प्रविष्टा चेटी वदति—तुवरदु-इति । द्विरुक्तिः कार्यशीघ्रतां द्योतयति । मङ्गलस्रग्गुम्फनं त्वरया सम्पाद्यतामित्यर्थः ।

---

वासवदत्ता—इसे मैं न गूथूंगी ।

चेटी—किस कारण ?

वासवदत्ता—उनकी स्त्री तो मर गयी । अब इसका गूँथना व्यर्थ है ।

( दूसरी चेटी आयी )

चेटी—शीघ्र आइये, शीघ्र । सोहागिन लोग दामाद को कोहबर में ले जा रही हैं ।

वासवदत्ता—अइ ! वदामि, गह्ण एदं । [ अयि ! वदामि, गृहाणैतत् ❀ ]

चेटी—सोहणं । अय्ये ! गच्छामि दाव अहं । [ शोभनम् । आर्ये ! गच्छामि तावदहम् । † ]

( उभे निष्क्रान्ते )

वासवदत्ता—‡ गदा एसा । अहो अच्चाहिदं । अय्यउत्तो वि णाम

---

तत्र हेतुमाह—एसो-इति । अविधवाभिः=सधवाभिः, सौभाग्यवतीभिरिति यावत् । तादृशीनां पुरन्ध्रीणामेव तत्राधिकारात् अभ्यन्तरचतुश्शालम् अन्तःपुरस्थितं विवाहमण्डपम् । सधवाः पुरन्ध्र्यो जामातरं विवाहमण्डपं प्रवेशयन्ति । मङ्गलमाला च तत्रापेक्ष्यते, अतः सत्वरमेव सा सम्पूयतामिति भावः ।

❀ परिसमाप्तस्रग्गुम्फना वासवदत्तोत्तरयति—अइ ! वदामि, गह्ण इदं-इति । अयि, कोमलालापे । वदामि=वच्मि । इदं चेट्याः सम्मुखीकरणार्थम् । इदम्=गुम्फितं कौतुकमाल्यम् ।

† कौतुकमालिकां दृष्ट्वा गुम्फनसौन्दर्यं प्रशंसन्ती द्वितीया चेटी आह—सोहणं अय्ये ! गच्छामि दाव अहं-इति । शोभनम्=सुन्दरम्, तव गुम्फनमिति शेषः । उभे निष्क्रान्ते इत्यनेन चेट्योरेव गमनम्, वासवदत्ता तु तत्र गन्तुं नैच्छदिति सूचितम् ।

‡ अथैकाकिनी वासवदत्ता स्वगतं विमृशति—गदा-इति । एषा=चेटी । किं वा एषा=मया ग्रथिता कौतुकमाला, गता=पद्मावतीहस्तं गता । आर्यपुत्रोऽपी-

---

वासवदत्ता—सुनती हो कि नहीं । मैं कहती हूँ कि इसे लेती जा ।

चेटी—अच्छा जैसा आप कहिये । मैं जाती हूँ ।

( दोनों चली गयीं )

वासवदत्ता—वह गयी । कैसा अनर्थ है ! स्वामी भी पराये हो गये । हा ! यदि शय्या पर ही निद्रा आ जाती, तो ये सारे मानसिक दुःख दूर हो जाते ।

परकेरओ संवुत्तो। अविदा सय्याए मम दुक्खं विणोदेमि, जदि णिद्दं लभामि। [ गतैषा अहो अत्याहितम्। आर्यपुत्रोऽपि नाम परकीयः संवृत्तः। अविदा शय्यायां मम दुःखं विनोदयामि, यदि निद्रां लभे। ]

( निष्क्रान्ता )

इति तृतीयोऽङ्कः।

---

त्यत्रापिपदेन तस्या तथाविधलोकोत्तरप्रणयशालिता सूच्यते, अन्यत् पूर्वं व्याख्यातमेव। अविदेति विषादे। विनोदयामि = दूरीकरिष्यामि। विनोदयामि, लभे इति चोभयत्र वर्तमानसामीप्ये भविष्यति लट्। चेटी तु--मङ्गलस्रजं गृहीत्वा गता, अद्य यावन्मदेकायत्त आर्यपुत्र इदानीं पद्मावतीप्रणयी भविष्यति, हा! कथमिदं मया सोढव्यम्? एकान्ते शय्यायां निपत्य स्वकष्टमपनेष्यामि, यदि दुःखापहन्त्री निद्रा सानुग्रहमेष्यतीति भावः। निष्क्रान्ता = इत्थं विलपन्ती वासवदत्ता निर्गता।

स्वप्नवासवदत्तस्य व्याख्याने "श्रीः"पदाङ्किते।
नारायणीये तस्यायं तृतीयाऽङ्कः समाप्तिमैत्॥

इति श्रीमन्नारायणशास्त्रिणा प्रणीतायां स्वप्नवासवदत्तस्य "श्री"रित्याख्यायां व्याख्यायां तृतीयोऽङ्कः समाप्तः।

—०※०—

---

( चली गयी )

तीसरा अङ्क समाप्त।

---

# अथ चतुर्थोऽङ्कः ।

—०:*:०—

( ततः प्रविशति विदूषकः * )

विदूषकः—( सहर्षम् ) भो ! दिट्ठिआ तत्तहोदो वच्छराअस्स अभिप्पेदविवाहमङ्गलरमणिज्जो कालो दिट्ठो। भो! को णाम एदं जाणादि–तादिसे वयं अणत्थसलिलावत्ते पक्खित्ता उण उम्मज्जिस्सामो त्ति। इदाणिं

अस्मिन्नङ्के पद्मावत्याः विवाहानन्तरं दम्पत्यो रतिप्रकर्ष उपपादयिष्यते, वासवदत्ताविषयकस्योदयनचित्तगतस्य प्रेम्णः पुष्टिश्च प्रदर्शयिष्यते ।

* नाटकेऽभिनेतुमयोग्यस्य विवाहादिप्रकारस्य वृत्तमवगमयितुं विदूषकप्रवेशमाह—ततः प्रविशतीति । विदूषको हि "विकृताकारवाक्चेष्टं यमालोक्य हसेज्जनः" इत्यादिलक्षणलक्षितः हास्यप्रधानः कुसुमवसन्तादिपदव्यपदेश्यः नायकस्य नर्मसचिवः पात्रविशेषः । प्रायो नाटकेषु अयं ब्राह्मणः सर्वत्र भोजनैकदृष्टिः राज्ञः सुहृत्त्वेन वर्ण्यते । तल्लक्षणं च "विकृताङ्गवचोवेषैर्हास्यकारी विदूषकः" इति । प्रकृते राज्ञो विवाहमहोत्सवनिष्पत्त्या हर्षोद्गारानुद्गिरन् विदूषको वदति—भो इति । दिष्ट्या = सौभाग्येन । तत्रभवतः = पूज्यस्य, वत्सराजस्योदयनस्य । अभिप्रेतविवाहमङ्गलरमणीयः = अभिप्रेतमभीष्टं यद्विवाहमङ्गलं पद्मावतीपरिणयमहोत्सवरतेन रमणीयो हर्षवर्द्धनः । कालो दृष्टः = तथाविधः शुभसमयोऽस्माभिः साक्षादनुभूत इत्यर्थः। सम्पन्नस्य विवाहमहोत्सवस्य दैवानुकूल्यघटितत्वं समर्थयति—भो इति । को नामेतज्जानाति—नामेति वाक्यालङ्कारे । जानातीति भूतार्थे लट् । केनेद विज्ञातमासीन्न केनाऽपीत्यर्थः । तादृशे = अतर्कितमुपनतेऽतिभयङ्करे। अनर्थसलिलावर्ते = अनर्थः राज्यापहारवासवदत्तादाहादिलक्षणं विपज्ज्ञानम् तद्रूपो यः सलिलावर्तः अम्भोभ्रमः तस्मिन् । "स्यादावर्तोऽम्भसां भ्रमः" इत्यमरः, प्रक्षिप्ताः = दुर्दैवेन कर्त्रा पातिता वयम् । पुनः = भूयः । उन्मङ्क्ष्यामः = अनर्थसलिला-

( विदूषक आता है )

विदूषक:—भाग्य से ही मैंने महाराज वत्सराज के अभीष्ट मङ्गलमय विवाह का शुभ समय देखा। अरे ! किसको मालूम था कि, ऐसे अनर्थ के

पासादेसु वसीअदि, अन्देउरदिग्घिआसु ह्णाईअदि, पकिदिमउरसुउमाराणि मोदअखज्जआणि खज्जीअन्ति त्ति अणच्छरसंवासो उत्तरकुरुवासो मए अणुभवीअदि। एक्को खु महन्तो दोसो, मम आहारो सुट्ठ ण परिणमदि। सुप्पच्छदणाए सय्याए णिद्दं ण लभामि, जह वादसोणिदं अभिदो विअ वत्तदि त्ति पेक्खामि। भो सुहं णामअपरिभूदं अकल्लवत्तं च।

---

वर्तादुन्मग्नाः, कृतोद्धारा भविष्यामः। असम्भावनार्थायामनवक्लृप्तौ लट्, इत्थमस्माकं पुनरुन्मज्जनमसम्भावितमेवासीदित्यर्थः। को नामैतज्जानातीति पूर्वेण सम्बन्धः। दैवमेव सुखदुःखदशयोः निदानं भवतीति भावः। सम्प्रति स्वयमनुभूयमानं सुखं प्रपञ्चयति—इदानीमिति। प्रासादेषु = राजगृहेषु उष्यते = निवासः क्रियते। अन्तःपुरदीर्घिकासु = राजावरोधजनमात्रोचितास्वपि वापीषु। स्नायते = यथेच्छं मज्जनं क्रियते। प्रकृतिमधुरसुकुमाराणि = प्रकृत्या निसर्गत एव मधुराणि मधुरास्वादवन्ति च तानि सुकुमाराणि कोमलानि। मोदकखाद्यानि = मोदकाः लड्डुकास्तत्प्रधानानि खाद्यानि। विदूषकस्य मोदकप्रियत्वान्मोदकानां प्राधान्येनोक्तिः। खाद्यन्ते = भुज्यन्ते। इति = अस्माद्धेतोः। अनप्सरस्संवासः = नास्ति अप्सरसां रम्भादीनां स्ववेश्यानां संवासः सहवासः, साहचर्य्यं यस्मिंस्तादृशः अप्सरोराहित्यमात्रभिन्न इत्यर्थः। भोजनमात्रैकदृष्टेर्विदूषकस्य दृष्ट्या अप्सरोविरहस्याकिञ्चित्करत्वादिदमुपेक्षावचनम्। उत्तरकुरुवासः=उत्तराः कुरवो नाम सुमेरुपर्वतप्रान्तगता देवनिवासा भूमयः, तत्र वासो निवासः वसतिः सुरलोकवाससौख्यमित्यर्थः। मया=विदूषकेण। अनुभूयते = उपभुज्यते। अत्र राजगृहे निवसता मया स्वर्गलोकवाससौख्यमेवानुभूयते, स्वर्गे तु अप्सरसो भवन्ति, अत्र ता न सन्ति, इत्येतावानेव विशेषः। एतादृशसुखनिवासेऽपि दोषमेकं दर्शयति-एक इति। एकः खलु महान् दोषः, मम आहारः सुष्ठु न परिणमति, इति। एकः = एकल एव। दोषः = विकारः। आहारः = भुक्तान्नम्। सुष्ठु = सम्यक्। न परिणमिति = न परिपचति। सुप्रच्छदनायाम् =

---

चक्कर में पड़े हुये हम लोग बाहर निकल सकेंगे। इस समय हम सब राजमहल में निवास करते हैं, अन्तःपुर की बावलियों में स्नान करते हैं, मधुर और मुलायम लड्डू खाते हैं, मानो कि, स्वर्ग का ही सुख लूट रहे हैं। बस, केवल

[ भोः ! दिष्ट्या तत्रभवतो वत्सराजस्याभिप्रेतविवाहमङ्गलरमणीयः कालो दृष्टः। भोः ! को नामैतज्जानाति–तादृशे वयमनर्थसलिलावर्ते प्रक्षिप्ताः पुनरुन्मङ्क्ष्याम इति । इदानीं प्रासादेषु उष्यते, अन्तःपुरदीर्घिकासु स्नायते, प्रकृतिमधुरसुकुमाराणि मोदकखाद्यानि खाद्यन्त इति अनप्सरस्संवास उत्तरकुरुवासो मयानुभूयते । एकः खलु महान् दोषः, ममाहारः सुष्ठु न परिणमति, सुप्रच्छदनायां शय्यायां निद्रां न लभे, यथा वातशोणितमभित इव वर्तत इति प्रेक्षे । भोः ! सुखं नामयपरिभूतमकल्यवर्तं च । ]

---

प्रच्छदनमास्तरणं यच्छय्योपरि दुग्धफेनधवलं वस्त्रमास्तीर्यते, सुकोमलास्तरणसमन्वितायामित्यर्थः । शय्यायाम् = पर्यङ्कादितल्पे । निद्रानवाप्तेः कारणमाह—यथेति । येन हेतुनेत्यर्थः । वातशोणितम् = वातरक्ताख्यो दोषः । यत्र वातरक्ते उभे अपि दूषिते भूत्वा अस्वप्नमन्दाग्निप्रभृतीन् दोषाञ्जनयतः । अभित इव = सर्वशरीरमभिव्याप्या स्थित इव । प्रेक्षे = तर्कयामि । अत्र मधुरमनोभिलषितमोदकाद्याहारं भुञ्जानोऽप्यहं यतो निद्रां न लभे भुक्तान्नापरिपाकादग्निमान्द्यं चानुभवामि ततस्तर्कयामि, यदहं वातरक्तव्याधिनाभिभूतोऽस्मीत्यर्थः । व्याधिसंसृष्टस्य सुखस्यासुखत्वं समर्थयन्नाह—भो इति । आमयपरिभूतमकल्यवर्तञ्च सुखं नेति सम्बन्धः । आमयपरिभूतम् = आमयेन व्याधिना परिभूतं संसृष्टम्, रोगाक्रान्तमित्यर्थः । अकल्यवर्तम् = कल्यवर्तः प्रातराशस्तेन रहितम् । 'कलेवा' इति । भाषायाम् । यत्र प्रातराशो न लभ्यते तदित्यर्थः । सुखं न = सुखमिति वक्तुं शक्यं नेत्यर्थः । आहारपरिपाकाभावान्मन्दाग्निसद्भावेन भिषग्भिर्यत्र प्रातराशो निषिध्यते, सुखान्तरसमन्वितोऽपि साऽवस्था सुखमयीति मया वक्तुं न शक्यत इति भावः । भोजनमात्रैकदृश औदरिकस्य विदूषकस्य समुचितैवेयमुक्तिः ।

---

कमी इतनी ही है कि, यहाँ अप्सरायें नहीं हैं । पर एक बात का बड़ा दोष है कि, भोजन अच्छी तरह हजम नहीं होता, सुन्दर चद्दरयुक्त शय्या पर नींद अच्छी तरह नहीं आती और मालूम पड़ता है कि, वातरक्त रोग से मैं शीघ्र आक्रान्त हो जाऊँगा । वह सुख नहीं, जिसमें रोग का भय बना रहे और खाने को कलेवा तक न मिले ।

( ततः प्रविशति चेटी )

**चेटी**—कहिं णु खु गदो अय्यवसन्तओ । ( परिक्रम्य ) अह्मो एसो अय्यवसन्तओ । ( उपगम्य ) अय्य ! वसन्तअ ! को कालो, तुमं अण्णेसामि । [कुत्र नु खलु गत आर्यवसन्तकः । अहो एष आर्यवसन्तकः । आर्य ! वसन्तक ! कः कालः, त्वामन्विष्यामि ❀ । ]

**विदूषकः**—( दृष्ट्वा ) किंणिमित्तं भद्दे ! मं अण्णेसदि । [ किन्निमित्तं भद्रे ! मामन्विष्यसि † । ]

**चेटी**—अह्माणं भट्टिणी भणादि—अवि ह्णादो जामादुओ त्ति । [ अस्माकं भट्टिनी भणति—अपि स्नातो जामातेति ‡ । ]

---

❀ स्वामिन्या आज्ञया विदूषकमन्वेषयन्ती चेटी प्रविष्य कथयति—कहिं णु—इति । वसन्तक इति विदूषकस्य नाम , आर्येति विशेषणं तस्य ब्राह्मणत्वेन जामातृमित्रत्वेन पूज्यत्वं द्योतयति, कुत्र गत आर्यवसन्तकः? कथञ्च तमुपलप्स्ये—इत्यर्थः । तदन्वेषणार्थमितस्ततः परिभ्रम्य तं दृष्ट्वा च सहर्षमाह अह्मो—इति । तत्समीपमुपगम्य वदति—आर्य—इति । कः कालः त्वामन्विष्यामि = त्वामन्वेषयन्त्याः मम अतीतो भूयान् समय इत्यर्थः ।

† विदूषकश्चेटीं दृष्ट्वा स्वान्वेषणकारणं पृच्छति—किं णिमित्तं—इति । भद्रे ! = कल्याणि ! किमर्थं ममान्वेषणं कुरुष इत्यर्थः ।

‡ चेट्युत्तरयति—अह्माणं-इति । भट्टिनी = स्वामिनी, महाराजदर्शकपत्नी । भणति = पृच्छति । अपिः प्रश्नवाचकः । जामाता = वत्सराजोदयनः । स्नातः = कृतस्नानः । जामातुर्वत्सराजस्योदयनस्य स्नानं निर्वृत्तं न वेति प्रश्नः ।

---

**चेटी**—आर्य वसन्तक कहाँ गये ? । ( जरा टहल कर ) अहा ! वे तो यहीं पर हैं । आर्यवसन्तक ! भला मैं कितनी देर से आपको खोज रही हूँ ।

**विदूषक**—भद्रे ! मुझे आप क्यों खोज रही हैं ?

**चेटी**—स्वामिनी पूछ रही हैं कि, क्या जामाता स्नान कर चुके ?

विदूषकः—किंणिमित्तं भोदि ! पुच्छदि ❀ [ किन्निमित्तं भवति ! पृच्छति । ]

चेटी—किमण्णं । सुमणो वण्णअं आणेमि त्ति । † [ किमन्यत् । सुमनोवर्णकमानयामीति । ]

विदूषकः—ह्लादो तत्तभवं । सव्वं आणेदु भोदी वज्जिअ भोअणं । [ स्नातस्तत्रभवान् । सर्वमानयतु भवती वर्जयित्वा भोजनम् ‡ । ]

---

❀ विदूषकः प्रश्नकारणं पृच्छति—किं णिमित्तं-इति । भवति = मान्ये । किन्निमित्तम् = किमर्थम् । तव स्वामिनीति शेषः । तव स्वामिनी जामातुः स्नानं सम्पन्नं नवेति किमर्थं पृच्छतीत्यर्थः ।

† चेट्युत्तरयति—किमण्णं इति । अन्यत्किम् = वक्ष्यमाणनिमित्तातिरिक्तं नान्यन्निमित्तमित्यर्थः । निमित्तमाह—सुमणोवण्णअं इति । सुमनसः = पुष्पाणि, वर्णकं चन्दनानुलेपनादीनि एतेषां समाहारः । "स्त्रियः सुमनसः पुष्पम्" "विलेपने चन्दने च वर्णकं पुंनपुंसकम्" इत्यमर-रभसकोशौ । आनयामि = आनेतुमिच्छामि यद्वा-विध्यर्थे लट् । आनयेयमित्यर्थः । प्रश्नस्य नान्यत्कारणम्, यदि जामातुः स्नानं सम्पन्नम्, तर्हि स्रक्चन्दनानुलेपनादिसामग्रीमानेतुमिच्छामीत्यर्थः ।

‡ विदूषक उत्तरयति—ह्लादो-इति । तत्रभवान् स्नातः = राजा उदयनः कृतस्नान इत्यर्थः । वर्जयित्वा = विहाय । राज्ञः स्नानं सम्पन्नम्, भवत्या भोजनं विना सर्वमन्यत् समानेतव्यमित्यर्थः । अत्रायं भावः—यदि चेटी स्रक्चन्दनादि सामग्र्या सहैव भोजनमप्यानयेत् तर्हि विदूषकस्यापि राज्ञा सह भोक्तव्यमापतेत्, सम्प्रति मन्दाग्निश्च विदूषको भोजनं नेच्छति, प्रकृते अप्रस्तुतमपि भोजनानयनवर्जनं विदूषकस्य सर्वदा भोजनैकदृष्टित्वमाविष्करोति ।

---

विदूषक—क्यों पूछ रही हैं !

चेटी—अरे दूसरा क्या, ( यही कि, यदि स्नान कर चुके हों, तो ) फूल, माला, चन्दन आदि ला करके देवें ।

विदूषक—हाँ, राजा स्नान कर चुके ! भोजन को छोड़ और जो कुछ लाना हो ला दो !

चेटी—किंणिमित्तं वारेसि भोअणं। [ किन्निमित्तं वारयसि भोजनम् ❀। ]

विदूषकः—अधण्णस्स मम कोइलाणं अक्खिपरिवट्टो विअ कुक्खिपरिवट्टो संवुत्तो। [ अधन्यस्य मम कोकिलानामक्षिपरिवर्त इव कुक्षिपरिवर्तः संवृत्तः †। ]

चेटी—ईदिसो एव्व होहि। [ ईदृश एव भव। ‡ ]

विदूषकः—गच्छदु भोदी। जाव अहं वि तत्तहोदो सआसं गच्छामि। [गच्छतु भवती। यावदहमपि तत्रभवतः सकाशं गच्छामि। § ]

---

❀ चेटी भोजनानयनवर्जनकारणं पृच्छति—किण्णिमित्तं-इति। भोजनम् = भोजनानयनम्। वारयसि = वर्जयसि।

† विदूषकस्तत्कारणं कथयति—अधण्णस्स-इति। अधन्यस्य = हतभागस्य। कोकिलानाम् = पिकानाम्। अक्षिपरिवर्त इव = अक्ष्णां चक्षुषां परिवर्तः परिभ्रमणमिव। कुक्षिपरिवर्तः = उदरविकारः, जठरगुड़गुड़ायितमित्यर्थः। सवृत्तः = सञ्जातः। यथा मकरन्दरसमत्तानां कोकिलानामक्षिकनीनिकाः मदघूर्णिता इतस्ततो भ्रमन्ति, तथा मन्दाग्निवशान्ममोदरे परिवर्तमानः कुपितो वातो गुड़गुड़ायितं वितनुते। तेन मया भोजनानयननिषेधः कृत इत्यर्थः। परिहासोक्तिरियम्।

‡ विदूषकोक्तिं निशम्य चेटी सपरिहासं तमाशीर्भिरभिवर्द्धयति—ईदिसो-इति। ईदृश एव = सर्वदा उदरविकाररोगग्रस्त एव। भव = वर्तस्व। इयमपि परिहासोक्तिः।

§ राजसमीपं जिगमिषुर्विदूषक आह—गच्छदु-इति। त्वं पद्मावत्याः समीपं गच्छेत्यर्थः। तत्रभवतः = मान्यस्य राज्ञ उदयनस्य। सकाशम् = समीपम्।

---

चेटी—तो फिर भोजन के लिये क्यों मना कर रहे हैं ?

विदूषक—इसी लिये कि, मुझ अभागे के पेट में कोयल की आँख के सदृश कुछ ऐसा उलट फेर हो गया है।

चेटी—ऐसा ही हो।

विदूषक—तुम जाओ। मैं भी राजा के पास जाता हूँ।

( निष्क्रान्तौ )

प्रवेशकः ।

( ततः प्रविशति सपरिवारा पद्मावती आवन्तिकावेषधारिणी वासवदत्ता च ✻ )

चेटी—किंणिमित्त भट्टिदारिआ पमदवणं आअदा । [ किन्निमित्तं भर्तृदारिका प्रमदवनमागता † । ]

पद्मावती—हला ! ताणि दाव सेहालिआगुम्मआणि पेक्खामि कुसुमिदाणि वा ण वेत्ति । [ हला ! ते तावत् शेफालिकागुल्मकाः प्रेक्षे कुसुमिता वा नवेति ‡ । ]

---

✻चेटीविदूषकयोः प्रस्थानं दर्शयति—निष्क्रान्ताविति । ततः प्रविशतीति । सपरिवारा=चेट्यादि परिचारिकासहिता, आवन्तिकावेषधारिणीति पूर्वं व्याख्यातम् ।

† भर्तरि राज्ञि उदयने सुमनोवर्णकग्रहणादिकार्यापदेशेनान्तःपुरं गते सति लज्जया तत्रोपस्थातुमक्षमान्, अत एव प्रमदवनमागतां पद्मावतीं तत्राऽगमनकारणं पृच्छति चेटी—किं णिमित्तं-इति । आज्ञाविधेये मादृशे परिजने सति भर्तृदारिकया प्रमदवनगमनप्रयासः किमर्थं साधित इति प्रश्नः ।

‡ पद्मावत्युत्तरयति—हला-इति । ते=मया सयत्नं संवर्द्धिताः, पुरोदृश्यमानाः तावदिति वाक्यालङ्कारे । शेफालिकागुल्मकाः=शेफालिकाख्या वृक्षविशेषाः । भाषायाम् "पारिजात" इति प्रसिद्धाः । गुल्मा एव गुल्मकाः स्तम्बाः "अप्रकाण्डे स्तम्बगुल्मौ" इत्यमरः । कुसुमिताः=सञ्जातकुसुमाः, पुष्पिता इत्यर्थः । तथावि-

---

( दोनों चले गये )

प्रवेशक ।

( परिजन और अवन्तिका का वेष धारण की हुई वासवदत्ता के साथ पद्मावती आती है )

चेटी—राजकुमारी का प्रमदवन में क्योंकर आना हुआ ।

पद्मावती—यही देखने के लिये कि, पारिजात के वे गुच्छे खिले या नहीं।

चेटी—भट्टिदारिए ! ताणि कुसुमिदाणि णाम, पवालन्तरिदेहिं विअ मोत्तिआलम्बएहिं आइदाणि कुसुमेहिं । [ भर्तृदारिके ! ते कुसुमिता नाम, प्रवालान्तरितैरिव मौक्तिकलम्बकैराचिताः कुसुमैः । ❀ ]

पद्मावती — हला ! जदि एव्वं, किं दाणिं विलम्बेसि ।
[ हला ! यद्येवं, किमिदानीं विलम्बसे † । ]

चेटी—तेण हि इमस्सिं सिलावट्टए मुहुत्तअं उपविसदु भट्टिदारिआ । जाव अहं वि कुसुमावचअं करेमि । ‡ [ तेन ह्यस्मिन् शिलापट्टके

---

घास्ते शेफालिका गुल्मकाः । (कुसुमिता न वा, इति पश्यामीति सम्बन्धः मया प्रयत्नपरिवर्द्धितेषु शेफालिकास्तम्बेषु कुसुमान्युद्गतानि नवेत्यवलोकयितुमेवाहमत्र समागतेति भावः ।

❀ चेट्युत्तरयति—भट्टिदारिए–इति । ते = शेफालिकागुल्मकाः कुसुमिताः = पुष्पिताः । नामेति निश्चये । प्रवालान्तरितैः = प्रवालैः विद्रुममणिभिरन्तरितानि व्यवहितानि तैः । मध्ये मध्ये गुम्फितविद्रुमैरित्यर्थः । मौक्तिकलम्बकैरिव = मुक्ता एव मौक्तिकानि, तेषां लम्बकानि, अधोलम्बमानाः ललन्तिकाख्याः भूषणविशेषाः, तैरिव । कुसुमैः = पुष्पैः । आचिताः = व्याप्ताः । दृश्यन्त इति शेषः । मूले अरुणवर्णानि, ततः परं श्वेतान्येतानि पुष्पाणि किल प्रवालमिश्रमौक्तिकनिर्मितकण्ठभूषणानीव प्रतीयन्ते । तानि पश्येत्यर्थः ।

† पुरतः शेफालिकाकुसुमानि विकसितानि दृष्ट्वा पद्मावती तदवचयने चेटीं नियुङ्क्ते—हला–इति । यद्येवम् = शेफालिकाः कुसुमिता यदि, इदानीं किं विलम्बसे = इदानीं किमर्थं विलम्बं करोषि । शीघ्रं तान्यवचिन्विन्वित्यर्थः ।

‡ पद्मावत्या आज्ञया चेटी कुसुमावचयं चिकीर्षति—तेण हि–इति । तेन हि = तर्हि । अस्मिन् = पुरःस्थे । शिलापट्टके = पाषाणखण्डे । मुहूर्तकम् = क्षणमा-

---

चेटी—राजकुमारि ! वे तो खिल गये हैं और ऐसे मालूम होते हैं, जैसे मूँगों से छिपी मोती की कण्ठी हो ।

पद्मावती—यदि ऐसा है, तो देर क्यों कर रही हो ?

चेटी—अच्छा तो आप जरा इस पत्थर की पटिया पर बैठ जायँ, मैं फूल चुन लेती हूँ ।

मुहूर्तकमुपविशतु भर्तृदारिका। यावदहमपि कुसुमावचयं करोमि। ]

पद्मावती—अय्ये! किं एत्थ उपविसामो। [ आर्ये! किमत्रोपविशावः ※। ]

वासवदत्ता—एव्वं होदु! [ एवं भवतु †। ]

( उभे उपविशतः )

चेटी—( तथा कृत्वा ) पेक्खदु पेक्खदु भट्टिदारिआ। अद्धमणसिलावट्टएहिं विअ सेहालिआकुसुमेहिं पूरिअं मे अंजलिं ‡। [ पश्यतु पश्यतु भर्तृदारिका। अर्द्धमनश्शिलापट्टकैरिव शेफालिकाकुसुमैः पूरितं

यम्। यावन्मया कुसुमान्यवचीयन्ते, तावदित्यर्थः। उपविशतु = तिष्ठतु। यावदहं कुसुमावचयं कृत्वा आगच्छामि, तावद्भर्तृदारिकया इह शिलाखण्डे विश्रम्यतामित्यर्थः।

※ चेटीनिर्दिष्टं पाषाणखण्डमुपवेष्टुमुद्यता पद्मावती तत्र वासवदत्ताया अनुमतिं जिज्ञासति—अय्ये-इति। आर्ये = माननीये वासवदत्ते। अस्मिञ्छिलाखण्ड आवाभ्यामुपवेष्टुमुचितं किमिति प्रश्नः।

† अनुमोदमाना वासवदत्ता वदति—एव्वं होदु-इति। उपविश्यतामित्यर्थः।

‡ पद्मावत्याज्ञयावचितपुष्पा चेटी वदति—तथा कृत्वेति। अञ्जली पुष्पाण्यापूर्येत्यर्थः। पेक्खदु-इति। अर्धमनःशिलापट्टकैरिव = मनःशिला = "मैनसिल" इति भाषायां ख्यातः अरुणवर्णः गिरिप्रभवो धातुविशेषः। अर्द्धम् = एकदेशः, मनश्शिलापट्टो येषान्तैरिव प्रतीयमानैः मनश्शिलाखण्डवदरुणप्रथमार्द्धैरित्यर्थः। शेफालिकाकुसुमैः पारिजातपुष्पैः। पूर्वं शेफालिकाकुसुमपूर्वार्द्धः विद्रुमखण्डैरुपमितः, इह तु मनश्शिलाखण्डैरिति वैलक्षण्यम्। शेफालिकापुष्पाणाम् अर्द्धारुणत्वान्मन-

पद्मावती—( वासवदत्ता से ) आर्ये! क्या हम दोनों यहाँ बैठें ?

वासवदत्ता—बैठिये।

( दोनों बैठती हैं )

चेटी—( दिखा कर ) राजकुमारि! देखिये। मैनसिल के टुकड़ों के समान पारिजात के फूलों से मेरी अञ्जुली कैसी भर गयी है।

मेऽञ्जलिम्। ]

पद्मावती—( दृष्ट्वा ) अह्हो विइत्तदा कुसुमाणं। पेक्खदु पेक्खदु अय्या। [ अहो विचित्रता कुसुमानाम् ! पश्यतु पश्यत्वार्या ❀। ]

वासवदत्ता—अहो दस्सणीअदा कुसुमाणं। [ अहो दर्शनीयता कुसुमानाम् †। ]

चेटी—भट्टिदारिए ! किं भूयो अवइणुस्सं। [ भर्तृदारिके ! किं भूयोऽवचेष्यामि ‡। ]

पद्मावती—हला ! मा मा भूयो अवइणिअ। [ हला ! मा मा भूयोऽवचित्य §। ]

---

शिलाघटितैकदेशत्वमुत्प्रेक्ष्यते। पूरितम् = पूर्णम्। भर्तृदारिके ! ममाञ्जलिस्थानि पारिजातपुष्पाणि पश्य, तानि मनश्शिलाघटितैकदेशान्येव प्रतीयन्त इति भावः।

❀ पद्मावती पुष्पाणि दृष्ट्वा प्रशंसति—अहो—इति।

अहो—इत्याश्चर्ये। विचित्रता = वैचित्र्यम्, श्वेतरक्तोभयविधवर्णशालिता। प्रायः एकवर्णान्येव कुसुमान्यवलोक्यन्ते एतानि तु द्विवर्णानीति महदाश्चर्यम्—इत्याशयेन वासवदत्तां दर्शयति—पेक्खदु—इति। अत्र वीप्सयौत्सुक्यं प्रतीयते।

† पद्मावत्या समर्पितानां कुसुमानां सौन्दर्यं वासवदत्ता अभिनन्दति—अहो—इति। अहो—इत्याश्चर्ये। दर्शनीयता = शोभा। सत्यमिमानि पुष्पाणि सौन्दर्यविशेषेण दर्शनीयान्येवेत्यर्थः।

‡ पद्मावतीवासवदत्ते पुष्पसौन्दर्यमोहिते दृष्ट्वा चेटी भूयः पुष्पावचयं प्रस्तौति—भट्टिदारिए—इति। अवचेष्यामि = अवचिनुयामित्यर्थः। विध्यर्थे लृट्। यद्यनुमन्यते भर्तृदारिका, तदा सन्नद्धाऽस्म्यहं पुष्पावचयायेति भावः।

§ पद्मावती निषेधति—हला—इति। मामेति द्विरुक्तिर्निषेधदार्ढ्याय। भूयः

---

पद्मावती—( देखकर ) वाह ! कैसे विचित्र फूल हैं आप देखें तो सही।

वासवदत्ता—वाह ! बहुत ही सुन्दर फूल हैं।

चेटी—राजकुमारि ! क्या फिर और चुनूँ ?

पद्मावती—नहीं नहीं। अब रहने दो।

वासवदत्ता—हला ! किंणिमित्तं वारेसि । [ हला ! किन्निमित्तं वारयसि * । ]

पद्मावती—अय्यउत्तो इह आअच्छिअ ईमं कुसुमसमिद्धिं पेक्खिअ सम्माणिदा भवेअं । [ आर्यपुत्र इहागत्येमां कुसुमसमृद्धिं दृष्ट्वा सम्मानिता भवेयम् † । ]

वासवदत्ता—हला ! पिओ दे भत्ता । [ हला ! प्रियस्ते भर्ता ‡ । ]

---

पुष्पावचयो न कर्तव्य इत्यर्थः । मा 'अविचित्य' इति प्रयोगस्तु महाकविप्रयोगत्वात् कथञ्चिन्नेयः ।

* पुष्पावचयं निषेधन्तीं पद्मावतीं वासवदत्ता तत्कारणं पृच्छति—हला-इति । पुष्पावचनवारणे किं कारणमिति प्रश्नः ।

† पद्मावती तत्कारणं प्रकटीकरोति—अय्यउत्तो-इति । कुसुमसमृद्धिम् = पुष्पप्रचुरताम् । सम्मानिता = आदृता । भवेयमिति सम्भावना । अत्र कश्चित्पाठः परिभ्रष्टः प्रतीयते । "सम्माणिदा भवेअं" इत्यत्र "सम्माणिदो भवे" इति पाठो युक्तः प्रतिभाति । साध्व्याः पद्मावत्या आत्मसम्मानकामनापेक्षया भर्तृसम्मानकामनाया एव समुचितत्वात् । यदि 'सम्माणिदा भवेअं' इत्येव पाठो युक्त इत्याग्रहः, तर्हि 'अय्य उत्तो' इत्यस्य स्थाने 'अय्यउत्तेण' इति तृतीयान्तं प्रयोक्तुमुचितम् । आर्यपुत्र इत्यस्यैव कर्तुरावृत्तिभेदेन आगत्य, दृष्ट्वा, सम्मानितो भवेत्, इति त्रिष्वपि स्थलेषु सङ्गमनं सुवचम् । अत्र कैश्चिदभिनवैष्टीकाकारैर्बहवः स्वकल्पिताः पाठा अर्थाश्च प्रकटीकृताः, पूर्वेषां टीकाकाराणां व्याख्यानं चापलमूलकं हास्यपोषकञ्चेति व्याहृतम् , ऋजुबुद्धयो वयन्तु पूर्वेषां कथनं साधीयो मन्यामहे । नव्यटीकाकृतां वचःस्वारस्यमवगाढुं नास्ति सामर्थ्यमस्माकमिति तत्परीक्षणं निष्पक्षाणां विदुषां कृते विमुच्यते । छात्रवर्गस्तु सरलेनैवार्थेन संतुष्येत् ।

‡ वासवदत्ता पद्मावत्याः पतिप्रीतिं परीक्षते—हला-इति । सखि ! पद्मावति !

---

वासवदत्ता—सखि ! क्यों मना कर रही हो ?

पद्मावती—यदि स्वामी यहाँ आकर इन फूलों को देखेंगे तो उससे मैं सम्मानित होऊँगी ।

**पद्मावती**—अय्ये ! ण आणामि, अय्यउत्तेण विरहिदा उक्कण्ठिदा होमि । [आर्ये ! न जानामि, आर्यपुत्रेण विरहितोत्कण्ठिता भवामि ।*]

**वासवदत्ता**—( आत्मगतम् ) दुक्करं खु अहं करेमि इअं वि णाम एव्वं मन्तेदि । [ दुष्करं खल्वहं करोमि, इयमपि नामैवं मन्त्रयते † । ]

**चेटी**—अभिजादं खु भट्टिदारिआए मन्तिदं—पिओ मे भत्तात्ति । [ अभिजातं खलु भर्तृदारिकया मन्त्रितं—प्रियो मे भर्तेति । ‡ ]

---

अपि ते भर्ता प्रियः प्रतीयत इति प्रश्नः ।

*पद्मावती नवोढोचितध्वनिमर्यादया पत्यौ प्रीतिं प्रकाशयति—अय्ये-इति। 'प्रियस्ते भर्ता' इति त्वत्प्रश्नार्थे न जानामि=न वेद्मि, मम भर्ता प्रियो न वेति, मया ज्ञातुं न पार्यत इत्यर्थः । विरहिता=वियुक्ता । उत्कण्ठिता=दर्शनौत्सुक्य पर्य्याकुला । आर्यपुत्रविरहे तेन विना दूनाऽहं सोत्कण्ठं तद्दर्शनं प्रतीक्ष इत्यर्थः । अत्र पर्युत्सुकतान्यथानुपपत्त्या पद्मावत्या स्वकीयं पतिप्रेम व्यङ्ग्यमर्यादयाऽऽविष्कृतम्।

† पद्मावतीवचनं श्रुत्वा वासवदत्ता मनसि विमृशति दुक्करं-इति। दुष्करम् =दुःसम्पादम्, दुःखेन कर्तुं शक्यमित्यर्थः। खल्विति निश्चये । आर्यपुत्रैक-प्राणाप्यहं तमार्यपुत्रमन्यत्र प्रीतिमन्तं दृष्ट्वाऽपि तत्र प्रेम वहामीति दुष्करं कार्यमहं करोमीति वासवदत्ताया आशयः ।

इयमपीति—नामेति वाक्यालङ्कारे । अल्पकालमेवाऽऽर्यपुत्रेण सहोषिता-ऽपीत्यर्थः । एवं मन्त्रयते='आर्यपुत्रेण विरहितोत्कण्ठिता भवामि' इति भाषते ।

‡चेटी पद्मावतीं प्रशंसति—अभिजादं-इति । अभिजातम्=स्वकुलीन-

---

**वासवदत्ता**—सखि ! तुम्हें पति प्यारे हैं ?

**पद्मावती**—आर्ये ! यह तो मैं नहीं जानती, पर उनके बिना जी लगता नहीं ।

**वासवदत्ता**—( मन में ) ओह ! तब तो मैं बड़ा ही कठिन काम कर रही हूँ । जब कि, यह भी ऐसा कहती है ।

**चेटी**—"पति मुझे प्रिय है" राजकुमारी का यह कहना अपनी कुलीनता के अनुकूल ही है ।

पद्मावती—एक्को खु मे सन्देहो । [ एकः खलु मे सन्देहः ❀ । ]

वासवदत्ता—किं किं । [ किं किम् † । ]

पद्मावती—जह मम अय्यउत्तो, तह एव्व अय्याए वासवदत्ताए त्ति । [ यथा ममाऽर्यपुत्रस्तथैवाऽर्याया वासवदत्ताया इति ‡ । ]

वासवदत्ता—अदो वि अहिअं । [ अतोऽप्यधिकम् § । ]

---

तानुगुणम्, न्याय्यम् वा, "अभिजातः कुलीने स्यान्न्याय्यपण्डितयोस्त्रिषु" इति मेदिनी । खल्विति निश्चये । मन्त्रितम्=गूढार्थमभिहितम् । मम पतिः प्रिय इति स्पष्टमनुक्त्वा निजकुलीनताकन्यकाभावाद्यनुगुणमेव राजकुमार्या गूढोक्त्या पतिप्रेम निदर्शितमित्यर्थः ।

❀ पद्मावती वासवदत्तामाह—एक्को–इति । खल्विति वाक्यालङ्कारे । एकः संशयो मे हृदि वर्तते, स त्वया निवार्यतामिति भावः । आवन्तिकेयमर्यभगिनी आर्यपुत्रस्य सौन्दर्यमिव वासवदत्ताविषयिणीं प्रीतिमपि यदि जानाति, तर्हि तदपि मयाऽवगन्तुमुचितमित्यभिप्रायेण पद्मावत्याः अयं प्रश्नः ।

† वासवदत्ता पृच्छति—किं किं–इति । द्विरुक्त्या वासवदत्तायाः संशयश्रवणौत्कण्ठ्यं द्योत्यते ।

‡ पद्मावत्युत्तरयति—जह–इति । प्रिय इति शेषः । यथा ममाऽर्यपुत्रे प्रेम वर्तते, तथैव आर्याया वासवदत्ताया अपि प्रेम आसीत् ? ततो न्यूनमधिकं वाऽऽसीत् तन्मे कथयेत्यर्थः ।

§ वासवदत्तोत्तरयति—अदो वि–इति । अतोऽप्यधिकम्=यादृग् तव प्रिय आर्यपुत्रः, ततोऽप्यधिकं स वासवदत्तायाः प्रिय आसीदित्यर्थः । वासवदत्तायाः प्रीतिप्रकर्षस्य पुरः तव प्रीतिर्नगण्येवेति भावः ।

---

पद्मावती—मेरा एक सन्देह है ।

वासवदत्ता—क्या ? क्या ?

पद्मावती—जैसे मेरे लिये स्वामी प्रिय हैं, वैसे ही वासवदत्ता के लिये भी हैं कि नहीं ?

वासवदत्ता—उससे भी कहीं अधिक ।

**पद्मावती**—कहं तुवं जाणासि। [ कथं त्वं जानासि * ]

**वासवदत्ता**—† ( आत्मगतम् ) हं, अय्यउत्तपक्खवादेण अदिक्कन्दो समुदाआरो। एव्वं दाव भणिस्सं। (प्रकाशम्) जइ अप्पो सिणेहो, सा सजणं ण परित्तजदि। [ हम्, आर्यपुत्रपक्षपातेनातिक्रान्तः समुदाचारः। एवं तावद् भणिष्यामि। यद्यल्पः स्नेहः, सा स्वजनं न परित्यजति। ]

**पद्मावती**—होदव्वं। [ भवितव्यम् ‡। ]

**चेटी**—भट्टिदारिए ! साहु भट्टारं भणाहि—अहं पि वीणं सिक्खि-

---

* पद्मावती पृच्छति—कहं–इति। मदपेक्षयाऽपि वासवदत्ता पत्यौ सविशेषं स्निह्यतिस्मेति कथं त्वं जानासीत्यर्थः।

† पद्मावत्याः प्रश्नमाकर्ण्य स्वस्वरूपप्रकाशनाद्भीता वासवदत्ता सानुशयं स्वगतं विमृशति—हं–इति। हमिति शङ्कापश्चात्तापादिसूचकमव्ययम्। आर्यपुत्रपक्षपातेन = पतिप्रेमाभिनिवेशेन। समुदाचारः = आत्मस्वरूपगोपनरूपाचारः। अतिक्रान्तः = उल्लङ्घितः। एवम् = वक्ष्यमाणप्रकारेण। भणिष्यामि = उत्तरयिष्यामि। पतिप्रेमाभिनिवेशवशान्मया आत्मस्वरूपगोपनं विस्मृतम् भवत्विदानीमेवमभिधास्ये इति भावः। प्रकाशमाह—जइ–इति। अल्पः = तदपेक्षया न्यूनः। स्नेहः = प्रेम। स्वजनम् = मातापित्रादिकमात्मीयवर्गम्। न परित्यजति = न परित्यजेत्। सम्भावनार्थे लट्। यदि वासवदत्तायाः पतिप्रेम त्वदपेक्षया न्यूनमभविष्यत् तर्हि सा पत्युः कृते मातापित्रादिस्वजनस्य परित्याग नाकरिष्यत्। अतस्त्वदपेक्षयाधिकं तस्याः प्रेमेति भावः।

‡ पद्मावती तदनुमोदते—होदव्वं–इति। युज्यत इत्यर्थः।

---

पद्मावती—तुम कैसे जानती हो ?

वासवदत्ता—( मन में ) हाँ, स्वामी के पक्षपात से मैं व्यवहार को भूल गयी। खैर, इस प्रकार कहूँ। ( प्रकट ) थोड़ा प्रेम होने से तो कोई अपने आत्मीय लोगों को नहीं छोड़ देता।

पद्मावती—हाँ, हो सकता है।

स्सामि त्ति । [ भर्तृदारिके ! साधु भर्तारं भण—अहमपि वीणां शिक्षिष्य इति ❀ । ]

पद्मावती—उत्तो मये अय्यउत्तो । [ उक्तो मयार्यपुत्रः † । ]

वासवदत्ता—तदो किं भणिदं । [ ततः किं भणितम् ‡ । ]

पद्मावती—अभणिअ किञ्चि दिग्घं णिस्ससिअ तुह्णीओ संवुत्तो । [ अभणित्वा किञ्चिद्दीर्घं निःश्वस्य तूष्णीकः संवृत्तः § । ]

वासवदत्ता—तदो तुवं किं विअ तक्केसि । [ ततस्त्वं किमिव तर्कयसि ▽ । ]

---

❀ वासवदत्तया भर्तुः सकाशाद्वीणावादनशिक्षा अधिगता, तयैव भर्तुः प्रेम समासादितम् इति पूर्ववृत्तं जानती चेटी पद्मावतीं भर्तुर्वीणाशिक्षाधिगमार्थं प्रेरयति—भट्टिदारिए-इति । साधु = सम्यक्, तच्चित्तानुवर्तनपूर्वकमित्यर्थः । भर्तारं भण = भर्तारं प्रार्थयस्व । अहमपि = यथा वासवदत्तया वीणावादनशिक्षाधिगता, तथाऽहमपि वीणावादनशिक्षामधिगन्तुमिच्छामीत्यर्थः ।

† पद्मावती वदति—उत्तो-इति । वीणावादनशिक्षाविषये आर्यपुत्रो मया प्रार्थित इत्यर्थः ।

‡ अत्रार्थे आर्यपुत्रोत्तरं श्रोतुं सोत्कण्ठा वासवदत्ता पृच्छति—तदो-इति । तेनेत्यध्याहार्यम् । भवत्याः प्रार्थनां निशम्य तदुपर्यार्यपुत्रेण किमुत्तरितमित्यर्थः ।

§ पद्मावती वदति—अभणिअ-इति । अभणित्वा किञ्चित् = किमपि नोक्त्वा । तूष्णीकः = तूष्णींशीलः मौनीति यावत् । आर्यपुत्रेण मम प्रार्थनां निशम्य तदुपरि किमपि नोत्तरितं केवलं दीर्घं निःश्वस्य स मौनमेवालम्बितवानिति भावः ।

▽ वासवदत्ता पृच्छति—तदो-इति । ततः = तत्रेत्यर्थः । भर्तृकृतदीर्घनिःश्वास-

---

वासवदत्ता—राजकुमारि ! अपने स्वामी से कहो कि, मैं वीणा बजाना सीखूँगी ।

पद्मावती—मैंने उनसे कहा था ।

वासवदत्ता—फिर, उन्होंने क्या कहा ?

पद्मावती—बिना कुछ कहे ही ऊँची साँस लेकर चुप रह गये ।

वासवदत्ता—फिर इससे तुम क्या समझती हो ?

**पद्मावती**—तक्केमि अय्याए वासवदत्ताए गुणाणि सुमरिअ दक्खिणदाए मम अग्गदो ण रोदिदित्ति। [ तर्कयाम्यार्याया वासवदत्ताया गुणान् स्मृत्वा दक्षिणतया ममाग्रतो न रोदितीति ❀। ]

**वासवदत्ता**—( आत्मगतम् ) धञ्ञा खु ह्मि, जदि एव्वं सच्चं भवे [ धन्या खल्वस्मि, यद्येवं सत्यं भवेत् †। ]

( ततः प्रविशति राजा विदूषकश्च ‡ )

---

पूर्वके मौनधारण इति भावः। त्वं किमिव तर्कयसि = तन्मौनधारणस्य किं कारणं विभावयसि।

❀ पद्मावती स्वतर्कं दर्शयति—तक्केमि—इति। तर्कयामि = सम्भावयामि। गुणान् = वीणावादनकौशलपतिप्रेमप्रकर्षप्रभृतीन् सद्गुणान्। दक्षिणतया = सर्वासु पत्नीषु समानप्रेमप्रदर्शनरूपेण, वैदग्ध्येनेत्यर्थः। अग्रतः = पुरः। न रोदिति = नारोदीत्। अहं तर्कयामि। यत् स्वयं शिक्षितायाः प्रियपत्न्या वासवदत्ताया वीणावादनकौशलप्रेमप्रकर्षादीन् सद्गुणान् तदानीं स्मृत्वा शोकविह्वलोऽप्यार्यपुत्रः दाक्षिण्येन शोकमप्रकाश्य मम पुरो नारोदीत्, किन्तु तस्य हृदयन्तु निश्चयेन शोकविह्वलमभूदिति भावः।

† इत्थं पद्मावत्या वितर्कं श्रुत्वा आत्मानं भाग्यवतीं मन्यमाना वासवदत्ता स्वगतं वदति—धञ्ञा—इति। धन्या खल्वस्मि = निश्चयेन भाग्यवत्यस्मि। एवम् = पद्मावत्युक्तम्, सत्यं भवेत् = यथार्थं भवेत्। पद्मावत्या यदुक्तं तद्यदि यथार्थं भवेत्तर्हि निश्चयेनाऽहं धन्याऽस्मीत्यर्थः।

‡ अथ राज्ञा सह विदूषकस्य प्रवेशमाह—ततः प्रविशतीति।

---

**पद्मावती**—मेरा तो अनुमान यह है कि, आर्या वासवदत्ता के गुणों का स्मरण करते हुए भी सङ्कोच के मारे वे मेरे सामने नहीं रोते।

**वासवदत्ता**—( मन में ) यदि ऐसी बात है, तब तो मैं भाग्यवती हूँ।

( राजा और विदूषक आते हैं )

विदूषकः—ही ही । पचिअपडिअबन्धुजीवकुसुमविरलवादरमणिउजं पमदवणं । इदो दाव भवं । [ ही ही । प्रचितपतितबन्धुजीवकुसुमविरलपातरमणीयं प्रमदवनम् । इतस्तावद् भवान् ❀ । ]

राजा—वयस्य वसन्तक ! अयमयमागच्छामि † ।

कामेनोज्जयिनीं गते मयि तदा कामप्यवस्थां गते

दृष्ट्वा स्वैरमवन्तिराजतनयां पञ्चेषवः पातिताः ।

---

❀ विदूषकः स्वानुरूपं वचनं वदति—ही ही—इति । ही ही—इति हर्षद्योतकमव्ययम् । प्रचितपतितबन्धुजीवकुसुमविरलपातरमणीयम् = प्रचितानाम्-प्रमदवने पूर्वमागतैः निःशङ्कमवचितानाम्, पतितानाम्-वृन्ततः स्वयंभ्रष्टानाम्, बन्धुजीवकुसुमानाम्- बन्धूकपुष्पाणाम्, भाषायाम् 'दुपहरिया' इति ख्यातानाम्, विरलेन-स्वल्पेन पातेन पतनेन कारणेन, रमणीयम्—मनोहरम् । प्रमदवनम् = अन्तःपुरोचितमुद्यानम् । लक्ष्यत इति शेषः । प्रमदवने पूर्वमागतानामवचयादवशिष्टानि बन्धूकपुष्पाणि अत्रेतस्ततः पतितानि लक्ष्यन्ते, तेन याचकजनविलुप्तवैभवस्य धनिकस्येव प्रमदवनस्य सौभाग्यं लक्ष्यत इत्यर्थः । राजानं मार्गं दर्शयन्नाह—इदो-इति । अनेन मार्गेण भवता आगम्यतामित्यर्थः ।

† राजा विदूषकं वदति—वयस्येति । अयमयमिति द्विरुक्तिः प्रमदवनदर्शनसमुद्दीपितमन्मथस्य राज्ञो वासवदत्ताविरहव्यग्रतां पद्मावतीदर्शनोत्कण्ठाञ्च द्योतयति ।

राजा स्वावस्थां बोधयति—कामेनेति ।

( अन्वयः ) कामेन, उज्जयिनीम्, गते, सति, तदा, स्वैरम्, अवन्तिराजतनयाम्, दृष्ट्वा, काम्, अपि, अवस्थाम्, गते, मयि, पञ्च, इषवः, पातिताः । तैः,

---

विदूषक—अहा हा ! यद्यपि दुपहरिया के कुछ फूल तोड़ लिये गये हैं और कुछ झर पड़े हैं, तो भी थोड़े ही फूलों से प्रमदवन कैसा सुन्दर दिखाई दे रहा है । अच्छा, इधर से आइये ।

राजा—मित्र वसन्तक ! यह मैं आ गया ।

जब मैं उज्जयिनी गया और अवन्तिराजकुमारी वासवदत्ता को देखा तब मेरी विचित्र दशा हो गयी । उस समय कामदेव ने मुझ पर पाँचो बाण चला

**तैरद्यापि सशल्यमेव हृदयं भूयश्च विद्धा वयं**
**पञ्चेषुर्मदनो यदा कथमयं षष्ठः शरः पातितः ॥१॥**

हृदयम्, अद्यापि, सशल्यम्, एव, भूयश्च वयम्, विद्धाः, यदा, मदनः पञ्चेषुः, (तदा) अयम्, षष्ठः शरः कथम्, पातितः ॥१॥

(टीका) कामेन = मन्मथेन। उज्जयिनीम् = तदाख्यामवन्तिदेशराजधानीम्। गते सति = प्राप्ते सति। प्रद्योतनृपतेः सचिवेन निगृह्य मय्युज्जयिन्यां नीते सतीत्यर्थः। तदा = तस्मिन्नवसरे। स्वैरम् = यथेच्छम्। अवन्तिराजतनयाम् = अवन्तिराजस्य प्रद्योतस्य तनयां कन्यां वासवदत्तामित्यर्थः। दृष्ट्वा = विलोक्य। कामपि = वक्तुमशक्याम्। अवस्थाम् = दशाम्। कामपरवशतामित्यर्थः। गते = प्राप्ते। मयि = उदयने। पञ्च = पञ्चसंख्याकाः सर्वेऽपि। इषवः = बाणाः। पातिताः = निखाताः। वासवदत्तां पुरस्कृत्य कामेन स्वकीयाः सर्वेऽपि बाणाः मयि प्रक्षिप्ता इत्यर्थः। अनयोक्त्या राज्ञो वासवदत्तायामनुरागातिशयो गम्यते। तैः = कामेन मयि पातितैः स्वबाणैः। हृदयम् = मदीयं चेतः। अद्यापि = ततश्चिरकालेऽतीतेऽपि, वासवदत्तायां प्रमीतायामपि वा। सशल्यमेव = निखातशल्यमेवास्ति। अद्यापि मम हृदयात् ते शरा न निर्गता इत्यर्थः। भूयश्च = पुनश्च। वयम् = अहम्। अस्मदोर्द्वयोश्चेति बहुवचनम्। विद्धाः = पूर्वं व्यथिताशेषबाणेनापि कामेन सम्प्रति पद्मावतीं विषयीकृत्याऽहं बाणेन कृतक्षतोऽस्मीत्यर्थः। यदा = यदि। मदनः = कामः। पञ्चेषुः = पञ्च — पञ्चसंख्याका एव इषवो बाणा यस्य सः, पञ्चबाण इत्यर्थः। उक्तञ्च —

> अरविन्दमशोकं च चूतं च नवमल्लिका।
> नीलोत्पलञ्च पञ्चैते पञ्चबाणस्य सायकाः ॥ इति ॥
> उन्मादनस्तापनश्च शोषणः स्तम्भनस्तथा।
> सम्मोहनश्च कामस्य पञ्च बाणाः प्रकीर्तिताः ॥ इति ॥

(तदा) अयम् = एषः। षष्ठः शरः = पञ्चसङ्ख्यातिरिक्तः षष्ठो बाणः। कथम् = कुत आसाद्य। पातितः = पद्मावतीं — विषयीकृत्य मयि प्रक्षिप्तः। अत्र पञ्चबाण-

---

दिये। उनका घाव अभी हृदय में बना ही था कि, बस में फिर गहरी चोट लगी। भला जब कि कामदेव के पाँच ही बाण हैं, तो यह छठा कहाँ से आया ॥ १ ॥

विदूषकः—*क हिं णु खु गदा तत्तहोदी पदुमावदी, लदामण्डवं गदा भवे, उदाहो असणकुसुमसञ्चिदं वग्धचम्मावगुण्ठिदं विअ पव्वद-

स्यापि कामस्य षष्ठशरपातनमाश्चर्यावहम्। किञ्च राज्ञो हृदये वासवदत्तानुरागे बाढं प्रदीप्यमानेऽपि पद्मावतीविषयकप्रेमाऽपि तत्रास्पदं लभते। वासवदत्तामुद्दिश्य कामेन राज्ञि स्वकीयाः पञ्चापि बाणाः प्रक्षिप्ताः पद्मावतीमुद्दिश्य तु एक एव, सोऽपि न निजः, किन्तु कुतश्चिदासादितः। एतेन राज्ञो वासवदत्तायां भूयान्, पद्मावत्यां च ततो लघीयाननुरागोऽस्तीति गम्यते। पञ्चबाणपदे च पञ्च शब्दं विस्तारवचनं गृहीत्वा पञ्चाः = विस्तृताः, असंख्या इत्यर्थः। बाणाः शरा यस्येत्यर्थकरणेन सर्वं समञ्जसम्। शार्दूलविक्रीडितं वृत्तम्। अस्मिन् पद्ये गते गत इति पौनरुक्त्येऽपि शृङ्गाररसचिन्ताख्यभावप्रसादगुणानां प्रधान्येनाभिव्यक्तेः सामान्यदोषप्रतीतिर्नोदेति।

राजा स्वावस्थां वर्णयन् विदूषकमाह—सखे! वसन्तक! सम्प्रत्यहं महति सङ्कटे पतितोऽस्मि। पश्य, यदा प्रद्योतराजमन्त्री मां निगृह्य स्वराजधानीमुज्जयिनीं प्रापयामास, तदा तत्र वर्तमानेन मया साक्षादिव रतिरवन्तिराजदुहिता वासवदत्ता स्वैरं निभालिता, तस्मिन्नेव मुहूर्ते तां वासवदत्तां पुरस्कृत्य कामेन स्वकीयाः पञ्चाऽपि बाणाः अपरिशेषेण मयि पातिताः। अथ मम दुर्दैवपरिपाकाल्लावाणकग्रामे प्रियतमायाः वासवदत्तायाः दग्धत्वं सम्भाव्य मयि निराशेऽपि मम हृदयं तथाविधं सशल्यमेवाऽस्ति। कामेन पूर्वं प्रक्षिप्ताः, हृदि निखातास्ते शराः दृढं तिष्ठन्ति, न तु केनाऽप्यद्यापि समुद्धृताः परमाश्चर्यम्, मम विचारेण सम्प्रति बाणरहितेनापि कामेनेह पद्मावतीमुद्दिश्य पुनरप्यहं विद्धोऽस्मि, यदि कामः पञ्चेषुरुच्यते, षष्ठो बाणः कुतस्तेन समासादितः? पद्मावत्या सह कृतपरिणयोऽप्यहं वासवदत्तां विस्मर्तुं न पारयामि, सम्प्रति मम हृदयं वासवदत्ता-पद्मावत्योरुभयोरपि विषये पूर्णानुरागं वर्तत—इति भावः ॥ १ ॥

*राजानं पद्मावतीदर्शनोत्कण्ठितं विभाव्य विदूषकस्तद्विषये वितर्कयति—कहिं णु इति। तत्रभवती = मान्या। पद्मावती सम्प्रति कुत्रास्तीत्यर्थः। लतामण्डपम् = कुञ्जम्। उताहो = अथवा, "आहो उताहो किमुत विकल्पे किं किमूत

विदूषक—महारानी पद्मावती कहाँ चली गयीं। हो सकता है कि, लतामण्डप में गयी हों; अथवा बाघ की खाल से मढ़ी हुई सी प्रतीत होने वाली

तिलअं णाम सिलापट्टअं गदा भवे, आदु अधिअकडुअगन्धसत्तच्छदवणं पविट्ठा भवे, अहव आलिहिदमिअपक्खिसङ्कुलं दारुपव्वदअं गदा भवे। (ऊर्ध्वमवलोक्य) ही ही सरअकालणिम्मले अन्तरिक्खे पसादिअबलदेवबाहुदंसणीअं सारसपन्तिं जाव समाहिदं गच्छन्ति पेक्खदु दाव अवं। [कुत्र नु खलु गता तत्रभवती पद्मावती, लतामण्डपं गता भवेद्, उताहो असनकुसुमसञ्चितं व्याघ्रचर्मावगुण्ठितमिव पर्वततिलकं नाम शिलापट्टकं गता भवेद्, अथवा अधिककटुकगन्धसप्तच्छदवनं प्रविष्टा भवेद्, अथवालिखितमृगपक्षिसङ्कुलं दारुपर्वतकं गता भवेत्। ही ही शरत्कालनिर्मले-

च" इत्यमरः। असनकुसुमसञ्चितम् = असनानाम्—सर्जकतरूणाम्, कुसुमैः पुष्पैः, सञ्चितम् = आच्छन्नम् "सर्जकासनबन्धूक" इत्यमरः। अत एव व्याघ्रचर्मावगुण्ठितमिव = शार्दूलकृत्तिसमाच्छादितमिव दृश्यमानमित्यर्थः। पर्वततिलकं नाम = पर्वततिलकनामकम्। शिलापट्टकम् = उपवेष्टुं योग्यं शिलापीठकम्। गता भवेत् = प्रयाता भवेत्। शिलापट्टकस्यानेकवर्णविचित्रसर्जककुसुमसमाच्छन्नत्वेन व्याघ्रचर्मावगुण्ठितत्वमुत्प्रेक्षितमिति द्वितीयो विकल्पः। तृतीयं विकल्पमाह—अथवेति। अधिककटुकगन्धसप्तच्छदवनम् = अधिककटुकः अतितीक्ष्णः, गन्धः सौरभं येषान्ते तथोक्ता ये सप्तच्छदाः सप्तपर्णाः तेषां वनमरण्यम्, तत्प्रचुरं प्रदेशमिति यावत्। प्रविष्टा भवेत् = गता भवेत्। सुगन्धलोभेन तीव्रगन्धे सप्तपर्णारण्ये विहरन्ती वा भवेदित्यर्थः। चतुर्थं विकल्पमाह-अथवेति। आलिखितमृगपक्षिसङ्कुलम् = आलिखिताश्चित्रे विन्यस्ताः ये मृगा हरिणा. पक्षिणः खगास्तैः सङ्कुलं व्याप्तम्। दारुपर्वतकम् = दारुणां काष्ठेन निर्मितपर्वतकम् पर्वतप्रतिकृतिम्, दारुमयं कृत्रिमक्रीडापर्वतमित्यर्थः। यत्र चित्रलिखिता बहवः पशुपक्षिणः सन्ति तम् गता भवेत् = प्रयाता भवेत्। विहारकामनया चित्रलिखितविविधपशुपक्षिसङ्कीर्णे दारुमयं क्रीडापर्वतक गता भवेदिति चतुर्थो विकल्पः। इत्थं विकल्पानुद्भाव्यापि राज्ञो मनोविनोदनमविभाव्य विषयान्तरमुपक्षिपति—ही ही—इति। विस्मयसूचकं हर्षसूचकं वाऽव्ययमिदम्। शरत्कालनिर्मले = शरत्कालेन

रङ्ग विरङ्गी आसन फूलों से लदे हुये पर्वत तिलक नामक पत्थर की चौकी पर गयी हों या उत्कट गन्ध वाले छतिवन के कुञ्ज में बैठी हों, या जहाँ पशु और पक्षियों के चित्र लिखे हैं, उस लकड़ी के पहाड़ पर गयी हों। (ऊपर देख

ऽन्तरिक्षे प्रसारितबलदेवबाहुदर्शनीयां सारसपङ्क्तिं यावत् समाहितं गच्छन्तीं प्रेक्षतां तावद् भवान्। ]

—राजा—वयस्य! पश्याम्येनाम्, ❀

ऋज्वायतां च विरलां च नतोन्नतां च
सप्तर्षिवंशकुटिलां च निवर्तनेषु।

---

शरदृतुना निर्मले अभ्रराहित्यात् स्वच्छेऽन्तरिक्षे आकाशे। प्रसारितबलदेवबाहु-दर्शनीयाम् प्रसारितौ विस्तारितौ बलदेवस्य कृष्णाग्रजस्य बलरामस्य, बाहू भुजौ, ताविव दर्शनीयां मनोहराम्। समाहितम्=सम्यग्रूपेण सुसङ्घटितरूपेण यथा स्यात्तथा। गच्छन्तीम्=विहायसा चलन्तीम्। सारसपङ्क्तिम्=सारसनामक-प्रसिद्धपक्षिश्रेणिम्। भवान्=वत्सराज उदयनः। पश्यतु=विलोकताम्। अत्र दैर्घ्याद्धावल्याच्च सारसपङ्क्तेर्बलदेवबाहुसाम्यम्। स्वयं पश्यतोऽपि राज्ञः पुनर्दर्शन-प्रेरणया सादरं दृश्यतामिति सूच्यते। शरत्कालनिर्मलेऽन्तरिक्षे सम्भूय समुत्पतन्तीं श्रेणिबन्धमनोहराम्, धावल्याद्दैर्घ्याच्च प्रसारितबलदेवबाहुशोभां वहन्तीं सारसाख्य-पक्षिणां श्रेणिं भवान् सादरं विलोकतामित्यर्थः।

❀ सारसपङ्क्तिं पश्यन् राजा विदूषकं ब्रूते— वयस्येति।

सारसपङ्क्तिं वर्णयति—ऋज्वायतामिति।

( अन्वयः ) हे वयस्य! ऋज्वायतां च, विरलां च, नतोन्नतां च निवर्तनेषु

---

कर ) अहा हा! देखिये, शरद ऋतु के कारण निर्मल आकाश में फैलायी हुई बलदेव जी की भुजाओं की तरह सुन्दर सारस पक्षियों की कतार कैसी बढ़ी जा रही है।

राजा—मित्र! मैं इसे देख रहा हूँ।

यह कभी सीधी और फैली हुई हो जाती है, कभी अलग २ हो जाती हैं, कभी बहुत नीचे आ जाती हैं और कभी बहुत ऊपर। कभी बहुत दूर बढ़कर दूसरी तरफ घूमने में सप्तर्षिमण्डल की तरह तिरछी दिखायी पड़ती हैं और कभी तो ऐसी जान पड़ती हैं कि, तुरन्त छोड़े हुए साँप के केंचुल की भाँति

निर्मुच्यमानभुजगोदरनिर्मलस्य
सीमामिवाम्बरतलस्य विभज्यमानाम् ॥ २ ॥

सप्तर्षिवंशकुटिलां च, निर्मुच्यमानभुजगोदरनिर्मलस्य, अम्बरतलस्य, विभज्यमानाम्, सीमामिव, एनाम्, पश्यामि ॥ २ ॥

( टीका ) "वयस्य पश्याम्येनाम्" इदं श्लोकान्वयि बोध्यम् । हे वयस्य ! = हे मित्र ! वसन्तक ! ऋज्वायतां च = ऋजुः सरला, आयता दीर्घा च ताम् । घनामिति यावत् । विरलां च = मिथोऽसंहतां च । नतोन्नतां च = नता च उन्नता च ताम्, उन्नतानताम्, बन्धुरामिति यावत् । नीचैर्मार्गेऽवनताम्, पुनरुच्चैर्मार्गे उत्पतनादुन्नतां चेति भावः । निवर्तनेषु = सुदूरमुत्पत्य पुनरपरस्यां दिशि समुत्पतनेच्छया वामदक्षिणभागयोस्तिर्यग्विवलनेष्वित्यर्थः । सप्तर्षिवंशकुटिलां च = सप्तर्षिवंशः, मरीच्यादिसप्तर्षिसंज्ञकं नक्षत्रमण्डलम्, तद्वत्कुटिलाम्, तिर्यक् संस्थाम् । निर्मुच्यमानभुजगोदरनिर्मलस्य = निर्मुच्यमानस्य निर्मोकात् ( केंचुल ) तदाख्यात् स्वकञ्चुकजालात् निष्पतन् यो भुजगः सर्पस्तस्योदरं मध्यभागस्तद्वन्निर्मलस्यातिस्वच्छस्य । अम्बरतलस्य = नभोऽङ्गनस्य । विभज्यमानाम् = कल्प्यमानभागद्वयाम् । सीमामिव = विभागसूचिकां श्वेतां मर्यादारेखामिव स्थिताम् । एनाम् = पुरोदृश्यमानां सारसपङ्क्तिम् । पश्यामि = अवलोकयामि । पूर्वार्द्धे चतुर्भिश्चकारैश्चतुर्णां विशेषणानां समुच्चयो बोद्धव्यः । सप्तर्षिवंशकुटिलामिति, निर्मुच्यमानभुजगोदरनिर्मलस्येति चेत्युभयत्रोपमा, सीमामिवेत्यत्रोत्प्रेक्षा, इत्यमुपमोत्प्रेक्षाभ्यां संसृष्टा स्वभावोक्तिरलङ्कारः । "वसन्ततिलकं" वृत्तम् ।

विदूषकेण वसन्तकेन दर्शितां सारसपङ्क्तिं पश्यन् राजा तां वर्णयति— सखे ! वसन्तक ! इयं सारसपङ्क्तिः गगने नानाविधान् गतिविशेषान् दर्शयन्ती चमत्करोति मे चेतः । क्वचिदियं सरला दीर्घा च दृश्यते, क्वचिच्च विरला प्रतीयते, क्वचिच्च नीचैरवनता उच्चैरुत्पतनादुन्नता चेति बन्धुरा दृश्यते, क्वचिच्च सुदूरमुत्पत्याऽपरस्यां दिशि समुत्पतनेच्छया वामदक्षिणभागयोस्तिर्यग्विवलनात् सप्तर्षितारकामण्डलसंनि-

निर्मल आकाश को दो भागों में बाँटने वाली मानो ( सीधी सफेद खींची हुई ) सीमा रेखा हो ॥ २ ॥

चेटी—पेक्खदु पेक्खदु भट्टिदारिआ एदं कोकणदमालापण्डर-रमणीअं सारसपन्तिं जाव समाहिदं गच्छन्तिं। अम्मो भट्टा। [ प्रेक्षतां प्रेक्षतां भर्तृदारिका एतां कोकनदमालापाण्डररमणीयां सारसपङ्क्तिं यावत् समाहितं गच्छन्तीम्। अम्मो भर्ता॥ । ]

पद्मावती—† हं! अय्यउत्तो। अय्ये! तव कारणादो अय्य उत्त-

---

वेशसाम्यं बिभर्ति। मन्ये, सद्योमुक्तकञ्चुकसर्पमध्यमागत्रदतिस्वच्छस्य नभोमण्डलस्य विभागसूचिका धावल्याङ्किता मर्यादारेखेव किमेषास्तीति तदेनां सादरमहं पश्यामीति भावः ॥ २ ॥

॥ अथ राज्ञः पूर्वमेव प्रमदवनमुपागतां पद्मावतीं चेटी सारसपङ्क्तिं दर्शयति—पेक्खदु-इति। प्रेक्षतां प्रेक्षतामिति द्विरुक्त्या आदरः सूच्यते। भर्तृदारिका = पद्मावती। एताम् = पुरोदृश्यमानाम्। कोकनदमालापाण्डरमणीयाम्—अत्र कोकनदशब्दः कमलसामान्यरूपार्थे बोध्यः तथा चात्र कोकनदपदेन श्वेतकमलं विवक्षितम्। कोकनदानां श्वेतकमलानाम्, माला पंक्तिस्तद्वत् पाण्डरा श्वेता रमणीया मनोहरा च ताम्। "शुक्ल-शुभ्र-शुचि-श्येत-विशद-श्वेत-पाण्डराः" इत्यमरः। इदं सारसपङ्क्तेर्विशेषणम्। समाहितं = गच्छन्तीम्, सम्भूय सङ्घटितरूपेण गच्छन्तीमित्यर्थः। श्वेतकमलमालेव सङ्घटितरूपेण गच्छन्तीयं सारसपङ्क्तिर्भर्तृदारिकया विलोक्यतामित्यर्थः। अकस्मात् पुरतो नायकं राजानमुदयनमवलोक्य ससम्भ्रममाह—अम्मो-इति। अहो! अयं पद्मावत्या भर्ता महाराज उदयन उपस्थितः, कथं नास्माभिरभिलक्षित इत्याश्चर्यमित्यर्थः।

† राजानमुपस्थितं दृष्ट्वा पद्मावती सलज्जमाह—हं-इति। हमिति नायकागमनजनितसम्भ्रमस्यानुभावकमव्ययम्। आर्ये = वासवदत्ते! तव कारणात् = तव

---

चेटी—राजकुमारि! देखिये देखिये। शुभ्र सुन्दर कमल की माला की भाँति सारस-पंक्ति कतार बाँधे एक साथ आसमान में कैसे उड़ी जा रही हैं, अरे! महाराज यहीं हैं।

पद्मावती—अरे! स्वामी हैं। ( वासवदत्ता से ) आर्ये! तुम्हारे कारण

दंसणं परिहरामि । ता इमं दाव माहवीलदामण्डवं पविसाओ । [ इम् आर्यपुत्रः । आर्ये ! तव कारणादार्यपुत्रदर्शनं परिहरामि । तदिमं ताव-न्माधवीलतामण्डपं प्रविशामः । ]

वासवदत्ता—एव्वं होदु । [ एवं भवतु *। ]

( तथा कुर्वन्ति )

विदूषकः—तत्तहोदी पदुमावदी इह आअच्छिअ णिग्गदा भवे । [ तत्रभवती पद्मावतीहागत्य निर्गता भवेत् † । ]

---

हेतोः । आर्यपुत्रदर्शनं परिहरामि = आर्यपुत्रकर्तृकं मत्कर्मकं दर्शनम्, परिहरामि वर्जयामि । आर्ये ! वासवदत्ते ! त्वं परपुरुषदर्शनं परिहरसीति हेतोरत्र समुपस्थि-तस्यापि आर्यपुत्रस्य दर्शनमहं परिहरामि, यथा स आवां न निरीक्षेत तथा करो-मीति भावः । तत् = तस्मात् कारणात् । इमम् = पुरतो दृश्यमानम् । माधवीलता-मण्डपम् = वासन्तीकुञ्जम् । प्रविशामः = प्रविश्य तिष्ठाम इत्यर्थः । अस्मिन् पुरो-वर्तिनि वासन्तीलताकुञ्जे प्रविश्य वयं तिष्ठामश्चेदार्यपुत्रोऽस्मान् विलोकयितुं न पारयेत्, इति तत्रैव प्रविशाम इति तात्पर्यम् ।

*वासवदत्ता तदनुमोदते—एव्वं भोदु-इति । अवश्यं कुञ्जे प्रविशाम इत्यर्थः । तथा कुर्वन्ति = कुञ्जे प्रविशन्ति ।

† अथ प्रियाविरहदूनस्य राज्ञो दशां विदूषको वर्णयति—तत्तहोदी—इति । तत्रभवती = मान्या । इहागत्य = अत्र प्रमदवने भवत्प्रतीक्षया चिरं स्थित्वा । निर्गता भवेत् = प्रस्थिता भवेत् । सखे ! राजन् ! श्रीमती पद्मावती चिरकालादिह प्रमदवने समागत्य भवन्तं प्रतीक्षमाणा निराशा भूत्वा इतः प्रस्थिता भवेदित्यहं तर्कयामीत्यर्थः ।

---

मैं स्वामी का दर्शन करना नहीं चाहती । इसलिये आओ, इस माधवी लता-मण्डप में चली चलें ।

वासवदत्ता—अच्छा, चलो, चलें ।

( माधवीलतामण्डप में जाती हैं )

विदूषक—मालूम होता है, माननीय पद्मावती यहाँ आकर चली गयीं ।

राजा—कथं भवान् जानाति ※।

विदूषकः—इमाणि अव इदकुसुमाणि सेफालिआगुच्छआणि पेक्खदु दाव भवं। [ इमानपचितकुसुमान् शेफालिकागुच्छकान् प्रेक्षतां तावद् भवान् †। ]

राजा—अहो विचित्रता कुसुमस्य, वसन्तक ! ‡।

वासवदत्ता—▽ ( आत्मगतम् ) वसन्तअसङ्कित्तणेण अहं पुण

※ राजा पृच्छति—कथमिति। केन हेतुना त्वयेदमनुमितमित्यर्थः।

† विदूषकः स्वकीयानुमानसाधकं हेतुमुपन्यस्यति—इमाणि-इति। अपचित-कुसुमान् = अपचितानि त्रोटितानि, उत्तारितानीति यावत्। कुसुमानि पुष्पाणि येभ्यस्तान्। शेफालिकागुच्छान् = शेफालिकापुष्पस्तबकान्। तावदिति वाक्यालङ्कारे। भवान् त्रोटितपुष्पानिमान् पारिजातपुष्पस्तबकान् पश्यतु, राजदारिकां पद्मावतीं विना कोऽप्यन्योऽस्मज्ञः अस्मात् प्रमदवनात् पुष्पाणि नेतुं न पारयति। अत्र शेफालिकागुच्छाश्च पुष्परहिताः दृश्यन्ते, तस्मादह तकयामि यदत्र पद्मावती समागम्य निर्गतेति तात्पर्यम्।

‡ राजा प्रमदवनस्थपुष्पसौन्दर्यं प्रशंसति—अहो-इति। अहो—इत्याश्चर्ये। विचित्रता = विविधवर्णयुक्तत्वम्। कुसुमस्येति जात्येकवचनम्। सखे वसन्तक! अत्रत्यानि पुष्पाणि अनेकवर्णानि मनोहारीणि दृश्यन्त इत्यर्थः।

▽ राजा विदूषकं प्रति वसन्तक इति कृतमाह्वानं निशम्य तस्योज्जयिन्यां पूर्वं बहुशः श्रुतत्वात् वासवदत्ता मनसि विमृशति—वसन्तअसङ्कित्तणेण-इति।

वसन्तकसङ्कीर्तनेन = वसन्तकस्य = तन्नाम्नो विदूषकस्य, सङ्कीर्तनं नामग्रहण-

राजा—तुमने कैसे जाना ?

विदूषक—चुने हुए फूलोंवाले इन शेफालिका के गुच्छों को देखये न !

राजा—वसन्तक ! कैसे विचित्र २ फूल हैं।

वासवदत्ता—( मन में ) वसन्तक का नाम लेने से मुझे मालूम होता है, जैसे मैं उज्जयिनी में होऊँ।

जाणामि उज्जइणीए वत्तामि त्ति । [ वसन्तकसङ्कीर्तनेनाहं पुनर्जानामि उज्जयिन्यां वर्ते इति । ]

**राजा**—वसन्तक ! अस्मिन्नेवाऽऽसीनौ शिलातले पद्मावतीं प्रतीक्षिष्यावहे ❀ ।

**विदूषकः**—भो ! तह । ( उपविश्योत्थाय ) ही ही सरअक्कालतिक्खो दुस्सहो आदवो । ता इमं दाव माहवीमण्डवं पविसामो । [ भोस्तथा । ही ही शरत्कालतीक्ष्णो दुःसह आतपः । तदिमं तावन्माधवीमण्डपं प्रविशावः । † ]

---

पूर्वकमाह्वानम्, तेन । पुनरिति वाक्यालङ्कारे । जानामि = सम्भावयामि । वर्ते = तिष्ठामि । आर्यपुत्रेण कृतं वसन्तकनामग्रहणं पूर्वकालिकमुज्जयिनीनिवाससौभाग्यमधुना मां स्मारयति, उज्जयिन्यामेवाहं सम्प्रत्यपि वसामीति सम्भावयामीत्यर्थः ।

❀ राजा विदूषकं वदति—वसन्तकेति । अस्मिन् = पुरोवर्तिनि । शिलातले = पाषाणपीठे । आसीनौ = उपविष्टौ । प्रतीक्षिष्यावहे = प्रतिपालयिष्यावहे । इदं पुरःस्थितं पाषाणपीठमाक्रम्य समुपविष्टाभ्यामावाभ्यामत्रैव पद्मावती प्रतीक्षणीयेति भावः ।

† राज्ञोक्तमनुमोदमानो विदूषक आह—भो-इति । तथा = भवदुक्तं मया अनुमोद्यत इत्यर्थः । उपविश्योत्थाय = तस्मिन् शिलातले किञ्चित्कालमुपविश्य शारदसन्तापानुभवेनोत्थाय चेत्यर्थः । ही ही = इति दुःखे. शरत्कालतीक्ष्णः शरत्समयसम्बन्धेन तीव्रः । अत एव दुःसहः = दुःखेन सोढुं शक्यः । आतपः = सूर्यसन्तापः । तत् = तस्माद्धेतोः । इमम् = पुरोदृश्यमानम् । माधवीलतामण्डपम् = वासन्तीलताकुञ्जम् । प्रविशामः = प्रवेष्टुमर्हाम इत्यर्थः । शरत्कालतीव्राः सूर्यस्य कराः सम्प्रति भृशं तापयन्ति, तत्प्रच्छायेऽस्मिन् माधवीलतामण्डप एव स्थातुमुचितमिति भावः ।

---

**राजा**—वसन्तक ! आओ इसी पटिया पर बैठ कर हम दोनों पद्मावती की राह देखें ।

**विदूषक**—बहुत अच्छा । (बैठते ही उठकर) अहा हा ! शरत्काल की कड़ी धूप तो सही ही नहीं जाती । इसलिये चलिये इस चमेली के कुञ्ज में चलें ।

राजा—बाढम् । गच्छाग्रतः ❀ ।

विदूषकः—एव्वं होदु । [ एवं भवतु † ]

( उभौ परिक्रामतः ‡ )

पद्मावती—सव्वं आउलं कत्तुकामो अय्यवसन्तओ । किं दाणिं करेह्म । [ सर्वमाकुलं कर्तुकाम आर्यवसन्तकः किमिदानीं कुर्मः । § ]

चेटी—○भट्टिदारिए ! एदं मह्लुअरपरिणिलीणं ओलंवलदं ओधूय

❀ राजा तदनुमोदते—बाढमिति । बाढम् = अभ्युपगच्छामः एवं भवत्वित्यर्थः । गच्छाग्रत इति मार्गप्रदर्शनार्थमुक्तम् । त्वया सूचितं माधवीमण्डपावस्थानमेव मे रोचते, मार्गं प्रदर्शयन् पुरोगच्छेति भावः ।

† विदूषक आह—एव्वं-इति । मन्मार्गोऽनुगम्यतां भवतेत्यर्थः ।

‡ उभौ परिक्रामतः = राजविदूषकौ माधवीमण्डपदिशा गच्छतः ।

§ आवन्तिकायाः परपुरुषदर्शनपरिहाराय यस्मिन् माधवीलतामण्डपे वासवदत्तया सह पद्मावत्या स्थितम् , तस्मिन्नेव माधवलतामण्डपे राजानमानयन्तं विदूषकं दृष्ट्वा पद्मावती चिन्तयति—सव्वं-इति । सर्वम् = वासवदत्तारक्षणाय कृतं सकलं प्रयत्नम् । आकुलं कर्तुकामः = विफलीकर्तुमुद्यतः । मम समीपे न्यासरूपेण सुरक्षितायाः आवन्तिकायाः परपुरुषदर्शनपरिहारार्थे यावान् प्रयत्नो मयाऽनुष्ठितः स सर्वोऽप्यत्र माधवीलतामण्डपे आर्यपुत्रमुपानयताऽऽर्यवसन्तकेनैकपदे व्यर्थीकरिष्यत इत्यर्थः ।

○ चेटी राजदर्शनपरिहारोपायं सूचयति—भट्टिदारिए-इति । एताम् = पुरोदृश्यमानाम् । मधुकरपरिनिलीनाम् = मधुकराः भ्रमराः, परितः अभितः,

राजा—अच्छा, आगे चलो ।

विदूषक—बहुत अच्छा ( आगे मैं ही सही )

( दोनों घूमते हैं )

पद्मावती—आर्य वसन्तक सब किया कराया मटियामेट करना चाहते हैं । अब क्या करना चाहिये ?

चेटी—राजकुमारि ! भौंरों से भरी हुई चमेली की लता को हिलाकर भौंरों को उड़ा देती हूँ, जिससे स्वामी भीतर न जा सकेंगे ।

भट्टारं वारइस्सं। [ भर्तृदारिके! एतां मधुकरपरिनिलीनामवलम्बलता-मवधूय भर्तारं वारयिष्यामि।

**पद्मावती**—एव्वं करेहि। [ एवं कुरु ❀। ]

( चेटी तथा करोति )

**विदूषकः**—अविहा अविहा चिट्ठदु चिट्ठदु दाव भवं। [ अविह अविह, तिष्ठतु तिष्ठतु तावद् भवान् †। ]

**राजा**—किमर्थम् ‡।

---

निलीनाः पुष्पासवपानसंसक्ततयानिश्चलस्थितयो—यस्यां ताम्। अवलम्बलताम्= अत्रत्यसर्वलताधारभूतां लतामण्डपप्रवेशमार्गस्थां वल्लीम्। अवधूय=कम्पयित्वा। भर्तारम्=तव स्वामिनं राजानमुदयनम्। वारयिष्यामि=प्रतिषेधयिष्यामि। भ्रमरसमाच्छन्नावलम्बलतावधूननेन भ्रमरा इतस्तत उत्पतिष्यन्ति तेन तव भर्ता अत्र प्रवेष्टुं न पारयिष्यतीति भावः।

❀ पद्मावत्यनुमोदते—एव्वं—इति। यथा ते रोचते, तथा कुरुष्वेत्यर्थः। चेटी तथा करोति=मधुकरपरिनिलीनामवलम्बलतामवधुनोति।

† माधवीलतामण्डपद्वारे भ्रमरानुत्पतितान् पश्यन् विदूषको राजानं निवारयन् वदति—अविहा—इति। अविहेति विषादे। त्वरया द्विरुक्तिः। तिष्ठत्वित्यत्र द्विरुक्त्या सम्भ्रमः सूच्यते। तावदिति वाक्यालङ्कारे। हा! कष्टम् सखे राजन्! किञ्चित् कालमत्रैव तिष्ठ पुरतो न याहीति भावः।

‡ राजा गतिनिषेधस्य कारणं पृच्छति—किमर्थमिति। मम गतिं किमर्थं निषेधसीत्यर्थः।

---

**पद्मावती**—हाँ हाँ, यही करो।

( चेटी लता हिलाती है )

**विदूषक**—ओ! हो! अभी आप ठहरिये महाराज!

**राजा**—क्यों! क्या हुआ!

विदूषकः—दासीएपुत्तेहि महुअरेहि पीडिदो ह्मि । [ दास्याः पुत्रैर्मधुकरैः पीडितोऽस्मि ❀ । ]

राजा—मा मा भवानेवम् । मधुकरसन्त्रासः परिहार्यः † । पश्य,

मधुमदकला मधुकरा मदनार्ताभिः प्रियाभिरुपगूढाः ।
पादन्यासविषण्णा वयमिव कान्तावियुक्ताः स्युः ॥३॥

❀विदूषक उत्तरयति—दासीएपुत्तेहि—इति । दास्याः पुत्रैः=जारजातैरिति निन्दा । आक्रोशे षष्ठ्या अलुक् । जारजाता इमे दुष्टा मधुकरा अस्मदीयां गतिं निरुन्धन्ति, अतोऽहं भवन्तं वारयामीत्यर्थः ।

† भ्रमरनिवारणोद्यतं विदूषकं निवारयन् राजा वदति—मा मा—इति । मा मा भवानेवम्=एवं भ्रमरशासनं—भवान् मा करोत्वित्यर्थः । मधुकरसन्त्रासः=भ्रमराणां शासने-प्रयत्नः । परिहार्यः=परिवर्जनीयः । भ्रमरनिवारणं भवता न कर्तव्यमित्यर्थः ।

तत्र कारणमाह—पश्य—मधुमदकलेति ।

(अन्वयः) मधुमदकलाः मदनार्ताभिः प्रियाभिः, उपगूढा, मधुकराः पादन्यासविषण्णाः ( सन्तः ) वयम् इव कान्तावियुक्ताः स्युः ॥ ३ ॥

(टीका) मधुमदकलाः=मधुनः पुष्परसस्य "मधुमद्ये पुष्परसे" इत्यमरः । मदः पुष्परसपानजन्यो विकारविशेषस्तेन कला अव्यक्तमधुराः अव्यक्तमधुरं यथा स्यात्तथा गुञ्जन्त इत्यर्थः । मदनार्ताभिः=कामपीडिताभिः । प्रियाभिः=भ्रमरीभिः । उपगूढाः=गाढमाश्लिष्टाः । मधुकराः=भ्रमराः । पादन्यासविषण्णाः=पादन्यासेन लतामण्डपान्तःप्रवेशार्थमस्माभिः कर्तुमारब्धेन चरणप्रक्षेपेण विषण्णा उद्वेजिताः सन्तः वयमिव=अहमिव । कान्तावियुक्ताः=प्रियाविरहिताः, अन्योन्यं विश्लेषिता

विदूषक—ये निर्दयी भौंरे मुझ पर टूट पड़े हैं ।

राजा—नहीं, नहीं, ऐसा न कहो । भौंरों को न छेड़ो । देखो कामदेव से बेतरह सताये हुए, अपनी प्रियतमाओं से लिपटे हुए, मधु के मद से भनभनाते हुए भौंरे पैरों की आहट से दुःखित होकर हमारी तरह अपनी प्रियाओं से बिछुड़ जायँगे ॥ ३ ॥ ( इसलिये आओ, यहीं बैठें )

तस्मादिहैवासिष्यावहे ❀।

विदूषकः—एव्वं होदु। [ एवं भवतु। † ]

( उभावुपविशतः ‡ )

इति यावत्। स्युः = भवेयुः। सम्भावनायां लिङ्। अत्राद्येन विशेषणद्वयेन स्वानन्द-निमग्नानां भ्रमराणां वियोजने कारणीभविष्यतो विदूषकेप्सितस्य निवारणस्यात्यन्त-मयुक्तत्वं सूच्यते। किञ्च विरहस्य दुःसहत्वं सूचयतो वत्सराजस्य हृद्गतः वासवदत्ता-विषयकः कोऽपि भावातिरेको व्यज्यते। अपराम्रुद्वतोऽपि वत्सराजस्य हृदयं पूर्व-वदेव वासवदत्ताविषये गाढानुरागमस्तीति चाभिव्यज्यते। कान्ताविरहशोके ममेव परेषामपि चेतोऽवश्यमेव दूयेत, अतोऽस्माभिर्नैते भ्रमराः प्रियावियोगदुःखे निपात-नीया इति तात्पर्यम्। वयमिवेत्युपमा। आर्या जातिः।

विदूषकेप्सितं भ्रमरवारणं परिवर्जयन् राजा आह—सखे ! वसन्तक ! नैते भ्रमराः भवता वारणीयाः, यतः एते सम्प्रति मकरन्दपानमदेनाव्यक्तमधुरं गुञ्जन्तो रिरंसुभिः मदनार्ताभिः प्रियाभिर्भ्रमरीभिर्गाढमाश्लिष्टाः स्वैरं विहरन्ति। यद्यस्मा-भिर्लतामण्डपान्तःप्रवेशार्थं चरणप्रक्षेपः क्रियेत, तर्ह्यस्मत्पदशब्दश्रवणेनोद्वेजिताः सन्तोऽमी अहमिव प्रियाभिर्वियोजिता भवेयुः। अनुभूतप्रियाविरहदुःखश्चाहं नैतान् तादृशान् द्रष्टुमिच्छामि, अतो भवता नैते निवारणीया इति भावः॥ ३॥

❀ इत्थं कुञ्जान्तः प्रवेशविचारं परित्यज्य शिलातल एवावस्थानं युक्तं मन्य-मान आह—तस्मादिति। तस्मात् = मधुकरत्रासपरिहाररूपात् कारणात्। इहैव = अस्मिन् शिलातल एव। आसिष्यावहे = उपवेक्ष्यावः।

† विदूषकः राजोक्तमनुमोदते—एव्वं-इति। भवदुक्तमेव योग्यमित्यर्थः।

‡ उभावुपविशतः = राजविदूषकौ शिलातले तिष्ठतः।

इतः परं स्व० वा० म० म० त० गणपतिशास्त्रिकृतव्याख्यानसहितस्वप्न-वासवदत्तसंस्करणे—राजा—( अवलोक्य )

पादाक्रान्तानि पुष्पाणि सोष्मं चेदं शिलातलम्।
नूनं काचिदिहासीना मां दृष्ट्वा सहसा गता॥

विदूषक—अच्छा, यही सही।

( दोनों बैठते हैं )

चेटी—भट्टिदारिए ! रुद्धा खु ह्म वयं । [ भर्तृदारिके ! रुद्धाः खलु स्मो वयम् ❀ ]

पद्मावती—दिट्ठिआ उवविट्ठो अय्यउत्तो । [ दिष्ट्योपविष्ट आर्यपुत्रः । † ]

वासवदत्ता—( आत्मगतम् ) दिट्ठिआ पकिदित्थ सरीरो अय्यउत्तो । [ दिष्ट्या प्रकृतिस्थशरीर आर्यपुत्रः । ‡ ]

---

इत्यधिकः पाठो दृश्यते । स च तैः रामचन्द्रप्रणीते नाट्यदर्पणे भासकृतस्वप्नवासवदत्तीय इत्युल्लिखितत्वात् स्वसंस्करणे निवेशितः । परन्तु सत्सम्प्रदाये तस्य प्रचाराभावात् पूर्वापरसन्दर्भपर्यालोचनेन तदनपेक्षणाच्चाऽस्माभिरिहोपेक्ष्यते ।

❀ लतामण्डपद्वारसमीप एव राजविदूषकयोरुपवेशनाद्बहिर्गन्तुमसमर्था चेटी वदति—भट्टिदारिए–इति । रुद्धाः द्वारोपरोधादवरुद्धाः, निर्गन्तुमसमर्था इत्यर्थः । खल्विति निश्चये । राजा विदूषकश्च लतामण्डपद्वारबहिर्देशस्थशिलापीठ उपविष्टौ स्तः, अतो वयं सर्वा अपि कुञ्जेऽस्मिन्नवरुद्धाः संवृत्ताः । तद्दर्शनपरिहारपूर्वकमितो गन्तुं न शक्यमिति भावः ।

† इत्थमवरोधेऽपि प्रियदर्शनस्य निष्प्रत्यूहं जायमानत्वात् सन्तुष्टा पद्मावती स्वगतं वदति – दिट्ठिआ–इति । दिष्ट्या = सौभाग्येन आर्यपुत्रोऽस्माकं सौभाग्येन बहिः शिलातल एवोपविष्टः, लतामण्डपं न प्रविष्टः, अवरुद्धानामस्माकमिदमपि सौभाग्यमेवेत्यर्थः ।

‡ वासवदत्ता सुचिरं प्रियं दृष्ट्वा हृष्टा सती स्वगतमाह—दिट्ठिआ–इति । प्रकृतिस्थशरीरः = प्रकृतिस्थं स्वस्थम्, नीरोगमित्यर्थः, शरीरं वपुर्यस्य सः चिरकालादद्य स्वस्थशरीरमार्यपुत्रं सौभाग्येन पश्यामीत्यर्थः ।

---

चेटी—राजकुमारी, लो, हम तो यहाँ घिर गयीं ।

पद्मावती—भाग्य से स्वामी वहीं बैठ गये ।

वासवदत्ता—भाग्य से मेरे स्वामी कुशल से हैं ।

**चेटी**—भट्टिदारिए ! सस्सुपादा खु अय्याए दिट्ठी । [ भर्तृदारिके ! [ भर्तृदारिके ! साश्रुपाता खल्वार्याया दृष्टिः ※ ]

**वासवदत्ता**—एसा खु महुअराणं अविणआदो कासकुसुमरेणुणा पडिदेण सोदआ मे दिट्ठी । [ एषा खलु मधुकराणामविनयात् काशकुसुमरेणुना पतितेन सोदका मे दृष्टिः † ]

**पद्मावती**—जुज्जइ । [ युज्यते । ‡ ]

**विदूषकः**—§ भो ! सुण्णं खु इदं पमदवणं । पुच्छिदव्वं किञ्चि

---

※भर्तुः शरीरस्वास्थ्यमुपलभ्यानन्दाश्रुपरिपूर्णाम्, भार्यान्तरपरिग्रहेण स्वविषये निष्प्रेमतासम्भावनया शोकाश्रुभरिताञ्च वासवदत्तां दृष्ट्वा चेटी वदति—भट्टिदारिए—इति । साश्रुपाता=अश्रुपातेन सहिता, नयने जलपूर्णे इत्यर्थः । आर्यायाः=आवन्तिकायाः ।

† वासवदत्ता चेटीवचनं श्रुत्वा स्वाश्रुपातस्य कारणान्तरमपदिशति—एसा—इति । खल्विति निश्चये । मधुकराणां=भ्रमराणाम् । अविनयात्=इतस्ततो भ्रमणरूपादुपद्रवात् । पतितेन=चक्षुरन्तःप्रविष्टेन । काशकुसुमरेणुना=काशपुष्परजसा । मे=मम । दृष्टिः=नयनम् । सोदका=उदकं जलं तेन सह वर्तते इति तथा, साश्रुजलेत्यर्थः । सञ्जातेति शेषः । इतस्ततो भ्रमद्भिर्भ्रमरैश्चालितानां काशपुष्पाणां रजो मे नयने निपतितम्, तेनेदमश्रुजलमागतमस्तीति भावः ।

‡ वासवदत्तोक्तमनुमोदमाना पद्मावती वदति—जुज्जइ—इति । त्वदुक्तं सम्भवतीत्यर्थः ।

§ अथ विदूषको राजानमाह—भो-इति । शून्यम्=जनरहितम् । खल्विति

---

चेटी—राजकुमारि ! आर्या की आँखों में आँसू भर गये हैं ।

वासवदत्ता—भौंरों के उत्पात से काशकुसुमरज के उड़ कर पड़ जाने से मेरी आँखों में आँसू भर आये हैं ।

पद्मावती—हाँ, हो सकता है ।

विदूषक—महाराज ! यह प्रमदवन सुनसान है, मैं आप से कुछ पूछना चाहता हूँ, पूछूँ ?

अत्थि । पुच्छामि भवन्तं । [ भोः ! शून्यं खल्विदं प्रमदवनम् । प्रष्टव्यं किञ्चिदस्ति । पृच्छामि भवन्तम् । ]

राजा—छन्दतः * ।

विदूषकः—का भवदो पिआ, तदाणिं तत्तहोदी वासवदत्ता इदाणिं पदुमावदी वा । [ का भवतः प्रिया, तदानीं तत्रभवती वासवदत्ता इदानीं पद्मावती वा । † ]

राजा—किमिदानीं भवान् महति बहुमानसङ्कटे मां न्यस्यति ‡ ।

---

वाक्यालङ्कारे । यस्मात् प्रमदवनं विजनमस्ति तस्मादत्र रहस्यालापे न दोष इति तात्पर्यम् । प्रष्टव्यम् = प्रष्टुमिष्टम् । अस्ति मम मनसि किञ्चिद्रहस्यं प्रष्टव्यम्, विजनञ्चेदं प्रमदवनम्, आवां विहाय नास्ति कश्चित् तृतीयोऽत्र, अतो रहस्यं पृच्छामीति भावः ।

* राजा वदति—छन्दत इति । छन्दोऽभिप्रायः, अभिप्रायानुसारमित्यर्थः । यदिच्छसि तन्निःशङ्कं पृच्छेति भावः ।

† विदूषकः पृच्छति—का-इति । प्रिया = प्रेमपात्रम् । सविशेषमिति शेषः । तदानीम् = तस्मिन्नतिक्रान्ते समये । इदानीम् = अस्मिन् वर्तमानकाले । तदानीं वासवदत्ता तेऽधिकं प्रियाऽऽसीत् ? इदानीं पद्मावती वा तेऽधिकं प्रिया वर्तते तन्मे कथयेत्यर्थः ।

‡ विदूषकप्रश्नोत्तरणं दुष्करं मन्यमानो राजाऽऽह—किमिदानीमिति । किम् = किमर्थमित्यर्थः । बहुमानसङ्कटे = "का बहुमता" इतीदृशे तारतम्येन प्रिय-तरत्वकथनरूपक्लेशे न्यस्यति=निपातयति । तदानीं वासवदत्ता मे प्रियतरा आसीत्, उत वर्तमाना पद्मावती मे प्रियतराऽस्तीति नैवं प्रष्टव्यम्, उभयोः कतरा मे प्रियतरा इति मयाऽपि बोद्धुं न पार्यते, अत एतदुत्तरणं मम दुःशकमिति भावः ।

---

राजा—हाँ हाँ, निःसङ्कोच पूछिये ।

विदूषक—आपको कौन प्यारी है ? उस समय की वासवदत्ता या इस समय की पद्मावती ।

राजा—इस समय क्यों मुझे इस बड़े कष्ट में डालना चाहते हो ।

पद्मावती--हला! जादिसे सङ्कडे णिक्खित्तो अय्यउत्तो। [हला! यादृशे सङ्कटे निक्षिप्त आर्यपुत्रः। ❀ ]

वासवदत्ता--( आत्मगतम् ) अहं च मन्दभाआ। [ अहं च मन्दभागा। † ]

विदूषकः—सेरं सेरं भणादु भवं। एक्का उवरदा, अवरा असण्णिहिदा। [स्वैरं स्वैरं भणतु भवान्। एकोपरता, अपरा असन्निहिता। ‡ ]

---

❀ विदूषकप्रश्नं तदुपरि राज्ञ उत्तरं च श्रुत्वा पद्मावती चेटीं वदति—हला-इति। यादृशे = यद्रूपे। सङ्कटे = प्रियतरत्वकथनरूपक्लेशे। आर्यपुत्रः=मम भर्ता। निक्षिप्तः = पातितः। वसन्तकेनेति शेषः। तादृक् त्वं पश्येत्यर्थः। अथवा यादृशे= इत्यत्र तादृशे, इति पाठं परिकल्प्य तादृशे = अनिर्वचनीये महतीत्यर्थः। किंवा "तत्तु स एव जानाति" इति वाक्यशेषः कल्पनीयः।

† पद्मावत्या उक्तिं श्रुत्वा वासवदत्ता आत्मनो दुरवस्थां विमृशन्ती स्वगतं वदति—अहं-इति। अत्र पूर्वोक्तसमुच्चायकेन चकारेण "यादृशे सङ्कटे निक्षिप्त आर्यपुत्रः, तत्तु अहमेव जानामि" इत्येवंरूपोऽर्थः प्रतीयते। मन्दभागा = दुर्भाग-धेया। पतिविरहक्लेशमनुभवन्तीति यावत्। मन्दभाग्यया मया आर्यपुत्रमुखात् तस्य स्वविषये मन्दस्नेहत्वमपि श्रोतव्यमापतितमिति भावः।

‡ विदूषकः पुनः स्वप्रश्नं प्रस्तौति—सेरं सेरं-इति। स्वैरम् = स्वच्छन्दम्, निःशङ्कमिति यावत्। द्विरुक्त्या दार्ढ्यं द्योत्यते। एका = वासवदत्ता। उपरता = नष्टा। अपरा = पद्मावती। असन्निहिता = सन्निधौ नास्ति, दूरे स्थितेत्यर्थः। भवतः प्रिययोरेका तु नष्टैव, अपरा च न सन्निहिता, इति निःशङ्कं कतरा भवतोऽधिकं प्रियेति कथ्यतामिति भावः।

---

पद्मावती—अहा! सचमुच स्वामी को भारी कष्ट में डाला।

वासवदत्ता—( आप ही आप ) मैं अभागिनी भी।

विदूषक—आप निःशङ्क होकर कहें। एक तो संसार से चल बसी और दूसरी भी आस पास नहीं है।

राजा—वयस्य ! न खलु ब्रूयाम्। भवांस्तु मुखरः। *

पद्मावती—एत्तएण भणिदं अय्यउत्तेण। [ एतावता भणित-मार्यपुत्रेण। † ]

विदूषकः—भो ! सच्चेण सवामि, कस्स वि ण आचक्खिस्सं। एसा सन्दट्ठा मे जीहा। [ भोः ! सत्येन शपामि, कस्यापि नाख्यास्ये। एषा सन्दष्टा मे जिह्वा। ‡ ]

---

* राजोत्तरयति—वयस्येति। खल्विति निश्चये। वीप्सया दार्ढ्यं द्योत्यते। न खलु न खलु ब्रूयाम्= भवत्प्रश्नोत्तरं नैव मया दातुं योग्यमित्यर्थः। तत्र कारण-माह—भवानिति। भवान्=विदूषकः। मुखरः = वावदूकः, असंयतजिह्वः। रहस्यार्थं गोपयितुमक्षम इति यावत्। का मे सविशेषं प्रियेति रहस्यं यद्यहं ते पुरो ब्रूयाम्, तर्हि प्रकृत्या चपलो मुखरस्त्वं मदुक्तमर्थं यत्र तत्र प्रकाशयिष्यसि, तेन च महाननर्थो भवेत्, अतो न वदामीति भावः।

† राज्ञो वचनं श्रुत्वा पद्मावती वदति—एत्तएण-इति। एतावता भणित-मार्यपुत्रेण= आर्यवसन्तकस्य मुखरावदोषमुद्घाटयताऽऽर्यपुत्रेण स्वाभिमतमुत्तरं कथि-तमेव। आर्याया वासवदत्ताया अपेक्षया नाऽहमधिकमार्यपुत्रस्य प्रियाऽस्मि, सैवा-द्याप्यार्यपुत्रस्य हृदये वर्तते इति भावः।

‡ आत्मनो मुखरत्वविषये राज्ञः शङ्कां परिहरन् विदूषक आह—भो-इति। सत्येन शपामि = सत्यस्य धर्मस्य शपथं कृत्वा वदामि। सत्यधर्मशपथपूर्वकमहं वदामि, यद्भवदुक्तं कस्यापि पुरो न प्रकाशयिष्यामि। यदि प्रकाशयेयं तर्हि सत्य-धर्मनाशजनितं कुफलमहं भोक्ष्य-इत्यर्थः। एषा सन्दष्टा मे जिह्वा = रहस्यगोपनार्थं दन्तरूपसन्दंशमध्ये निरुद्धा मया जिह्वा, नातः परमियं किमपि वक्तुं शक्नुयादित्यर्थः।

---

राजा—वयस्य ! मैं तुमसे न कहूँगा, तुम बड़े ही मुँहफट हो।

पद्मावती—इतने ही में स्वामी ने सब कुछ कह दिया।

विदूषक—महाराज ! सत्य की सौगन्ध खाता हूँ, किसी से भी न कहूँगा। लीजिये, यह मैंने अपनी जीभ काट ली।

राजा—नोत्सहे सखे ! वक्तुम् ।※

पद्मावती—अहो इमस्स पुरोभा (अ ? इ) दा । एत्तिएण हिअअं ण जाणादि । [अहो अस्य पुरोभागिता । एतावता हृदयं न जानाति । †]

विदूषकः—किं ण भणादि मम । अणाचक्खिअ इमादो सिला-वट्टआदो ण सक्कं एक्कपदं वि गमिदुं । एसो रुद्धो अत्तभवं । [किं न भणति, मम अनाख्यायास्माच्छिलापट्टकान्न शक्यमेकपदमपि गन्तुम् । एष रुद्धोऽत्रभवान् । ‡]

---

※ इत्थमपि राजा वक्तुमनुत्साहं दर्शयति—नोत्सह इति । वयस्य वसन्तक ! सत्यशपथं कृतवतोऽपि ते जिह्वाया विश्वासाभावात् रहस्यमर्थं वक्तुं ममोत्साहो न भवति, अतोऽहमसमर्थोऽस्मीति भावः ।

† एतावतापि राज्ञो हृदयमविदन्तं विदूषकं पद्मावती निन्दति—अहो—इति । अहो इत्याश्चर्ये । अस्य=आर्यवसन्तकस्य । पुरोभागिता=दोषैकदर्शित्वम् । "दोषैकदृक् पुरोभागी" इत्यमरः । अद्यापि न कथयतीति राज्ञि दोषैकदर्शित्वम् । एतावता=मुहुर्मुहु रहस्यकथनाऽनङ्गीकारेणाऽपि । हृदयम्=वासवदत्तैवाधिकं प्रियेति आर्यपुत्रस्य हृद्गतं भावम् ।

‡ विदूषकः पुनः सनिर्बन्धमाह—किं—इति । मम=मम पुरः । अनाख्याय=अनुक्त्वा । रहस्यमिति शेषः । अस्माच्छिलापट्टकादित्यत्र "ल्यब्लोपे कर्मण्यधिकरणे च" इति पञ्चमी । शिलापट्टकं विहायान्यत्रेत्यर्थः । रहस्यमनाख्याय भवन्तमस्माच्छिलापट्टकादेकपदमप्यन्यत्र गन्तुं न दास्यामिति भावः । एषः=रहस्यमकथयन् । रुद्धः=निरुद्धः ।

---

राजा—कहने का उत्साह नहीं होता ।

पद्मावती—कैसा नासमझ है । इतने पर भी नहीं समझता ।

विदूषक—क्या आप मुझसे नहीं कहेंगे ? अच्छा, देखता हूँ बिना कहे आप इस पटिया से आगे एक कदम भी कैसे जाते हैं । लीजिये, मैंने आपको यहीं रोक लिया ।

राजा—किं बलात्कारेण ?※

विदूषकः—आम, बलक्कारेण। [ आम्, बलात्कारेण। † ]

राजा—तेन हि पश्यामस्तावत्। ‡

विदूषकः—पसीददु पसीददु भवं। वअस्सभावेण साविदो सि, जइ सच्चं ण भणासि। [ प्रसीदतु प्रसीदतु भवान् वयस्यभावेन शापितोऽसि, यदि सत्यं न भणसि। § ]

---

※ राजा पृच्छति—किमिति। बलात्कारेण = बलप्रयोगेण। बलप्रयोगद्वारा मत्तो रहस्यं ज्ञातुमिच्छसि किमिति प्रश्नः।

† विदूषक उत्तरयति—आम्–इति। आमिति स्वीकृतौ। अत्र कः सन्देहः। बलात्कारेणैव त्वत्तः श्रोतुमिच्छामीति भावः।

‡ राजा वदति—तेन हीति। तेन हि = तर्हि। पश्यामः = अवलोकयामः। आदरे बहुत्वम्। तावदिति निर्द्धारणे। भवान् यथा मां व्याहारयितुं प्रवृत्तः, न तथाऽहं व्याहर्तुं प्रवृत्तोऽस्मि, अत्र तव बलप्रयोगः फलति नवेति द्रष्टुमिच्छामीत्यर्थः।

§ राजानं दृढप्रतिज्ञं दृष्ट्वा तस्य पुर आत्मनो बलात्कारञ्च निष्फलं विभाव्य विदूषकः सामप्रयोगपूर्वकमाह— पसीददु–इति। प्रसीदतु = प्रसन्नो भवतु, ममापराधं क्षाम्यत्वित्यर्थः। द्विरुक्तिः प्रसादाभिमुखीकरणार्थम्। वयस्यभावेन शापितोऽसि = आवयोर्मित्रतायाः शपथेन त्वं बद्धोऽसि, यदि रहस्यं न वदसि। इत्थं शपथेन बद्धोऽपि यदि रहस्यं न वदिष्यसि, तर्ह्यावयोः सख्यं नश्येदित्यर्थः।

---

राजा—क्या जबर्दस्ती ?

विदूषक—हाँ हाँ, ऐसा ही जानिये।

राजा—अच्छा तो मैं देखता हूँ।

विदूषक—महाराज ! मान जाइये, मान जाइये। मित्रता की शपथ जो आप मुझसे सच न कहें।

राजा—का गतिः। श्रूयताम्।*

पद्मावती बहुमता मम यद्यपि रूपशीलमाधुर्यैः।
वासवदत्ताबद्धं न तु तावन्मे मनो हरति॥ ४॥

वासवदत्ता—( आत्मगतम् ) भोदु भोदु। दिण्णं वेदणं इमस्स

* विदूषकेण वयस्यभावेन शापितो राजा अगत्या उत्तरयति—का गतिरिति। सम्प्रति रहस्यकथनमन्तरा नान्या गतिरित्यर्थः। श्रूयताम् = आकर्ण्यताम्।

"का नाम प्रियतरा" इति विदूषकप्रश्नस्योत्तरमाह राजा—पद्मावती।

( अन्वयः ) पद्मावती रूपशीलमाधुर्यैः, यद्यपि मम बहुमता ( अस्ति )। ( तथापि ) वासवदत्ताबद्धम्, मे मनस्तु न हरति तावत्।

( टीका ) पद्मावती = मगधराजकुमारी। रूपशीलमाधुर्यैः = रूपं सौन्दर्यम्, शीलं सद्वृत्तम्, "शीलं स्वभावे सद्वृत्ते" इत्यमरः। माधुर्यं मधुरभाषित्वम्। एतैर्गुणैः यद्यपि, मम=मे। बहुमता=बहुमानपात्रं वर्तते। तथापि पद्मावत्या बहुमानास्पदत्वेऽपि वासवदत्ताबद्धम्=वासवदत्तायां प्रमीतायामपि पूर्वपत्न्यामाबद्धम् संयतम्, यद्वा—वासवदत्तया बद्धम्, लोकोत्तरैर्गुणैः स्वायत्तीकृतम्। मे = मम। मनस्तु = हृदयन्तु। न हरति तावत् = नाकर्षति तावत्। स्वायत्तीकर्तुं न शक्नोतीत्यर्थः। आर्या जातिः।

विदूषकेण सनिर्बन्धं पृष्टो राजा रहस्यं वदति—सखे वसन्तक! सौन्दर्येण सद्वृत्तेन मधुरभाषितया च यद्यपीयं पद्मावती मम बहुमानपात्रं वर्तते, तथापि नैतावता वासवदत्तया स्वगुणैराकृष्टं मम हृदयं वशीकर्तुं प्रभवति। पद्मावती च वासवदत्तापदमधिगन्तुं न शक्नोति। प्रमीतयापि वासवदत्तया भृशमाकृष्टं मे चेतो नान्यत्र लगतीति भावः॥ ४॥

राजा—लाचारी है, सुनो—

यद्यपि पद्मावती रूप, शील और वचन माधुर्य से प्यारी है तो भी वासवदत्ता में लगे हुये मेरे मन को मोह नहीं सकती॥ ४॥

वासवदत्ता—( मन में ) बस, बस। मैंने इस कष्ट का वेतन भर पाया। अहो! अज्ञातवास में भी बहुत गुण है।

परिखेदस्स। अहो अञ्ञादवासं पि एत्थ बहुगुणं सम्पज्जइ। [ भवतु भवतु। दत्तं वेतनमस्य परिखेदस्य। अहो! अज्ञातवासोऽप्यत्र बहुगुणः सम्पद्यते। ❀ ]

चेटी—भट्टिदारिए! अदक्खिञ्ञो खु भट्टा। [ भर्तृदारिके! अदाक्षिण्यः खलु भर्ता। † ]

पद्मावती—हला! मा मा एव्वं। सदक्खिञ्ञो एव्व अय्यउत्तो,

❀ राज्ञो हृदयं विदित्वा प्रहृष्टा वासवदत्ता स्वगतमाह—भोदु-इति। भवतु भवतु = अज्ञातवासादिपरिखेदः कामं भवत्वित्यर्थः। भृशार्थे द्वित्वम्। अस्य परिखेदस्य वेतनं दत्तमिति सम्बन्धः। अस्य = विरहरूपस्य। परिखेदस्य = क्लेशस्य। वेतनम् = भृतिः, पुरस्कार इत्यर्थः। "विधा-भृत्या-भृतयो भर्म वेतनम्" इत्यमरः। दत्तम् = वितीर्णम्। आर्यपुत्रेणेति शेषः। अज्ञातवासोऽपि = अज्ञातः परैरविदितः स चासौ वासः स्थितिश्च नामधामगोपनपूर्वकं देशान्तरे निवासोऽपीत्यर्थः। अत्र = पद्मावतीसन्निधौ। बहुगुणः = बहुफलः, शुभपरिणामकारीति यावत्। सम्पद्यते = सञ्जायते। अद्य यावत् प्रियवियोगविक्लवया मया योऽयमज्ञातवासपरिक्लेशोऽङ्गीकृतः, अद्य भर्तुर्मुखादात्मनो विषये तस्य प्रीतिविशेषमवगम्य तद्रूपो भूयान् पुरस्कारो मया लब्धः। पद्मावत्याः सविधे नामधामगोपनपूर्वकमवस्थितिरपि प्रियप्रेमप्रकर्षपरिचयप्रदायितया बहुफला शुभपरिणामकरी च संवृत्तेति भावः।

† उदयनस्य मुखात् तस्य पद्मावत्यपेक्षया वासवदत्तायामधिकं प्रेमेति निशम्य विमनायमाना चेटी पद्मावतीं ब्रूते—भट्टिदारिए-इति। अदाक्षिण्यः = नास्ति दाक्षिण्यं यस्मिन् सः। दाक्षिण्यं नाम सर्वासु नायिकासु समानरूपेण प्रेमदर्शनम्, तेन रहितः, अविदग्ध इत्यर्थः। खल्विति निश्चये। राजदारिके! पद्मावति! प्रमीतायामपि वासवदत्तायां त्वदपेक्षयाऽप्यधिकं प्रणयं दर्शयन् तव पतिः सर्वत्र समानरागत्वरूपेण दाक्षिण्यलक्षणेन हीनोऽस्ति, नेदं तस्योचितमित्यर्थः।

चेटी—राजकुमारी! स्वामी दाक्षिण्यहीन हैं।

पद्मावती—सखि! ऐसा न कह, स्वामी दाक्षिण्ययुक्त ही हैं, जो अब तक भी आर्या वासवदत्ता के गुणों को याद करते हैं।

जो इदाणिं वि अय्याए वासवदत्ताए गुणाणि सुमरदि। [ हला ! मा मैवम् सदाक्षिण्य एवार्यपुत्रः, य इदानीमप्यार्याया वासवदत्ताया गुणान् स्मरति। ❀ ]

**वासवदत्ता**—भद्दे ! अभिजणस्स सदिसं मन्तिदं। [ भद्रे ! अभिजनस्य सदृशं मन्त्रितम्। † ]

**राजा**—उक्तं मया। भवानिदानीं कथयतु। का भवतः प्रिया तदा वासवदत्ता, इदानीं पद्मावती वा। ‡

---

❀ पद्मावती चेटीं निषेधति—हला–इति। मामैवम् = वादीरिति शेषः। मैवं ब्रूया इत्यर्थः। द्विरुक्तिर्निषेधदार्ढ्याय। सदाक्षिण्य-इति। दाक्षिण्येन सहितः, दक्षिण इत्यर्थः। यः = आर्यपुत्रः। इदानीमपि = आर्यायां वासवदत्तायां नष्टायामपि। सखि ! आर्यपुत्रविषये नैवं त्वया वक्तुमुचितम्, नूनं दक्षिण एवार्यपुत्रः, यः किल आर्यायां वासवदत्तायां नष्टायामपि तस्याः गुणान् इत्थङ्कारमविरतं स्मरतीति भावः। अत्र स्त्रीस्वभावसुलभं सापत्न्यमूलकं वासवदत्ताविषये पद्मावतीचेतसि द्वेषभावमप्रदर्शयता कविना पद्मावत्या आभिजात्यं बाढमाविष्कृतम्।

† इत्थमुदारहृदयां पद्मावतीं विभाव्य वासवदत्ता तां प्रशंसति—भद्दे-इति। भद्रे ! = कल्याणि !। अभिजनस्य = कुलस्य। सदृशम् = अनुरूपम्। मन्त्रितम् = उक्तम्। भवत्येति शेषः। कल्याणगुणे ! राजकुमारि ! भर्तुर्मुखात् सपत्नीप्रशंसां श्रुत्वाऽपि स्त्रीस्वभावसुलभामीर्ष्यालुतामप्राप्ता प्रियसखि प्रशंसन्ती भवती नूनं महाकुलीनैव, यच्चोक्तं भवत्या तदात्मनो महाकुलप्रसूतेरनुगुणमेवेति भावः।

‡ अथ राजा विदूषकस्य निर्बन्धेन स्वप्रीतिरहस्यं प्रकटय्य तस्मिन्नर्थे विदूषकस्यापि सम्मतिं पृच्छति— उक्तमिति। पद्मावतीवासवदत्तयोः कतरा मे प्रियेति भवत्प्रश्नस्योत्तरं मयोक्तमुदानीं भवतापि कथ्यताम्, उभयोर्मध्ये का तावद्भवतो बहुमता। तदानीं वासवदत्ता वा बहुमता अभूत्, इदानीं पद्मावती वा बहुमताऽस्तीति भावः।

---

**वासवदत्ता**—कल्याणि ! आपने अपने उच्चकुल के अनुरूप ही बात कही।

**राजा**—मैंने तो कह सुनाया, अब तुम कहो। तुम्हें कौन प्यारी है—तब की वासवदत्ता या अब की पद्मावती !

पद्मावती—अय्यउत्तो पि वसन्तओ संवुत्तो । [ आर्यपुत्रोऽपि वसन्तकः संवृत्तः । ❀ ]

विदूषकः—किं मे विप्पलविदेण ? उभओ वि तत्तहोदीओ मे बहुमदाओ । [ किं मे विप्रलपितेन । उभे अपि तत्रभवत्यौ मे बहुमते । † ]

राजा—वैधेय ! मामेवं बलाच्छ्रुत्वा किमिदानीं नाभिभाषसे ? ‡

❀ इत्थं विदूषकं प्रति पत्युः प्रश्नं निशम्य पद्मावती वदति—अय्यउत्तो पि इति । वसन्तकः संवृत्तः = वसन्तक इव सञ्जात इत्यर्थः । वसन्तकस्तु बालिशत्वादनुचितमपि प्रीतितारतम्यविषयकं प्रश्नं पृष्टवान्, इदानीमार्यपुत्रोऽपि तत्साहचर्येणेव उचितानुचितविवेकविकलो नाम भूत्वा स्वयमपि वसन्तकं तथाविधं प्रश्नं पृच्छतीति भावः ।

† राज्ञः प्रश्नमुत्तरयितुं लज्जमानो विदूषक आह—किं-इति । विप्रलपितेन = अनर्थकेन वचसा । किं वा, विरुद्धवचसा । "प्रलापोऽनर्थकं वचः" इत्यमरः । "विप्रलापो विरुद्धोक्तावनर्थकवचस्यपि" इति हैमश्च । तत्रभवत्यौ = पूज्ये । बहुमते = सम्मानास्पदे । वयस्य ! मूर्खस्य मम निरर्थकेन वचसा किं प्रयोजनम् किं वा, भवता तु तत्र भवत्या वासवदत्ताया एव विषये बहुमानाधिक्यं प्रणयश्च प्रकटितः, मया तु स्निग्धमधुरभोजनप्रदानादिना प्रसीदन्त्यास्तत्रभवत्याः पद्मावत्या एव विशिष्य बहुमतत्वमुच्यते चेत्, तथाविधेन मम त्वद्विरुद्धवचसापि न किमपि प्रयोजनम् । सामान्यतस्तु उभे अपि मे बहुमानास्पदे इति भावः ।

‡ विदूषकस्योत्तरेणासंतुष्टो राजा पुनः प्राह—वैधेयेति । वैधेयो मूर्खः । "मूर्ख-वैधेय-बालिशाः" इत्यमरः । एवं बलाच्छ्रुत्वा इदानीं मां किं नाभिभाषसे इति सम्बन्धः । एवम् = उभयोः कतरा प्रियेति प्रीतितारतम्यरहस्यम् । बलाच्छ्रुत्वा = बलात्कारपूर्वकं मत्तो निशम्य । इदानीं मया पृष्टः सन् । किं नाभिभाषसे = किं

पद्मावती—स्वामी भी वसन्तक ही हो गये ।

विदूषक—बहुत कहने से क्या, मेरे लिये तो दोनों ही बहुत अच्छी हैं ।

राजा—मूर्ख ! मुझसे तो बलपूर्वक सुन कर अब अपनी बेर टालमटोल करता है ।

विदूषकः—किं मं पि बलक्कारेण ?। [किं मामपि बलात्कारेण। *]

राजा—अथकिम्, बलात्कारेण। †

विदूषकः—तेण हि ण सक्कं सोदुं। [तेन हि न शक्यं श्रोतुम्। ‡]

राजा—प्रसीदतु प्रसीदतु महाब्राह्मणः। स्वैरं स्वैरमभिधीयताम्। §

---

नोत्तरयसि। मूर्ख ! इदानीमुभयोः प्रीततारतम्यविषयकप्रश्नोत्तरं बलात्कारपूर्वकं मम मुखाच्छ्रुत्वा मया तदेव पृष्टः स्वयं किमिति नोत्तरयसीति भावः।

* इत्थं सोपालम्भं राज्ञो वचनं श्रुत्वा कदाचिद्राजा बलात्कारं कुर्यादिति शङ्कमानो विदूषकः पृच्छति—किं-इति। मामपि निरुद्ध्य किं बलात्कारेण श्रोतुमिच्छसीत्यर्थः।

† राजोत्तरयति—अथ किमिति। अर्थ किम् = अत्र कः सन्देह इत्यर्थः। श्रोतुमिच्छामीति शेषः। यदि त्वं सरलभावेन न कथयिष्यसि, तर्हि त्वां निरुद्ध्य त्वन्मुखादिदं बलाच्छ्रोष्यामीति भावः।

‡ आत्मनि बलात्कारस्य वैफल्यं कथयति विदूषकः—तेण हि—इति। तेन = बलात्कारकरणेन। हि = निश्चयेन। न शक्यं श्रोतुम् = उत्तरश्रवणमशक्यमित्यर्थः। यदि भवता बलात्कारो विधीयेत, तर्हि मन्मुखान्न किमपि भवता श्रोतुं शक्यमिति भावः।

§ विदूषकं कुपितं विभाव्य तं प्रसादयितुं राजा सामवाक्यं प्रयुङ्क्ते—प्रसीदत्विति। प्रसीदतु प्रसीदतु = कोपं विहाय प्रसादसुमुखो भवतु। द्विरुक्तिः प्रसादस्याविलम्बेन सिद्ध्यर्थम्। महाब्राह्मण इति परिहासोक्तिः। तया विदूषकस्य मूर्खत्वं द्योत्यते। महाब्राह्मणशब्दो हि दुराचारे प्रेतभोजिनि प्रायश्चित्तादिपापद्रव्यैकमात्रजीवनवृत्तौ ब्राह्मणाधमे च प्रयुज्यते। मूर्खो विदूषकः महाब्राह्मणशब्दस्य

---

विदूषक—क्या मुझसे भी बलपूर्वक कहलाना चाहते हैं ?

राजा—हाँ, बल-पूर्वक।

विदूषक—तब तो सुन चुके !

राजा—मान जाइये, मान जाइये। महाब्राह्मण देवता जी ! अपनी ही अभिलाषा से कहिये।

विदूषकः—इदाणिं सुणादु भवं तत्तहोदी वासवदत्तां मे बहुमदा। तत्तहोदी पदुमावदी तरुणी दस्सणीआ अकोवणा अणहङ्कारा महुरवाआ सदक्खिण्णा। अअं च अवरो महन्तो गुणो, सिणिद्धेण भोअणेण मं पच्चुग्गच्छइ वासवदत्ता—कहिं णु खु गदो अय्यवसन्तओ त्ति। [*इदानीं शृणोतु भवान्। तत्रभवती वासवदत्ता मे बहुमता। तत्रभवती पद्मावती तरुणी दर्शनीया अकोपना अनहङ्कारा मधुरवाक् सदाक्षिण्या। अयं चापरो महान् गुणः, स्निग्धेन भोजनेन मां प्रत्युद्गच्छति वासवदत्ता—

व्यङ्ग्यर्थमनवगच्छन् महाब्राह्मण इति विशेषणेनात्मनः सम्मानमेवाकलयन् प्रसीदेदिति मत्वा तथाविधं पदं प्रयुक्तम्। स्वैरम्=निःशङ्कम्, स्वच्छन्दश्च। अभिधीयताम्=मत्प्रश्नस्योत्तरं कथ्यताम्।

* इत्थं सामवचनेन प्रसन्नो विदूषको वदति—इदाणिं-इति। इदानीम्=तव सामवाक्येन मयि प्रसन्ने सतीत्यर्थः। शृणोतु भवान्=आकर्णयतु भवान्=भवत्प्रश्नोत्तरमिति शेषः। तत्रभवती=पूज्या। वासवदत्ता मे बहुमता=पद्मावती वासवदत्तयोः वासवदत्तैव मे सविशेषं बहुमानपात्रमित्यर्थः। इत्थं स्वमनोगतं भावं निवेद्य कदाचिदिममर्थमवगत्य पद्मावती कुप्येदिति शङ्कमानो विदूषकस्तद्गुणान् वर्णयति—तत्तहोदी-इति। तत्रभवती=मान्या। पद्मावती=मगधराजकन्या। तरुणी=युवती। दर्शनीया=सुन्दरी। अकोपना=क्रोधरहिता। शान्तेति यावत्। अनहङ्कारा=निरभिमाना। मधुरवाक्=मधुरभाषिणी। सदाक्षिण्या सर्वत्र समानमृदुलोदारव्यवहारा। एवं गुणगुणविशिष्टा पद्मावती वर्तत इत्यर्थः। उक्ता गुणा वासवदत्तायामप्यासन्नेवेति ध्वनिमर्यादया सूचितम्। पद्मावत्यपेक्षया वासवदत्तायां कश्चिद्विशिष्टं गुणं दर्शयति—अअं च अवरो-इति तत्रभवत्यां वासवदत्तायामयमेकोऽपरो महान् गुण आसीत्, यत् सा स्निग्धं भोजनमादाय प्रत्यहं प्रत्युद्गच्छति स्म अन्वेषयति स्म

विदूषक—अच्छा सुनिये। मैं वासवदत्ता को बहुत चाहता था। माननीय पद्मावती सुन्दर और नवयुवती हैं तथा मधुर भाषण करनेवाली, अहङ्कार-रहित और चतुर हैं। किन्तु वासवदत्ता में इन सब गुणों के अतिरिक्त एक बड़ा भारी गुण यह भी था कि, स्वादिष्ट भोजन थालियों में परोस कर मेरी खूब खोज करती थीं कि, आर्य वसन्तक कहाँ गये।

कुत्र नु खलु गत आर्यवसन्तक इति । ]

**वासवदत्ता**—भोदु भोदु, वसन्तअ ! सुमरेहि दाणिं एदं । [ भवतु भवतु, वसन्तक ! स्मरेदानीमेताम् । ❀ ]

**राजा**—भवतु भवतु वसन्तक ! सर्वमेतत् कथयिष्ये देव्यै वासवदत्तायै । †

**विदूषकः**—अविहा वासवदत्ता । कहिं वासवदत्ता । चिरा खु

---

च, कुत्र गत आर्यवसन्तक इति । अतः प्रत्यहमन्वेषणपूर्वकं स्निग्धान्नभोजनदात्री तत्रभवती पद्मावत्यपि वासवदत्तेव प्रत्यहं स्निग्धान्नभोजनदानेन मां सम्भावयेत् तर्हि साऽपि मे बहुमता भवेदिति व्यङ्ग्योऽर्थः । प्रत्युद्गच्छतीति भूतार्थे लट् ।

❀ विदूषकस्याऽत्मनि बहुमानमादरं च विभाव्य वासवदत्ता स्वगतं कथयति—भोदु–इति । भवतु भवतु = गुणवर्णनं पर्याप्तमित्यर्थः । इदानीम् = मामुपरतां सम्भाव्याऽस्मिन् समये, ममासन्निधानदशायामित्यर्थः । एनाम् = पद्मावतीमेव । स्मर = गुणवर्णनादिना सम्मानय । इदानीमियमेव स्निग्धभोजनप्रदानादिना तव तादृशं मनोरथं पूरयितुं समर्थेति अस्या गुणानुवर्णनमेव त्वया क्रियताम्, मम विषये बहुमतत्वसमर्थकवाक्प्रपञ्चेनालम्, मद्विषयकं तव हृद्गतं सद्भावमहं जाने इति भावः, यद्वा—"सुमरेहि दाणिं एदं" इत्यत्र 'एदं' इत्यस्य 'एतत्' इति संस्कृतच्छाया कल्पनीया । एतत् = स्निग्धभोजनेन सह वासवदत्ताकर्तृकं प्रत्युद्गमनम् । स्मर = स्मरणमात्रेण सम्भावयेत्यर्थः ।

† वासवदत्तां बहुमानयन्तं विदूषकं प्रसन्नो राजा वदति—भवतु भवत्विति । भवतु भवतु = पद्मावतीवासवदत्तयोर्बहुमतात्वसमर्थकवाक्प्रपञ्चेनालमित्यर्थः । सम्यगुक्तं भवता । सर्वमिदं ते कथनं देवीं वासवदत्तां निवेदयिष्यामि । सा च श्रुत्वेदं बाढं प्रसन्ना भविष्यतीति भावः ।

---

**वासवदत्ता**—अच्छा, अच्छा, वसन्तक ! अब इन्हीं को याद करो ।

**राजा**—अच्छा, वसन्तक ! मैं यह सब बातें वासवदत्ता से कहूँगा ।

**विदूषक**—हाय ! वासवदत्ता !! वासवदत्ता अब कहाँ ! उसको मरे तो बहुत दिन बीत गये ।

उपरता वासवदत्ता । [ अविहा वासवदत्ता । कुत्र वासवदत्ता । चिरात् खलूपरता वासवदत्ता । ❀ ]

राजा—( सविषादम् ) एवम् । उपरता वासवदत्ता । †

अनेन परिहासेन व्याक्षिप्तं मे मनस्त्वया ।
ततो वाणी तथैवेयं पूर्वाभ्यासेन निस्सृता ॥ ५ ॥

❀ वासवदत्ताप्रणयाण्वमग्नो राजा सा उपरतेति विस्मृत्य जीवन्तीमिव तां सम्भाव्य पूर्वोक्तं प्राळपत् । विदूषकस्तु वासवदत्तोपरतेति राजानं स्मारयति—अविहा–इति । अविहेति विषादे । वासवदत्तेति काकुः । वासवदत्तेदानीं कुत्रास्ति ? सा खलु चिरात् = बहोः कालात् । उपरता = नष्टा । वासवदत्ताया उपरतायाः भूयान् कालो व्यतीतः, इदानीं कुत्र लभ्येत भवता वासवदत्ता, भ्रान्तो भवानिति भावः ।

† विदूषकोक्तिं निशम्य खिन्नमना राजा ब्रूते—एवमिति । एवम् = भवान् कथयति, तत् सत्यमेवेत्यर्थः । सत्यमेव वासवदत्ता नष्टेति यावत् ।

अनेनेति—

( अन्वयः ) अनेन परिहासेन त्वया मे मनः व्याक्षिप्तम्, ततः पूर्वाभ्यासेन इयं वाणी तथैव निस्सृता ।

( टीका ) अनेन = पूर्वोक्तेन । 'पद्मावती–वासवदत्तयोः कातरा प्रिया' इति रूपेण ।

परिहासेन = नर्मवचसा । त्वया = वसन्तकेन । मे = मम । मनः = चित्तम् । व्याक्षिप्तम् = विक्षेपं गमितम् । विचारमूढतामापादितमिति यावत् । वासवदत्ताविषयकसंस्कारोद्बोधनात् तन्मयतामापादितमिति भावः । ततः = मन्मनसो वासवदत्तामयत्वापादनाद्धेतोः । पूर्वाभ्यासेन = पूर्वं–वासवदत्ताया विद्यमानतादशायाम्, यः अभ्यासः=तव कञ्चिद्दोषं दृष्ट्वा 'सर्वमेतत् कथयिष्ये देव्यै वासवदत्तायै' इत्यादिकथनरूपो दृढसंस्कारस्तेन हेतुना, इदानीं तदभावदशायामपि ; इयम् = एषा । पूर्वो-

राजा—( शोक से ) हाँ, वासवदत्ता मर गयी । मित्र !

इस हँसी खेल में तुमने मेरा मन ऐसा भुलवा दिया कि जैसे मैं पहिले कहा करता था, वैसे ही फिर भी यह बात मुँह से निकल पड़ी ।

पद्मावती—रमणीओ खु कहाजोओ णिसंसेण विसंवादिदो।
[ रमणीयः खलु कथायोगो नृशंसेन विसंवादितः। ❀ ]

-च्छेति यावत्। वाणी=वाक्, 'सर्वमेतत् कथयिष्ये देव्यै वासवदत्तायै' इत्येवंरूपा। तथैव=वासवदत्ताया विद्यमानतादशायामिव। निस्सृता=मुखान्निर्गता। "अनुष्टुब्" वृत्तम्।

विदूषकस्यापचारं दृष्ट्वा 'सर्वमेतत् कथयिष्ये देव्यै वासवदत्तायै' इति वदन् राजा कुत्र वासवदत्ता? 'चिरात्खलूपरता वासवदत्ताया' इति वदता विदूषकेणाऽऽक्षिप्तः। अथ राजा वासवदत्तामुपरतां स्मृत्वा सविषादमाह—सखे! वसन्तक! सत्यमुपरता वासवदत्ता!! वासवदत्ता-पद्मावत्योः कतरा प्रियेति भवदुपक्षिप्तेन परिहासेन मम चित्तं वासवदत्ताविषयकसंस्कारोद्बोधाद्वासवदत्तामयमभूत्। अहं वासवदत्ताविद्यमानतादशायामेव वर्ते इत्यन्वभवच्च। यदा च वासवदत्ता जीविता आसीत्, तदा तव कमप्यपचारं दृष्ट्वा 'सर्वमेतत् कथयिष्ये देव्यै वासवदत्तायै' इति मया बहुशो गदितमासीत्, तेनैव पूर्वाभ्यासेनेदानीमपि वासदत्ता-पद्मावत्योः प्रीतितारतम्यविषयकं तव प्रश्नोत्तरादिकमाकलय्य त्वां दण्डयितुकामस्य मम मुखात् 'सर्वमेतत् कथयिष्ये देव्यै वासवदत्तायै' इति वाणी स्वयं निर्गता। हा! धिक्! मम दुर्भाग्येन चिरात् खलूपरता वासवदत्तेति भावः।

❀ राज्ञ उक्तिं श्रुत्वा पद्मावती वदति—रमणीओ–इति। रमणीयः=चित्ताकर्षकः। खलु—निश्चये। कथायोगः=स्वदारविषयकः कथाप्रसङ्गः। नृशंसेन=क्रूरेण, निर्दयेनेत्यर्थः। "नृशंसो घातुकः क्रूरः" इत्यमरः। विसंवादितः=विच्छेदं गमितः, विघ्नित इत्यर्थः। आर्याया वासवदत्ताया विषये आर्यपुत्रस्य प्रणयप्रकारप्रकाशक इति सुतरां चित्ताकर्षकोऽयं कथाप्रसङ्गो निर्दयेन परहृदयवेदनाभीज्ञेनाऽऽर्यवसन्तकेनाऽऽर्याया वासवदत्ताया उपरतिं स्मारयता अकाण्ड एव विच्छेदितः। यद्यसौ चैवेयो नैवमकरिष्यत् तर्हि, न जाने कानि कानि प्रणयरहस्यानि आर्यपुत्रमुखात् प्राकाश्यमगमिष्यन्निति भावः।

पद्मावती—रमणीय कथाप्रसङ्ग को निर्दयी ने बिगाड़ दिया।

वासवदत्ता—( आत्मगतम् ) भोदु भोदु, विस्सत्थह्मि। अहो पिअं णाम ईदिसं वअणं अप्पच्चक्खं सुणीअदि। [ भवतु भवतु, विश्वस्तास्मि। अहो प्रियं नामेदृशं वचनमप्रत्यक्षं श्रूयते। * ]

विदूषकः—धारेदु धारेदु भवं। अणदिक्कमणीओ हि विही। ईदिसं दाणिं एदं। [ धारयतु धारयतु भवान्। अनतिक्रमणीयो हि विधिः। ईदृशमिदानीमेतत्। † ]

---

*राज्ञो वचनेन विश्वस्ता वासवदत्ता स्वगतं वदति—भोदु-इति। भवतु भवतु =मम संतोषस्तावदेव अलमित्यर्थः। भृशार्थे द्वित्वम्। विश्वस्ताऽस्मि=आर्यपुत्रोऽद्यापि मां न व्यस्मरदिति समुत्पन्नविश्वासाऽस्मि। अहो—इति साश्चर्यानन्दे। प्रियं नाम=नामेति निश्चये, निश्चयेनाऽऽर्यपुत्रवचनं ममाऽत्यन्तं प्रियमित्यर्थः। ईदृशं वचनम्—यादृगार्यपुत्रेणोक्तम्। अप्रत्यक्षं श्रूयते=परोक्षमेव श्रूयते। ईदृशप्रीतिवचनानि कोऽपि कस्यापि प्रत्यक्षं न वदति, किंतु प्रीतिपात्रस्याविद्यमानतायामेव वदतीति तान्यप्रत्यक्षमेव श्रूयन्ते इत्यर्थः। यद्यपि सुतरां मम चिताकर्षकोऽयमार्यपुत्रस्य वार्तालापप्रसङ्गः मामुपरतां स्मारयताऽऽर्यवसन्तकेन विज्ञितः, तथाऽपि यावन्मया श्रुतम्, तावदेव मम धैर्यधारणाय विश्वासाय चालम्; आर्यपुत्रस्य वचनं निश्चयेन मम प्रीतिकरमस्ति। ईदृशानि प्रीतिवचनानि च प्रायः परोक्षमेव श्रूयन्त इति तानि प्रत्यक्षं श्रुतवत्यहं नूनं धन्याऽस्मीति भावः।

† विषादमुपगतं राजानं विदूषकः समाश्वासयन् वदति—धारेदु-इति। द्विरुक्त्या दार्ढ्यं सूच्यते। धैर्यमिति शेषः। भवान् धैर्यमवलम्बताम् इत्यर्थः। विरहदुःखं सोढ्वा भवानात्मानं पर्यवस्थापयत्विति भावः। हि=निश्चयेन। विधिः=दैवम्। भवितव्यतेति यावत्। अनतिक्रमणीयः=अनुल्लङ्घनीयः। विधिगतिः केनाप्युल्लङ्घयितुं न शक्यते इति निश्चितमिति भावः। इदानीमेतदीदृशमिति

---

वासवदत्ता—(मन में) बस मुझे विश्वास हो गया। अहो! क्या आनन्द है, जो परोक्ष में ऐसे वचन सुन पड़े।

विदूषक—महाराज! धैर्य रखिये। भवितव्यता को कौन टाल सकता है? इस समय का यह दुःख दैवघटित ही है।

राजा—वयस्य ! न जानाति भवानवस्थाम् ❀ । कुतः,

दुःखं त्यक्तुं बद्धमूलोऽनुरागः
स्मृत्वा स्मृत्वा याति दुःखं नवत्वम् ।
यात्रा त्वेषा यद् विमुच्येह बाष्पं
प्राप्तानृण्या याति बुद्धिः प्रसादम् ॥ ६ ॥

सम्बन्धः । इदानीम् = अस्मिन् काले । एतत् = इदमनुभूयमानं दुःखम् । ईदृशम् = एवंरूपं भाग्येन घटितमित्यर्थः ! विधेर्विधाने न कस्यापि स्वातन्त्र्यमिति सर्वथा नानुतपनीयमिति भावः ।

❀ विदूषकोक्तं श्रुत्वा स्वावस्थां परामृशन् राजा वदति—वयस्येति । अवस्थाम् = मादृशां गाढानुरागिणां दुर्भाग्योपनतप्रियाविरहाणां दुर्दशामित्यर्थः । मम विरहावस्थायाः कष्टमजानन् त्वमेवं ब्रूष इति भावः । कुतः = यतः ।

स्वावस्थायाः कष्टकारणतां प्रदर्शयन्नाह—दुःखमिति ।

( अन्वयः ) बद्धमूलः, अनुरागः, त्यक्तुम्, दुःखम्, स्मृत्वा स्मृत्वा दुःखम्, नवत्वम्, याति, इह बुद्धिः, बाष्पं विमुच्य प्राप्तानृण्या ( सती ) प्रसादं याति, इति यद्, एषा तु यात्रा ।

( टीका ) बद्धमूलः = बद्धं मूलं यस्य सः, चिरप्ररूढ इत्यर्थः । अनुरागः = वासवदत्ताविषयकः प्रेमा । त्यक्तुम् = परिहातुम् । स्मृतिपथादपनेतुमित्यर्थः । दुःखम् = अतिकठिनम्, अशक्यमित्यर्थः । दुस्त्यज इति यावत् ! स्मृत्वा स्मृत्वा = वासवदत्तायाः गाढानुरागसम्बन्धीनि पूर्ववृत्तानि पुनः पुनश्चिन्तयित्वेत्यर्थः । दुःखम् = प्रियाविरहव्यथा । नवत्वम् = नूतनताम् । याति = प्राप्नोति । वासवदत्ता-नुरागसम्बन्धिपूर्ववृत्तस्मरणेन विरहदुःखं पुनर्नवीभवतीति भावः । इह = एतादृश-

राजा—मित्र ! हमारी दशा को तुम नहीं जान सकते क्योंकि—

अत्यन्त दृढ़ प्रेम का विस्मरण होना बहुत कठिन है । उसकी याद से दुख नया हो जाता है । इस संसार में जब आदमी थोड़ा रोकर आँसू बहा लेता है तो शोक का भार कुछ हलका हो जाता है । यही संसार की रीति है ॥६॥

विदूषकः—*अस्सुपादकिलिण्णं खु तत्तहोदो मुहं । जाव मुहोदअं

दुःखविषये । अस्मिन् लोके वा । बुद्धिः = हृदयम् । बाष्पम् = अश्रुजलम् । विसृज्य, निरन्तरं शोकाश्रुजलपातेन हृद्गतां व्यथां प्रदर्श्येत्यर्थः । अत एव प्राप्तानृण्या = प्राप्तम् आसादितम्, आनृण्यं मृतप्रियजनोद्देश्यककर्तव्यस्वरूपा निष्कृतिर्यया तादृशी कृतकृत्या सती । प्रसादम् = प्रसन्नताम्, शान्तिमित्यर्थः । याति = प्राप्नोति । यथा परकीयऋणापकरणेन चेतः प्रसीदति तद्वदेवेति भावः । इति यद् = एवंरूपो लोकाचारः । एषा तु = इयमेव । यात्रा = लोकयात्रा, लोकरीतिरित्यर्थः ।

अत्र 'स्मृत्वा स्मृत्वा' 'विमुच्य' इत्युभयत्र क्त्वा प्रत्ययश्चिन्त्यः । महाकवीनां नियोगपर्यनुयोगानर्हत्वात् कथञ्चिन्नेयः । "शालिनी" वृत्तम् ।

राजा स्वकीयां दुरवस्थां वर्णयन् विदूषकमाह—सखे ! वसन्तक ! बाढमहं कष्टमनुभवामि, विचारय किञ्चित्, वासवदत्तायां चिराद्दृढमूलं मम प्रेम मया कथमपि स्मृतिपथादपनेतुं न शक्यम् । प्रगाढं प्रेम हि सर्वथा दुस्त्यजमेव भवति, अथ सर्वदा वासवदत्तागाढानुरागसूचकानि स्मरणरमणीयानि पूर्ववृत्तानि पुनः पुनः स्मरतो मे प्रियाविरहशोकजनिता व्यथा सद्योजातेव पुनर्नवीभवति । इह हि प्रीतिपात्रप्रेमसम्पादनाद् ध्रुवमधमर्णं चेतः अविरतमश्रुजलानि विमुञ्चति । इत्थमश्रुपातैः प्रियजनस्य ऋणानिर्यातनं कृत्वा कृतकृत्यं चेतः काञ्चिदाश्वस्ततामधिगच्छति । यथा परस्य धनादिकमुत्तमर्णाकृत्य चेतः प्रसीदति, तथैवेहापि प्रियजनप्रेमरूपस्य ऋणस्यापाकरणाय चिरं रुदित्वा समाश्वस्तं भवति चेतः । एतादृश्येव खलु लोकरीतिः । रोदनेन हि शोकभारो लघूभवतीति शोकक्षुभितचेतसां रोदनमेव पर्यवस्थापकमिति भावः ॥ ६ ॥

* राजानं रुदन्तं दृष्ट्वा विदूषको वदति—अस्सुपादकिलिण्णं-इति । अश्रुपातक्लिन्नम् = अश्रूणां नेत्रजलानाम्, पातेन पतनेन, हेतुना क्लिन्नम्, आर्द्रं दूषितमित्यर्थः । खल्विति वाक्यालङ्कारे । तत्रभवतः = मान्यस्य राज्ञः । मुखम् = वदनम् । मुखोदकम् = मुखप्रक्षालनार्थं जलम् । आनयामि = उपहरामि । प्रिया-

विदूषक—महाराज का मुँह आँसुओं से भीग गया है । अच्छा मुँह धोने के लिये थोड़ा जल लाता हूँ । ( चला गया )

आणेमि। ( निष्क्रान्तः ) [ अश्रुपातक्लिन्नं खलु तत्रभवतो मुखम्। यावन्मुखोदकमानयामि। ]

**पद्मावती**—अय्ये ! बप्फाउलपडन्तरिदं अय्यउत्तस्स मुहं। जाव णिक्कमह्म। [ आर्ये ! बाष्पाकुलपटान्तरितमार्यपुत्रस्य मुखम्। यावन्निष्क्रामामः। ❀ ]

**वासवदत्ता**—† एव्वं होदु। अहव चिट्ठ तुवं। उक्कण्ठिदं भत्तारं

---

वियोगदुःखेन रुदतस्ते मुखमश्रुजलैर्दूषितं दृश्यते, अतो मुखप्रक्षालनाय उदकमानयामीत्यर्थः। निष्क्रान्तः = मुखप्रक्षालनोदकमानेतुं विदूषको निर्गतः।

❀ अथ लतामण्डपबहिर्द्वार एव शिलातले सविदूषकस्य राज्ञ उपवेशनाद् बहिर्निर्गन्तुमक्षमा सवासवदत्ता सपरिवारा च पद्मावती सम्प्रति निर्गमावसरं सम्भाव्य वासवदत्तां वदति—अय्ये—इति। आर्ये ! = आवन्तिके। आर्यपुत्रस्य मुखम्। बाष्पाकुलपटान्तरितम् = अश्रुजलव्याप्तम्, अत एव पटेन वस्त्रेणेव अन्तरितम् आच्छन्नम्, अश्रुजलपूर्णमिति दर्शनादृमनयनमित्यर्थः। यद्वा—बाष्पाकुलं च तत्, अत एव पटेन मुखप्रोञ्छनवस्त्रेणान्तरितम्—आच्छादितमित्यर्थः। अत एवाधुना वयं निष्क्रामामः = निर्गच्छामः। आर्यपुत्रे शोकाश्रुरुद्धदृष्टिप्रसरे, आर्यवसन्तके च मुखप्रक्षालनोदकमानेतुं निष्क्रान्ते शोभनोऽयमवसरोऽस्माकं निर्गमस्य नोपेक्षणीय इति भावः।

† वासवदत्ता तमर्थमनुमोदते—एव्वं—इति। एवं भवतु = युक्तमुक्तं त्वया, सम्प्रति निर्गन्तुमुचितमस्माभिरित्यर्थः। पुनः किञ्चिद्विचार्य पद्मावतीं निर्गमनान्निवारयति—अहव—इति। अथवा = पक्षान्तरे। त्वम् तिष्ठ = त्वयाऽत्रैव स्थातव्यम्, न निर्गन्तव्यमित्यर्थः। तत्कारणमाह—उक्कण्ठिदं—इति। उत्कण्ठितम् = उत्कण्ठा—औत्सुक्यम् वासवदत्तास्मृतिजन्यमित्यर्थः, सञ्जाता अस्येति तम्। इतः

---

पद्मावती—सखि ! स्वामी की आँखें आँसुओं से छिप गई हैं। अब हम लोग यहाँ से निकल चलें।

वासवदत्ता—जैसा कहो, या तुम ठहर जाओ। उदास स्वामी को छोड़ कर चला जाना ठीक नहीं है। मैं ही जाऊँगी।

उज्झिअ अजुत्तं णिग्गमणं। अहं एव्व गमिस्सं। [ एवं भवतु। अथवा तिष्ठ त्वम्। उत्कण्ठितं भर्तारमुज्झित्वायुक्तं निर्गमनम्। अहमेव गमिष्यामि। ]

चेटी—सुट्ठु अय्या भणादि। उवसप्पदु दाव भट्टिदारिआ। [ सुष्ठ्वार्या भणति। उपसर्पतु तावद् भर्तृदारिका। ❀ ]

पद्मावती—किं णु खु पविसामि। [ किन्नु खलु प्रविशामि † । ]

---

पूर्वं राजकृतवासवदत्तास्मरणस्यैव कविना सविशेषं वर्णितत्वात् प्रकृते उत्कण्ठितमित्यत्र वासवदत्ताविषयिण्येवोत्कण्ठा प्रतीयते। ये च केचित् पद्मावतीदर्शनविषयिणीमुत्कण्ठां वर्णयन्ति, तत्कारणं त एव जानन्तु। वयन्तु प्रकरणानुरोधेन वासवदत्ताविषयिणीमुत्कण्ठामेव समुचितां मन्यामहे। वासवदत्ताया वचने 'उत्कण्ठितम्' इति सामान्यनिर्देशस्तु तस्या वैदग्ध्यमेव द्योतयति। भर्तारम् = पतिम्। उज्झित्वा = त्यक्त्वा। निर्गमनम् = निष्क्रमणम्। अयुक्तम् = अनुचितम्। सखि! पद्मावति! सम्प्रति मुक्तकण्ठं रुदंस्ते पतिः बाढमुत्कण्ठितः प्रतीयते। मुखप्रक्षालनोदकमानेतुं गत आर्यवसन्तकोऽपि नाद्यापि समागतः। इत्थमेकाकिनं भर्तारं परित्यज्य तवेतो निर्गमनमनुचितम्। पतिपुरोगमने तव लज्जा मा भूदिति अहमेवेतो निर्गमिष्यामीति तात्पर्यम्।

❀ वासवदत्तोक्तिमनुमोदमाना चेटी वदति—सुट्ठ–इति। सुष्ठु = समुचितम्। आर्या = आवन्तिका। उपसर्पतु = समीपं गच्छतु। भर्तुः समीपं गच्छत्वित्यर्थः। तावदिति वाक्यालङ्कारे।

† चेट्या प्रस्तुतेऽर्थे पद्मावती वासवदत्ताया अनुमतिं पृच्छति—किंणु खु–इति। नु इति प्रश्ने। खल्विति वाक्यालङ्कारे। प्रविशामिति विध्यर्थे लट्; प्रियाधिष्ठितं देशमिति शेषः। किमार्यपुत्रस्य समीपं मया गन्तुमुचितमिति प्रश्नः।

---

चेटी—आर्या ने बहुत अच्छा कहा। राजकुमारि! स्वामी के पास जाइये।

पद्मावती—तो क्या, सचमुच मैं उनके पास जाऊँ?

वासवदत्ता—हला ! पविस । ( इत्युक्त्वा निष्क्रान्ता ) [ हला ! प्रविश । ❈ ]

( प्रविश्य † )

विदूषकः—( नलिनीपत्रेण जलं गृहीत्वा ) एसा तत्तहोदी पदुमावदी । [ एषा तत्रभवती पद्मावती । ]

पद्मावती—अय्य वसन्तअ ! किं एदं । [ आर्य ! वसन्तक ! किमेतत् । ‡ ]

विदूषकः—एदं इदं । इदं एदं । [ एतदिदम् । इदमेतत् () । ]

---

❈ वासवदत्ता तामनुमोदते—हला–इति । प्रविश = उपसर्प । स्वैरमुपसर्पतु भवती भर्तारमित्यर्थः । निष्क्रान्ता = वासवदत्ता तस्मात् प्रदेशान्निर्गता ।

† मुखप्रक्षालनोदकमानेतुं गतस्य विदूषकस्य पुनः प्रवेशमाह—प्रविश्येति । नलिनीपत्रसम्पुटेन जलं गृहीत्वा समागतो विदूषकः राज्ञः समीपे पद्मावतीं स्थितां दृष्ट्वा साश्चर्यमाह—एषा–इति । तत्रभवती = मान्या । किमेषा मान्या पद्मावती समुपस्थिता ? इति प्रश्नः ।

‡ राजानं रुदन्तं विदूषकं च जलहस्तं दृष्ट्वा पद्मावती विदूषकं पृच्छति—अय्य–इति । किमेतत् = आर्यपुत्रस्य रोदनं भवतो जलाहरणं च किं हेतुकमित्यर्थः ।

() पद्मावतीमतर्कितोपनतां दृष्ट्वा किमेतदिति तस्याः प्रश्नस्योत्तरणे रहस्योद्घाटनं सम्भावयन् उत्तरान्तरस्य च झटित्यस्फुरणात् प्रत्युत्पन्नमतिविदूषको नलिनीदलं तद्गतं

---

वासवदत्ता—हाँ सखी, अवश्य जाओ ।

( इतना कह कर वासवदत्ता चली गयी )

( प्रवेश कर )

विदूषक—( कमल के पत्ते में जल लिये हुए ) अरे ! यह तो श्रीमती पद्मावती आ गयी ।

पद्मावती—आर्य वसन्तक ! यह क्या ?

विदूषक—यह-यह-यह.........।

पद्मावती—भणादु भणादु अय्यो भणादु । [ भणतु भणत्वार्यो भणतु ❀ । ]

विदूषकः—भोदि ! वादणीदेण कासकुसुमरेणुणा अक्खिणिपडिदेण सस्सुपादं खु तत्तहोदो मुहं । ता गह्णदु होदी इदं मुहोदअं [ भवति ! वातनीतेन काशकुसुमरेणुनाक्षिनिपतितेन साश्रुपातं खलु तत्रभवतो मुखम् । तद् गृह्णातु भवतीदं मुखोदकम् । † ]

---

जलञ्चोद्दिश्य ससम्भ्रममाह—एदं—इति । एतत् = नलिनीपत्रपुटम् । इदम् = जलम् । इदं नलिनीपत्रपुटम्, इदञ्च जलम्, अवगतं भवत्या ? नावगतञ्चेत् पुनः श्रूयताम्—इदम् = जलम् । एतत् = नलिनीपत्रपुटम् ।

❀स्पष्टावगमार्थं पद्मावती पुनः पृच्छति—भणादु—इति । भणत्विति त्रिरुक्त्या पद्मावत्या उत्तरश्रवणे गाढमौत्सुक्यं प्रतीयते । आर्य ! वसन्तक ! परिहासं मा कुरु ! यथार्थमुत्तरं देहि, आर्यपुत्रः किमर्थं रोदिति ? इदं जलञ्च त्वया किमर्थमानीतम्, तत्कारणं कथ्यतामित्यर्थः ।

† राजा उदयनः यदर्थं रोदिति तद्विज्ञाय कदाचिदेषा सापत्न्यमूलकमीर्ष्या-कालुष्यं वहेत्, तच्च नोचितमिति विचिन्त्य प्रत्युत्पन्नमतिर्विदूषकः किमपि कृतकं कारणमुपन्यस्यति—भोदि—इति । वातनीतेन = पवनचालितेन । कासकुसुम-रेणुना = काशपुष्परजसा । अक्षिनिपतितेन = नेत्रान्तःप्रविष्टेन । साश्रुपातम् = बाष्पजलसहितम् । खल्विति निश्चये । तत्र भवतः = राज्ञः । पवनकम्पितस्य काशपुष्पस्य परागास्तत्रभवतोऽक्ष्णोर्निपतिताः, तेनेदमश्रुजलम्, अतः मुखप्रक्षालनार्थं जलमिदं मयाऽऽनीतम्, इदानीं स्वयमत्रोपस्थिता भवती अनेन जलेन स्वहस्तेन तत्रभवतो मुखं प्रक्षालयत्वित्यर्थः ।

---

पद्मावती—कहिये, कहिये ।

विदूषक—देवि ! महाराज की आँखों में हवा से उड़ कर कास के फूलों की धूल जा पड़ी, जिससे आँसू निकल पड़े । यह उनके मुँह धोने का जल है, ले जाइये ।

पद्मावती—अहो सदक्खिण्णस्स जणस्स परिजणो वि सदक्खिण्णो एव्व होदि। (उपेत्य) जेदु अय्यउत्तो। इदं मुहोदअं। [अहो सदाक्षिण्यस्यस्य जनस्य परिजनोऽपि सदाक्षिण्य एव भवति। जयत्वार्यपुत्रः। इदं मुखोदकम्। ❀]

राजा—अये! पद्मावती। (अपवार्य) वसन्तक! किमिदम्। †

विदूषकः—(कर्णे) एव्वं विअ। [एवमिव ‡]

❀ राज्ञो रोदनकारणकथने विदूषकस्य दाक्षिण्यं दृष्ट्वा परितुष्टा पद्मावती तं स्वगतं प्रशंसति—अहो—इति। अहो—इति साश्चर्ये परितोषे सदाक्षिण्यस्य = दाक्षिण्ययुक्तस्य। सर्वत्र समदृशश्चतुरस्येत्यर्थः। परिजनः = अन्तिकचरो विश्वस्तो भृत्यवर्गः। सोऽपि। सदाक्षिण्य एव = चातुर्यसहित एव। चतुरस्य जनस्य परिवारवर्गोऽपि चतुर एव भवतीत्यर्थः। इत्थं स्वगतं विदूषकं प्रशस्य राज्ञः पुरः समुपसर्पन्ती प्रकाशमाह—जेदु—इति। इदं मुखोदकम् = मुखप्रक्षालनार्थमिदं जलमानीतम्। अनेन मुखं प्रक्षाल्यतामित्यर्थः।

† पद्मावतीमकस्मादुपस्थितामवलोक्य राजा ससम्भ्रममाह—अये—इति। अये! पद्मावती = अहो! पद्मावती कथमतर्कितमुपस्थिता? अपवार्य = पद्मावती यथा न शृणुयात् तथा मुखं परावृत्य मन्दस्वरेण विदूषकमाहेत्यर्थः। अपवारितलक्षणं यथा—

"रहस्यं कथ्यतेऽन्यस्य परावृत्यापवारितम्" इति।

वसन्तक किमिदम्! वयस्य! = विदूषक! पद्मावती तावदिह कथमुपस्थिता, किमनयाऽवगतं रहस्यमावयोः?

‡ विदूषको मन्दस्वरेण राज्ञः कर्णे कथयति—एव्वं—इति। एवमिव = वासवदत्तास्मरणमूलकोऽपि भवतोऽश्रुपातः मया वातानीतकाशकुसुमरेणूनामक्ष्णोः पतनाज्जात इत्यन्यथा प्रतिपादितः, भवता न किमपि शङ्कनीयमेव च वाच्यमित्यर्थः।

पद्मावती—(मन में) ओह! चतुर जनों के सेवक भी चतुर ही होते हैं। (पास जाकर) स्वामी की जय हो। यह मुँह धोने का पानी है।

राजा—अरे! पद्मावती! (अलग से) वसन्तक! यह क्या?

विदूषक—(कान में) यह ऐसा है।

राजा—साधु वसन्तक ! साधु । ( आचम्य ) पद्मावति ! आस्यताम् । ❀

पद्मावती—जं अय्यउत्तो आणवेदि । ( उपविशति )

[ यदार्यपुत्र आज्ञापयति † । ]

राजा—पद्मावती°!

शरच्छशाङ्कगौरेण वाताविद्धेन भामिनि ! ।

---

❀ विदूषकं प्रशंसन् राजाऽऽह—साध्विति । वयस्य वसन्तक ! प्रत्युत्पन्नमतिना भवता पद्मावत्यै समीचीनमुत्तरं दत्तम्, तदर्थं त्वामहं प्रशंसामि । राज्ञ इदं कथनमपवारितकेनैव बोद्धव्यम्°।

पद्मावत्या पुरस्कृतं जलं गृहीत्वा तेन मुखं प्रक्षाल्य कृताचमनो राजा पद्मावतीमाह—पद्मावतीति । आस्यताम् = उपविश्यताम् ।

† पत्युराज्ञां स्वीकुर्वन्ती पद्मावती वदति—जं—इति । आज्ञापयति = आदिशति ।

राजा विदूषककथनानुसारमात्मनोऽश्रुपातस्य कारणान्तरं प्रस्तुवन् पद्मावतीमाह—पद्मावतीति !—शरदिति ।

( अन्वयः ) भामिनि पद्मावति ! शरच्छशाङ्कगौरेण वाताविद्धेन काशपुष्पलवेन, इदम्, मम मुखम् साश्रुपातम् ।

( टीका ) भामिनि = कोपने ! "कोपना सैव भामिनी" इत्यमरः । अनयाऽश्रुपातस्य वासवदत्तावियोगमूलकत्वं सम्भाव्य कदाचिदीर्ष्यया कोपः करिष्यते, इति तर्कयता राज्ञा भामिनीति सम्बोधनं प्रयुक्तम् । पद्मावति ! = तन्नामधेये

---

राजा—वाह ! वसन्तक ! वाह !! तुमने बहुत अच्छा किया । (मुँह धोकर) पद्मावती, बैठिये ।

पद्मावती—स्वामी की जैसी आज्ञा । ( बैठती है )

राजा—पद्मावती !—

भामिनि ! शरद ऋतु के चन्द्रमा के समान उज्ज्वल काश फूल की धूलि

काशपुष्पलवेनेदं साश्रुपातं मुखं मम ॥ ७ ॥
( आत्मगतम् )—
इयं बाला नवोद्वाहा सत्यं श्रुत्वा व्यथां व्रजेत् ।

प्रियतमे ! शरच्छशाङ्कः शरत्कालिको मेघनिर्मुक्तो निर्मलश्चन्द्रः, स इव गौरः शुभ्रस्तेन । वाताविद्धेन = वातेन वायुना, आविद्धः चलितः, तेन । काशपुष्पलवेन = काशकुसुमरजःकणेन, अक्षिनिपतितेनेति शेषः । इदम् = एतत् । मम = मे, मदीयमित्यर्थः । मुखम् = वदनम् साश्रुपातम् = अश्रुपातेन बाष्पजलपतनेन सहितम् । जातमिति शेषः । "अनुष्टुप्" वृत्तम् ।

विदूषकमुखात् तेन पद्मावत्यै कथितमात्मनोऽश्रुपातस्य कल्पितं कारणं निशम्य तदेव राजा पद्मावत्यग्रे प्रस्तौति—कोपने ! प्रिये ! पद्मावति ! ममाश्रुपातं नान्यथा सम्भावयस्व । तत्रास्मिन् प्रमदवने वयस्येन वसन्तकेन सह वार्तालापं कुर्वन् अहं विहरन्नासम् , अत्रान्तरे पवनावधूताः काशकुसुमपरागाः ममाक्ष्णोर्न्यपतन् । तेनैव हेतुना इमे मम चक्षुषी बाष्पजलपूर्णे अभूताम् , नान्यत् किञ्चिदिति भावः ॥७॥

पद्मावत्यग्रे स्वयमुक्तस्य दोषरूपस्यापि मिथ्यावचनस्य पद्मावतीमनःपीडापरिहारोद्देश्यकत्वेन गुणत्वं सम्भावयन् राजा स्वगतमाह—इयमिति ।

( अन्वयः )—इयम्, बाला, नवोद्वाहा, (अस्ति) सत्यम्, श्रुत्वा, व्यथाम्, व्रजेत् । (यद्यपि) इयम्, कामम्, धीरस्वभावा, तु, स्त्रीस्वभावः, कातरः, (भवति)।

( टीका )– इयम् = पद्मावती । बाला = नवोढा, मुग्धेत्यर्थः । नवोद्वाहा = नवोऽभिनवः उद्वाहः परिणयमङ्गलं यस्याः सा । सद्यः सञ्जातपरिणयाऽद्याप्यज्ञातसापत्न्यकालुष्येत्यर्थः । विशेषणद्वयेन तस्याः वास्तविकावस्थाश्रवणायोग्यत्वं सूच्यते । अस्ति । सत्यम् = तथ्यम्, वासवदत्तास्मृतिमूलकोऽयमश्रुपात इति वास्तविकं वृत्तमित्यर्थः । श्रुत्वा = आकर्ण्य । व्यथाम् = पीडाम् । सापत्न्यमूलकमीर्ष्याकालुष्यमित्यर्थः । व्रजेत् = गच्छेत् , प्राप्नुयादित्यर्थः । यद्यपि । इयम् =

उड़कर मेरे आँखों में पड़ गयी थी, जिससे आँखों से आँसू निकल पड़े ॥ ७ ॥

( आपही आप )

यह बाला नई ब्याही हुई है, इसलिए यदि सच्ची बात इसे मालूम हो

कामं धीरस्वभावेयं स्त्रीस्वभावस्तु कातरः ॥ ८ ॥

विदूषकः—उइदं तत्तहोदो मअधराअस्स अवरण्हकाले भवन्तं अग्गदो करिअ सुहिज्जणदंसणं। सक्कारो हि णाम सक्कारेण पडिच्छिदो पीदिं उप्पादेदि। ता उट्ठेदु दाव भवं [ उचितं तत्रभवतो मगधराजस्या-

पद्मावती। कामम् = पर्याप्तम्। धीरस्वभावा = धीरः अचञ्चलः स्वभावः प्रकृति-र्यस्याः सा। गम्भीरप्रकृतिरस्तीत्यर्थः। तु = तथापि। स्त्रीस्वभावः = स्त्रीणां स्वभावः प्रकृतिः, स्त्रीसामान्यप्रकृतिरित्यर्थः। कातरः = अधीरः। भवति। "अनुष्टुब्" वृत्तम्।

यद्यप्यसत्यभाषणं दोषावहम्, तथापि वयस्यं वसन्तकमनुसरता यन्मया पद्मावत्याः पुरः रोदनस्य वास्तविकं कारणमनुक्त्वा कारणान्तरमुपन्यस्तं तदु-चितमेवेति स्वकृतिं समर्थयन् राजा स्वगतं विमृशति—इयं पद्मावती मुग्धाऽस्ति, किञ्चाचिरसञ्जातपरिणयमङ्गला असौ सापत्न्यसुलभानि ईर्ष्यारागद्वेषकालुष्यादीनि नाद्यापि मनागपि जानाति। यद्यसौ वासवदत्तावियोगमूलकं ममाश्रुपातं जानीयात् तर्हि निर्विकारेऽस्याश्चेतसि ईर्ष्याकालुष्यमुत्पन्नं भवेत्। यद्यप्येषा सविशेषं गम्भीरप्रकृतिरस्ति, तथापि स्त्रीसामान्यप्रकृतिरेव कातरा भवतीति हेतोः कदा-चिदियमपि स्त्रीस्वभावसुलभया कातरतया ममाश्रुपातस्य वास्तविकं कारणं निशम्य पर्याकुलीभवेदतीदानीमसत्यभाषणमेव श्रेय इति भावः ॥ ८ ॥

अथ माधवीलतामण्डपे निलीय श्रवणादवगतवास्तविकवृत्ताऽपि पद्मावती पत्यु-रलीकभाषणं निशम्य लज्जां नाटयन्तीव तूष्णीमासीत्। राजा च तत्कालवक्तव्यान्तर-स्फूर्तिविरहान्मौनमेवाऽऽलम्बत। विदूषकस्तु तयोरित्थं तूष्णींभावेनावस्थानमनुचित-

जायगी तो बड़ा कष्ट होगा। यद्यपि यह गम्भीर स्वभाव की है, तो भी स्त्रियों का स्वभाव कातर होता ही है ॥ ८ ॥

विदूषक—महाराज, अपराह्णकाल में माननीय मगधराज को, आपको आगे कर अपने मित्रों से भेंट करना उचित है; क्योंकि जब सत्कार का बदला सत्कार से दिया जाता है, तब परस्पर प्रीति घनी होती जाती है इस लिये आप उठिये।

परह्नकाले भवन्तमग्रतः कृत्वा सुहृज्जनदर्शनम्। सत्कारो हि नाम सत्कारेण प्रतीष्टः प्रीतिमुत्पादयति। तदुत्तिष्ठतु तावद् भवान्। ❀ ]

राजा—बाढम्। प्रथमः कल्पः ❀। ( उत्थाय )

---

माकलय्य मगधराजोपसर्पणाय राजानमुद्योजयन्नाह—इद्दं-इति। तत्रभवतो मगधराजस्यापराह्णकाले भवन्तमग्रतः कृत्वा सुहृज्जनदर्शनमुचितमिति सम्बन्धः। तत्रभवतः = माननीयस्य। मगधराजस्य = महाराजदर्शकस्य। अपराह्णकाले = मध्याह्नोत्तरकाले, दिनचतुर्थभाग इत्यर्थः। भवन्तरम्—वत्सराजमुदयनम्। अग्रतः कृत्वा = सम्मानप्रदर्शनाय सर्वेषामपि पुरो विधाय। सुहृज्जनदर्शनम् = मित्रमण्डलदर्शनम्। उचितम् = योग्यम्। "यस्य विवाहस्तस्य गीतम्" इति न्यायेन प्रकृते वरस्य भवत एव सर्वेषां पुरोयायित्वमुचितमेवेत्यर्थः।

❀ प्रतिसत्कारविधानस्यौचित्यं समर्थयते—सत्कारो–हीति। हि=निश्चयेन। नामेति प्रसिद्धौ। सत्कारः = पूजा, आदरः। प्रतीष्टः = स्वीकृतः। प्रीतिम् = सन्तोषम्। उत्पादयति = जनयति। सत्कर्तुरिति शेषः। तत् = तस्मात् कारणात्। भवानुत्तिष्ठतु=भवतोत्थातव्यम्।

प्रायः वधूपक्षीया अभिनवं जामातरं स्वसुहृन्मण्डलं दर्शयितुमिच्छन्ति, तदर्थञ्च जामातरं पुरस्कृत्यैव येन केनापि व्यपदेशेन सुहृदां भवनान्युपगच्छन्ति। अपराह्णसमयश्चायं यत्र तत्र गमनाय समुचितः। श्रीमान् मगधराजोऽप्यस्मिन् समये भवन्तं पुरस्कृत्य स्वसुहृदां सम्बन्धिनाञ्च दर्शनाय गन्तुमर्हति। निश्चितञ्चैतत्, केनापि कस्यापि कृतः सत्कारस्तेनापि ससम्मानं स्वीकृतश्चेत् सत्कारकर्तुश्चेतसि प्रीतिविशेषमुत्पादयति। श्रीमान् मगधराजश्च भवन्तमित्थं सत्करोति चेद्भवताऽपि सादरं तत्कृतसत्कारोऽङ्गीकर्तुमुचितः, अतो भवता शीघ्रमित उत्थातव्यमिति भावः।

❀ राजा विदूषकोक्तमनुमोदते—बाढमिति। बाढम् = वरम्। प्रथमः कल्पः = मुख्यं कृत्यम्। सर्वाणीतराणि कार्याणि विहाय इदमेव प्रथमं कर्तव्यमित्यर्थः। "मुख्यः स्यात् प्रथमः कल्पः" इति कोशः।

---

राजा—बहुत अच्छा। यह तो मुख्य कर्तव्य है। ( उठ कर )

गुणानां वा विशालानां सत्काराणां च नित्यशः ।
कर्तारः सुलभा लोके विज्ञातारस्तु दुर्लभाः ॥ ९ ॥
( निष्क्रान्ताः सर्वे ) ।

चतुर्थोऽङ्कः ।

---

इत्थं विदूषकोक्तमङ्गीकृत्य तस्मात् प्रदेशादुत्तिष्ठन् राजा सत्कर्तुरपि सत्करणं समुचितमित्याह—गुणानामिति ।

( अन्वयः ) विशालानाम्, गुणानाम्, वा, विशालानाम्, सत्काराणाम्, च, नित्यशः कर्तारः लोके सुलभाः, तु विज्ञातारः दुर्लभाः ।

( टीका ) विशालानाम् = अतिमहताम् । गुणानाम् = परोपकारदयादाक्षिण्यशौर्यादीनाम्, वा । विशालानाम् = महताम्, सत्काराणाम् = अभिनन्दनसमादरप्रशंसनादीनां च । नित्यशः = निरन्तरम्, प्रतिदिनमिति यावत् । कर्तारः = अनुष्ठातारो लोकाः । लोके = अस्मिन् संसारे । सुलभाः = बहुलाः सन्ति । तु = किन्तु । गुणानां—सत्काराणां च विज्ञातारः = विशेषेण ज्ञातारः । उपकारे सत्कारे च कृते सति प्रत्युपकारः प्रतिसत्कारश्चावश्यमेव कर्तव्य इति विचारवन्तः कृतवेदिनो गुणग्राहिण इत्यर्थः । दुर्लभाः = विरलाः । अत्र वा शब्दश्चशब्दश्च समुच्चायकः । विशालानामित्यस्य गुणानां—सत्काराणामित्युभयत्रापि सम्बन्धः । अप्रस्तुतप्रशंसालङ्कारः । "अनुष्टुब्" वृत्तम् ।

प्रतिसत्कारस्यौचित्यं समर्थयन् राजा वदति—इह जगति उपकारकर्तारः सत्कारकर्तारश्च बहवो लोकाः बाहुल्येनोपलभ्यन्ते । प्रायस्ते सर्वेऽपि स्वार्थप्रेरिता एव प्रवर्तन्ते । प्रत्युपकारप्रतिसत्कारलिप्सैव तेषां प्रवृत्तेर्मूलं भवति, किन्तु परकृतोपकारसत्कारगौरवं विज्ञाय तत्र कृतज्ञतां वहन्तः सत्कारोपकारांश्च स्वीकुर्वन्तो विरला एव सन्ति । कृतवेदिता हि जगति दुर्लभप्रायैव । सम्प्रति मम मगधराजमहाराज-

---

विशाल गुणों और नित्य प्रति विशाल सत्कारों के करने वाले तो संसार में अनेक हैं, पर उन गुणों की कदर करने वाले और सत्कारों को मानने वाले बहुत कम हैं । ( सब चले गये )

# अथ पञ्चमोऽङ्कः । *

—०:*:०—

( ततः प्रविशति पद्मिनिका † )

पद्मिनिका—महुअरिए ! महुअरिए ! आअच्छ दाव सिग्घं ।
[ मधुकरिके ! मधुकरिके ! आगच्छ तावच्छीघ्रम् । ‡ ]

दर्शककृतसत्कारस्वीकरणं किल तत्कृतसत्कारैकातंज्ञप्रकाशनरूपमेवेति साम्प्रतं मया मगधराजसन्निधावेव गन्तुमुचितमिति भावः ॥ ९ ॥

निष्क्रान्ताः सर्वे—इत्यनेन सर्वेषां राजविदूषकपद्मावत्यादीनां—पात्राणां निर्गमनं सूचितम् ।

स्वप्नवासवदत्तस्य व्याख्याने 'श्रीः'पदाङ्किते ।
नारायणीये तस्याऽयं चतुर्थोऽङ्कः समाप्तिमैत् ॥

इति श्रीमन्नारायणशास्त्रिप्रणीतायां स्वप्नवासवदत्तस्य 'श्री'रित्याख्यायां
व्याख्यायां चतुर्थोऽङ्कः समाप्तः ॥ ४ ॥

---

* अत्र पञ्चमेऽङ्के शिरोवेदनावशात् पद्मावत्या अस्वास्थ्यम्, राज्ञश्च पद्मावतीभवनोपस्थानम्, तत्र पद्मावतीप्रतीक्षया तस्याः शय्यायां राज्ञः शयनम्, तत्रैव राज्ञः वासवदत्ताविषयकाविलापप्रलापानुवर्णनम्, तदनुराज्ञो जाग्रदवस्थायां विदूषकेण सह वासवदत्ताविषयकः संलापः, महाराजदर्शकस्यादेशाद्रिपुमारुणिं प्रति सेनयाऽभिगमनोत्साहश्चेत्यादि वर्णयिष्यते ।

† अथ पद्मिनिका मधुकरिका चेति द्वयोः पद्मावतीपरिचारिकयोः प्रवेशं दर्शयन्नाह—ततः प्रविशतीति । पद्मिनिका = पद्मावत्याश्चेटी ।

‡ पद्मिनिका अपरां चेटीं मधुकरिकां वदति—महुअरिए—इति । आमन्त्रणे त्वरया द्विरुक्तिः । तावदिति वाक्यालङ्कारे ।

---

( पद्मिनिका आती है )

पद्मिनिका—मधुकरिका ! ओ मधुकरिका ! शीघ्र आ । शीघ्र

( प्रविश्य )

मधुकरिका—हला ! इअह्मि । किं करीअदु । [ हला ! इयमस्मि । किं क्रियताम् । * ]

पद्मिनिका—हला ! किं ण जाणासि तुवं भट्टदारिआ पदुमावदी सीसवेदणाए दुक्खाविदेत्ति । [ हला ! किं न जानासि त्वं भर्तृदारिका पद्मावती शीर्षवेदनया दुःखितेति । † ]

मधुकरिका—हद्धि । [ हा धिक् । ‡ ]

पद्मिनिका—§हला ! गच्छ सिग्घं, अय्यं आवन्तिअं सद्दावेहि ।

---

अथ मधुकरिकायाः प्रवेशमाह—प्रविश्येति ।

* पद्मिनिकयाऽऽहूता मधुकरिका वदति = हला—इति । इयमस्मि = इयमहं तवान्तिके समुपस्थिताऽस्मि । किं क्रियताम् = किमर्थं मामाहूतवत्यसि ? किं मया क्रियतामित्यर्थः ।

† पद्मिनिका वदति—हला—इति । किं न जानासि त्वम् = किं त्वया नाद्याप्यवगतम् । शीर्षवेदनया = शिरः पीड्या, हेतुभूतया । दुःखिता = पीडिता । भर्तृदारिका पद्मावती सम्प्रति शिरः पीड्या गाढं दुःखिता वर्तते, किं त्वमिदं न जानासीत्यर्थः ।

‡ मधुकरिका स्वामिन्याः कष्टं श्रुत्वा दुःखं प्रदर्शयति—हद्धि—इति । नायं वृत्तान्तः पूर्वं मयाऽवगतः, इदानीमेव त्वत्तः श्रुतवत्यस्मि । सत्यम्, कष्टकरोऽयं वृत्तान्तः इत्यर्थः ।

§ पद्मिनिका मधुकरिकायाः कर्तव्यं निर्दिशति—हला—इति । आवन्तिकाम् = वासवदत्ताम् । शब्दायस्व = शब्दं कुरु, कथय । इमं वृत्तान्तमिति शेषः । भर्तृ-

---

( आकर )

मधुकरिका—सखि ! मैं आ गयी । कहो, क्या करना है ।

पद्मिनिका—अरी ! क्या तूँ नहीं जानती कि, राजकुमारी पद्मावती के सिर में दर्द हो रही है ।

मधुकरिका—ओह ! हो ! बड़े दुःख की बात है ।

पद्मिनिका—अरी ! जल्दी जा आर्या अवन्तिका से राजकुमारी के शिर के

केवलं भट्टिदारिआए सीसवेदणं एव्व णिवेदेहि। तदो सअं एव्व आगमिस्सदि। [ हञ्जे! गच्छ शीघ्रम्, आर्यामावन्तिकां शब्दायस्व। केवलं भर्तृदारिकायाः शीर्षवेदनामेव निवेदय। ततः स्वयमेवागमिष्यति। ]

मधुकरिका—हला! किं सा करिस्सदि। [ हला! किं सा करिष्यति। ❀ ]

पद्मिनिका—सा हु दाणिं महुराहि कहाहि भट्टिदारिआए सीसवेदणं विणोदेदि। [ सा खल्विदानीं मधुराभिः कथाभिः भर्तृदारिकायाः शीर्षवेदनां विनोदयति। † ]

---

दारिकाया = पद्मावत्याः। शीर्षवेदनाम् = शिरःपीडाम्। स्वयमेव = अनाहूतापीत्यर्थः। सखि! त्वं त्वरितमितो गच्छ। आर्यामावन्तिकामाह्वय। तत्र भर्तृदारिकायाः पद्मावत्याः शिरःपीडा वर्तत इत्येव निवेदय। ततस्त्वयाऽनाहूताऽपि आर्याऽऽवन्तिका सखीसमदुःखसुखतया स्वयमेव तत्समीपमागमिष्यतीति भावः।

❀ एतादृशेऽवसरे वैद्यानयनमावश्यकम्। आवन्तिकोपस्थापनेन किमिति चिन्तयन्ती मधुकरिका वदति—हला—इति। सा = आवन्तिका।

† आवन्तिकैव भर्तृदारिकायाः प्रियसखीति सैव तस्याः मनोविनोदनं कर्तुं क्षमेत्याशयेन पद्मिनिका वदति—साहु—इति। खलु—निश्चये। मधुराभिः = श्रवणसुभगाभिः। कथाभिः = आख्यायिकाभिः। विनोदयतीति वर्त्तमानसामीप्ये भविष्यति लट्। विनोदयिष्यति, दूरीकरिष्यतीत्यर्थः। आर्या आवन्तिका खल्विदानीं तत्रोपस्थिता सती मनोहरैराख्यानैर्भर्तृदारिकायाः मनोविनोदनं करिष्यति, तेन भर्तृदारिकायाः शिरःपीडाकष्टभारः किञ्चिल्लघूकरिष्यते, अतः सत्वरं त्वयाऽऽर्या आवन्तिका सूचनीयेति भावः।

---

दुखने की हालत कह। फिर वे स्वयं चली आवेंगी।

मधुकरिका—भला वे यहाँ आकर क्या करेंगी?

पद्मिनिका—वे मधुर कहानियों से राजकुमारी के मनको बहला कर उन के सिर के दर्द को हल्का कर देंगी।

मधुकरिका—जुज्जइ । कहिं सअणीयं रइदं भट्टिदारिआए ।
[ युज्यते । कुत्र शयनीयं रचितं भर्तृदारिकायाः । * ]

पद्मिनिका—समुद्दगिहके किल सेज्जात्थिण्णा । गच्छ दाणिं तुवं । अहं वि भट्टिणो णिवेदणत्थं अय्यवसन्तअं अण्णेसामि । [ समुद्रगृहके किल शय्यास्तीर्णा । गच्छेदानीं त्वम् । अहमपि भर्त्रे निवेदनार्थमार्यवसन्तकमन्वेष्यामि । † ]

मधुकरिका—एव्वं होदु । ( निष्क्रान्ता ) [ एवं भवतु । ‡ ]

---

*पद्मिनिकाचिन्तितस्योपायस्य समुचितत्वं सम्भावयन्ती मधुकरिका वदति—जुज्जइ—इति । युज्यते = सम्भाव्यते । आर्या आवन्तिका खलु मधुराभिः कथाभिर्भर्तृदारिकां विनोदयिष्यतीति सम्भाव्यते इत्यर्थः । क्वेदानीं भर्तृदारिका पद्मावतीति पृच्छति—कहिं—इति । कुत्र = कस्मिन् स्थाने । शयनीयम् = शय्या । रचितम् = कल्पितम् । कस्मिन् स्थाने भर्तृदारिकायाः पद्मावत्याः शयनीयं कल्पितमित्यर्थः ।

† पद्मिनिका उत्तरयति—समुद्दगिहके—इति । समुद्रगृहके = जलयन्त्रैः शीतले तदाख्ये ग्रीष्मकालसुखकरे गृहविशेषे । "समुद्रगृहमित्युक्तं जलयन्त्रनिकेतनम्" इति हारावली । शय्या = तल्पम् । आस्तीर्णा = विस्तारिता । इदानीं त्वमार्यामावन्तिकामत्रोपस्थापयितुं तदन्तिकं गच्छ । भर्त्रे = राज्ञे, उदयनाय । निवेदनार्थम् = निवेदयितुम् । आर्यवसन्तकम् = महाराजस्योदयनस्य नर्मसचिवं विदूषकम् । अन्विष्यामि = गवेषयामि । महाराज उदयनोऽपि भर्तृदारिकायाः पद्मावत्याः शिरोवेदनावृत्तान्तं जानातु, इत्येतदर्थं महाराजोदयनस्य नर्मसचिवमार्यवसन्तकं गवेषयामि । तन्मुखादसौ वृत्तान्तो महाराजेनावगतो भवेदिति भावः ।

‡ ततः प्रस्थातुमिच्छन्ती मधुकरिका पद्मिनिकाया वचनमनुमोदते—एव्वं—

---

मधुकरिका—ठीक है ! राजकुमारी कहाँ सोई हुई हैं ।

पद्मिनिका—समुद्रगृह में उनकी शय्या लगी हुई है । अब तू जा । मैं भी महाराज को खबर देने के लिये आर्य वसन्तक को ढूँढ़ने जाती हूँ ।

मधुकरिका—अच्छी बात है । ऐसा ही करो ।

( चली गयी )

**पदुमिनिका**—कहिं दाणिं अय्यवसन्तअं पेक्खामि। [ कुत्रेदानीमार्यवसन्तकं प्रेक्षे । ❀ ]

( ततः प्रविशति विदूषकः † )

**विदूषकः**—अज्ज खु देवीविओअविहुरहिअअस्स तत्तहोदो वच्छराअस्स पदुमावदीपाणिग्गहणसमीरिअस्स अच्चन्तसुहावहे मङ्गलोसवे मदणग्गिदाहो अहिअदरं वड्ढइ । ( पद्मिनिकां विलोक्य ) अयि पदुमिणिआ। पदुमिणिए! किं इह वत्तदि। [ ‡ अद्य खलु देवीवियोगविधुरहृदयस्य

---

इति । एवं भवतु = अहमार्याया आवन्तिकाया अन्तिकं गच्छामि, त्वं चाऽर्यवसन्तकं गवेषयेति भावः । मधुकरिकायाः प्रस्थानं वर्णय—निष्क्रान्तेति ।

❀ पद्मिनिका विदूषकदर्शनविषये चिन्तयति—कहिं-इति । अस्मिन् समये आर्यवसन्तकः कुत्रोपलप्स्यते, तदन्वेषणार्थं कुत्र मया गन्तव्यमिति भावः ।

† अथ विदूषकस्य प्रवेशमाह—ततः प्रविशति विदूषक-इति ।

‡ वासवदत्तावियोगविधुरस्य सुहृदो राज्ञ उदयनस्य विषये चिन्तयन् विदूषक आह—अज्ज-इति । खल्विति वाक्यालङ्कारे । देवीवियोगविधुरहृदयस्य = देव्या वासवदत्ताया वियोगेन विरहजन्येन शोकेन हेतुना पूर्वं विधुरम् विकलम्, हृदयं चेतो यस्य तस्य । तत्रभवतः = मान्यस्य । पद्मावतीपाणिग्रहणसमीरितस्य = पद्मावत्याः महाराजदर्शकभगिन्याः, पाणिग्रहणेन तया सह विवाहेन हेतुना, समीरितस्य सन्धुक्षितस्य, समुद्दीपितमन्मथस्येत्यर्थः । अत्यन्तसुखावहे=अत्यानन्दजनके । मङ्गलोत्सवे=वैवाहिके मङ्गलमहे । मदनाग्निदाहः=मदन एव अग्निः, तस्य दाहः, कामाग्निजनितसंताप-इत्यर्थः । अधिकतरम्=पूर्वापेक्षया सविशेषम् । वर्द्धते = बाढं समुज्ज्वलति । पूर्वं मम वयस्यस्तत्रभवान् वत्सराजस्तत्रभवत्या

---

**पद्मिनिका**—इस समय आर्य वसन्तक कहाँ होंगे ?

( विदूषक आता है )

**विदूषक**—देवी वासवदत्ता के वियोग से दुःखित हृदय वाले महाराज वत्सराज के कामाग्नि की ज्वाला आज इस सुखकर मङ्गलोत्सव में पद्मावती के विवाहरूपी वायु से प्रदीप्त होकर और भी बढ़ गयी है । ( पद्मिनिका को देख

तत्रभवतो वत्सराजस्य पद्मावतीपाणिग्रहणसमीरितस्यात्यन्तसुखावहे मङ्गलोत्सवे मदनाग्निदाहोऽधिकतरं वर्धते । अयि ! पद्मिनिका । पद्मिनिके ! किमिह वर्तते । ]

पद्मिनिका—अय्य ! वसन्तअ ! किं ण जाणासि तुवं भट्टिदारिआ पदुमावदी सीसवेदणाए दुःखाविदत्ति । [ आर्य ! वसन्तक ! किं न जानासि त्वं भर्तृदारिका पद्मावती शीर्षवेदनया दुःखितेति । * ]

विदूषकः—भोदि ! सच्चं, ण जाणामि । [ भवति ! सत्यं न जानामि । † ]

देव्या वासवदत्ताया वियोगेनात्यन्तं विकल आसीत् । अथ देव्या पद्मावत्या सह तस्य पाणिग्रहणमहोत्सवे सम्पन्ने तस्य मदनाऽग्निसन्तापः द्वैगुण्येन समुद्दीपितो वर्तते इति भावः । अत्र केचित् "पद्मावतीपाणिग्रहणसमीरितस्य" इत्यत्र "पद्मावतीपाणिग्रहणसमीरितः" इति प्रथमान्तं पाठं परिकल्पयन्ति । स च तैः कस्मिंश्चिदादर्शपुस्तके दृष्टश्चेत् तेषां तथा कल्पनं समुचितमेव । केवलं स्वकल्पनया महाकविप्रयोगेषु पाठभेदपरिकल्पनं साहसप्रायमेव । पद्मिनिकां पुरःस्थितामवलोक्य वदति—अयि—इति । अयीत्याश्चर्ये । पद्मिनिके ! किं तवात्र कार्यं वर्तते, किमर्थमागताऽसीत्यर्थः ।

* पद्मिनिका उत्तरयति—अय्य—इति । आर्य वसन्तक ! भर्तृदारिका पद्मावती शिरःपीडया दुःखिताऽस्तीति किं त्वं न जानासि ? इति प्रश्नः ।

† विदूषक उत्तरयति—भोदि—इति । भवतीति सम्बोधनम्, अयि ! पद्मिनिके ! इत्यर्थः । सत्यमिति काकुः । श्रीमती पद्मावती सत्यमेव शिरोवेदनया दुःखिताऽस्ति किमिति प्रश्नः । न जानामि = अहं तु इमं वृत्तान्तमेतावत् पर्यन्तं न ज्ञातवानित्यर्थः ।

कर ) अरे ! पद्मिनिका कहाँ से दिखलायी पड़ी ? ओ पद्मिनिके ! कहो क्या समाचार है ? ।

पद्मिनिका—आर्य वसन्तक ! क्या आप नहीं जानते कि राजकुमारी पद्मावती शिर के दर्द से व्याकुल हैं ।

विदूषक—श्रीमती ! मैं सच कहता हूँ । मुझे तो इस बात की खबर ही नहीं ।

पदुमिनिका—तेण हि भट्टिणो णिवेदेहि णं। जाव अहं वि सीसाणुलेवणं तुवारेमि। [ तेन हि भर्त्रे निवेदयैनाम्। यावदहमपि शीर्षानुलेपनं त्वरयामि। ❀ ]

विदूषकः—कहिं सअणीअं रइदं पदुमावदीए। [ कुत्र शयनीयं रचितं पद्मावत्याः। † ]

पदुमिनिका—समुद्दगिहके किल सेज्जात्थिण्णा। [ समुद्रगृहके किल शय्यास्तीर्णा। ‡ ]

विदूषकः—△गच्छदु भोदी। जाव अहं वि तत्तहोदो णिवेदइस्सं। [ गच्छतु भवती। यावदहमपि तत्रभवते निवे[illegible]मि। ]

---

❀ पद्मिनिका वदति—तेण हि—इति। 'तेन हि = भर्तृदारिका शिरोवेदनया अस्वस्थाऽस्तीति हेतोः। भर्त्रे = राज्ञे उदयनाय। एनाम् = शिरोवेदनाम्। निवेदय = कथय। यावत् = अधुना। शीर्षानुलेपनम् = शिरोवेदनानिवारकं लेपनमौषधम्। आनेतुमिति शेषः। त्वरयामि = त्वरां करोमि। भर्तृदारिकायाः शीर्षवेदनां राज्ञे निवेदय, अहमपि शिरोवेदनानिवारिकं लेपनौषधमानेतुं सत्वरं गच्छामीत्यर्थः।

† विदूषको वदति—कहिं—इति। शिरोवेदनया अस्वस्थायाः पद्मावत्याः शयनीयं कस्मिन् भवने कुत्र स्थाने कल्पितमस्ति, कुत्र च वयस्यं वत्सराजं प्रेषयामीत्यर्थः।

‡ पद्मिनिकोत्तरयति—समुद्दगिहके—इति। समुद्रगृहके जलयन्त्रभवने तस्याः शयनीयं कल्पितमतस्तत्रैव भवता भवद्वयस्य आनीयतामित्यर्थः।

△ पद्मिनिकोक्तिमनुमोदमानो विदूषको वदति—गच्छदु—इति। पद्मिनिके! त्वं शीर्षानुलेपनाऽऽनयनाय गच्छ, अहमपि तत्रभवते राज्ञे वृत्तान्तमिमं निवेदयिष्यामीत्यर्थः।

---

पद्मिनिका—अच्छा, तो शीघ्र स्वामी के पास जाकर इसकी सूचना दे दीजिये। तब तक मैं भी शिर के लिये लेप तैयार करने जाती हूँ।

विदूषक—पद्मावती कहाँ सोई हुई है?

पद्मिनिका—समुद्रगृह में।

विदूषक—अच्छा। जाओ। मैं भी महाराज को यह खबर देने जाता हूँ।

( निष्क्रान्तौ ❀ )

( प्रवेशकः † )

( ततः प्रविशति राजा ‡ )

राजा—

श्लाघ्यामवन्तिनृपतेः सदृशीं तनूजां

कालक्रमेण　　पुनरागतदारभारः ।

---

❀ निष्क्रान्तौ = पद्मिनिका-विदूषकौ स्वस्वकार्यंकरणार्थं निर्गतावित्यर्थः ।

† प्रवेशकः इति । "प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः" इत्युक्तेः, प्राकृतभाषाभाषिपात्रमुखेन पद्मावत्या अस्वस्थता, राज्ञस्तत्समीपमुपसर्पणञ्चेत्यादि भूतभविष्यदर्थज्ञापकोऽर्थोपक्षेपकः ।

‡ अथ राज्ञः प्रवेशं दर्शयति—ततः प्रविशतीति । ततः = पद्मिनिका-विदूषकयोर्निर्गमनानन्तरम् । राजा = उदयनः । वासवदत्ताविरहकातरो राजा तामेव चिन्तयन्नाह— श्लाघ्यामिति ।

( अन्वयः ) कालक्रमेण, पुनरागतदारभारः, ( अहम् ) श्लाघ्याम्, अवन्तिनृपतेः, सदृशीम्, तनूजाम्, लावाणके हुतवहेन, हृताङ्गयष्टिम्, ताम्, हिमहताम्, पद्मिनीमिव चिन्तयामि ।

( टीका ) कालक्रमेण = कालस्य क्रमणेन, गच्छता कालेन, वासवदत्ताया उपरतायाः कतिपयमासानन्तरमित्यर्थः । पुनरागतदारभारः = पुनः भूयः, आगत उपनतः, दारभारः पद्मावतीपरिग्रहणरूपो भारो यस्मिन् सः, तथाविधोऽहम् । श्लाघ्याम् । अवन्तिनृपतेः = अवन्तिदेशाधीश्वरस्य महाराजप्रद्योतस्य । सदृशीम् =

---

( दोनों चले गये )

प्रवेशक

( राजा आते हैं )

यद्यपि मैंने वासवदत्ता के चल बसने के बाद फिर विवाह कर लिया है, परन्तु अवन्तिराज के समान गुणोंवाली, प्रशंसनीया कन्या वासवदत्ता का

लावाणके हुतवहेन हृताङ्गयष्टिं
तां पद्मिनीं हिमहतामिव चिन्तयामि ॥ १ ॥

( प्रविश्य ※ )

विदूषकः—तुवरदु तुवरदु दाव भवं। [ त्वरतां त्वरतां तावद् भवान्। † ]

---

अनुरूपाम्। तनूजाम् = कन्याम्। लावाणके = तन्नाम्नि ग्रामे। हुतवहेन = अग्निना। हृताङ्गयष्टिम् = हृतः दग्धः, अङ्गयष्टिः = अङ्गं शरीरं यष्टिकेवेत्यङ्गयष्टिर्यस्याः सा ताम्। ताम् = सर्वदा मन्मानसावासां प्रणयिनीं वासवदत्ताम्। हिमहताम् = हिमेन तुषारपातेन, हतां नाशिताम्, दग्धामित्यर्थः पद्मिनीमिव = कमलिनीमिव। चिन्तयामि = प्रतिक्षणं ध्यायामि। अत्र पुनरागतवारभार इति कथनेन ममायमपरो विवाहः विधिवशादेव सम्पन्नः, न ममाऽत्र मनागप्यभिलाषः किन्तु वासवदत्तैकायत्तचेतसो मम भार एवाऽयं प्रतिभातीति राज्ञा सूचितम्। अस्मिन् पद्ये राज्ञो वासवदत्ताविषयकः प्रगाढो रतिभावो व्यज्यते। उपमाविशेषोक्तिश्चालङ्कारौ। "वसन्ततिलकं" वृत्तम्।

वासवदत्तां चिन्तयन् राजा वदति—प्रियाया वासवदत्ताया उपरमानन्तरं कियत्यपि कालेऽतीते सति वासवदत्ताप्रेमभरिक्तचेता अप्यहं कार्यगौरवान्मगधराजपुत्रीं पद्मावतीं परिणीतवानस्मि। स चाऽयं मेऽपरो विवाहः विधिवशादेव सम्पन्नः। मम त्वसौ भारभूत एव प्रतीयते। अहं तु सर्वदा प्रशस्तगुणवतीं महाराजप्रद्योतस्याऽनुरूपां तनयां मम प्रेमसर्वस्वभूतां प्रियां वासवदत्तां सर्वदा स्मरामि। या किल तुषारपातेन पद्मिनीव लावाणकग्रामेऽग्निना दग्धशरीरा अभूत्। अहो! किं करोमि, न विस्मर्तुं शक्नोमि प्रियां वासवदत्तामिति भावः॥ १॥

※ अथ पद्मावत्याः शिरोवेदनावृत्तं राजानं सूचयितुं समागतस्य विदूषकस्य प्रवेशमाह—प्रविश्येति।

† विदूषको राजसमीपं गत्वा राजानं ब्रूते—तुवरदु—इति। द्विरुक्त्या

---

( प्रतिक्षण ) स्मरण बना रहता है, जिसका कोमल शरीर हिम से नष्ट हुई कमलिनी के समान, लावाणक नाम ग्राम में अग्नि से जल गया।

( आकर ) विदूषक—शीघ्रता कीजिये, महाराज। शीघ्रता कीजिये!

राजा—किमर्थम् ।❀

विदूषकः—तत्तहोदी पदुमावदी सीसवेदणाए दुक्खाविदा । [ तत्रभवती पद्मावती शीर्षवेदनया दुःखिता । † ]

राजा—कैवमाह । ‡

विदूषकः—पदुमिणिआए कहिदं । [ पद्मिनिकया कथितम् । § ]

राजा—भोः ! कष्टम् ,△

रूपश्रिया समुदितां गुणतश्च युक्तां

---

सम्भ्रमो द्योत्यते । राजन् ! अतिशीघ्रं भवान् गच्छत्वित्यर्थः ।

❀ राजा तत्र कारणं पृच्छति—किमर्थमिति । कस्मै प्रयोजनाय कुत्र मया शीघ्रं गन्तव्यमित्यर्थः ।

† विदूषक उत्तरयति—तत्तहोदी–इति । तत्रभवती = मान्या । शीर्षवेदनया = शिरःपीडया । तां द्रष्टुं भवान् शीघ्रं गच्छत्वित्याशयः ।

‡ कुतो भवता ज्ञातोऽयं वृत्तान्त इति राजा पृच्छति –कैवमाहेति । का = दासीष्वन्यतमा । एवम् = पद्मावत्याः शिरोवेदनया अस्वास्थ्यम् । आह = उवाच ।

§ विदूषक उत्तरयति—पदुमिणिआए—इति ।

△ पद्मावतीप्रियसख्या कथितं वृत्तं सत्यमेव भवेदित्यवधार्य राजा दुःखेनाऽऽह—भोः ! कष्टमिति । अहो ! कष्टकरोऽयं वृत्तान्त इत्यर्थः ।

किं कष्टं तदाह—रूपश्रियेति ।

( अन्वयः ) रूपश्रिया, समुदिताम् , गुणतश्च युक्ताम् , प्रियाम् , लब्ध्वा,

---

राजा—क्यों ?

विदूषक—महारानी पद्मावती के शिर में बहुत दर्द है ।

राजा—तुमको कैसे मालूम हुआ ?

विदूषक—मुझसे पद्मिनिका ने कहा ।

राजा—अहो ! दुःख का क्या कहना है ।

लब्ध्वा प्रियां मम तु मन्द इवाद्य शोकः ।
पूर्वाभिघातसरुजोऽप्यनुभूतदुःखः
पद्मावतीमपि तथैव समर्थयामि ॥ २ ॥

मम तु अद्य शोकः, मन्दः, इव, अनुभूतदुःखः, पूर्वाभिघातसरुजः, पद्मावतीमपि, तथैव समर्थयामि ।

(टीका) रूपश्रिया=रूपस्य लोकोत्तरस्य सौन्दर्यस्य श्री लक्ष्मीस्तस्या, सौन्दर्यातिशयसुषमयेत्यर्थः । समुदिताम् = युक्ताम् । गुणतश्च—अत्र सार्वविभक्तिकस्तसिः । विनयमार्दवदयादाक्षिण्यादिगुणैरित्यर्थः । युक्ताम् = विभूषिताम् । प्रियाम्=प्रेमास्पदं पद्मावतीम् । लब्ध्वा = प्राप्य, पद्मावतीं नववधूत्वेन प्राप्य समाश्वस्तचेतस इत्यर्थः । मम तु = वत्सराजस्य उदयनस्य तु । अद्य = इदानीम् । शोकः = प्रियाविरहजन्यं दुःखम् । मन्द इव=किञ्चिन्न्यून इव । अस्तीति शेषः । वासवदत्तावियोगदुःखितस्य मम लोकोत्तरसौन्दर्यशालिनीं सद्गुणवतीं नववधूं पद्मावतीं लब्ध्वा सम्प्रति वासवदत्तावियोगदुःखं किञ्चिन्न्यूनतां गतमिवेति भावः । अनुभूतदुःखः=अनुभूतम् उपभुक्तम्, दुःखं प्रियावियोगजक्लेशो येन सः । पूर्वाभिघातसरुजः=पूर्वं प्रथमम्, य अभिघातः वासवदत्तानिधनात्मक आघातः, तेन सरुजः रुजया पीडया सहितः । पद्मावतीशिरोवेदनाकर्णनेन पुनरपि नवीभूतवासवदत्तावियोगव्यथ इत्यर्थः । सरुज इत्यत्र "आपश्चैव हलन्तानाम्" इति भागुरिमतेन आवन्तो रुजाशब्दो ग्राह्यः । अत एव दुःखितचेता अहम् "स्नेहः पापशङ्की" इति न्यायेन पद्मावतीमपि = मगधराजभगिनीं नववधूमपि । तथैव = वासवदत्तावदेव समर्थयामि = सम्भावयामि । पद्मावतीमस्वस्थां श्रुत्वा साऽपि किं वासवदत्तावदेव मां परित्यक्ष्यतीत्यहं शङ्के- इति भावः । यद्वा—पूर्वाभिघातसरुज इति ममेत्यस्य विशेषणम् । अस्मिन् पक्षे रुक्शब्दो हलन्तो ग्राह्यः । अत्र वासवदत्तामुपरतां सम्भाव्य नवां पत्नीमुद्वहतोऽपि वत्सराजस्य चेतसि पूर्वपत्नीप्रेम्णोऽनुवृत्ततया वत्सराजात्मसमवेतो वासवदत्ताविषयकः

मैं पहिले ही से वासवदत्ता की मृत्यु से दुःखी हूँ किन्तु सुन्दरी और गुणवती पद्मावती को पाकर मेरा वह शोक कुछ न्यून सा हो गया था । मुझ दुखिया के लिये पद्मावती भी वासवदत्ता के तुल्य ही है ॥ २ ॥

अथ कस्मिन् प्रदेशे वर्तते पद्मावती । ❀

विदूषकः—समुद्दगिहके किल सेज्जात्थिण्णा । [ समुद्रगृहके किल शय्यास्तीर्णा । † ]

राजा—तेन हि तस्य मार्गमादेशय । ‡

विदूषकः—एदु एदु भवं । [ एत्वेतु भवान् । § ]

( उभौ परिक्रामतः ○ )

---

प्रेमा परिपोषमुपनीयते । पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । "वसन्ततिलकं" वृत्तम् ।

पद्मावतीशिरोवेदनावृत्तान्तं श्रुत्वा राजा स्वगतं विमृशति लोकाधिकसौन्दर्यशालिनीं सद्गुणगणसमृद्धां पद्मावतीं नववधूत्वेन प्राप्य वासवदत्तावियोगोत्पन्नो मे शोकोऽद्य किञ्चिन्मन्दतां गत इव प्रतीयते । किन्तु पूर्वं वासवदत्तावियोगाघातेन दुःखितः दुर्भागधेयोऽहमिदानीं पद्मावत्याः शिरोवेदनावृत्तान्तं श्रुत्वा "स्नेहः पापशङ्की" इति न्यायेन पद्मावत्यपि वासवदत्तेव न भवत्विति चिन्तयामीति भावः ॥२॥

❀ अथ पद्मावतीं दिदृक्षू राजा सा कुत्रास्तीति विदूषकं पृच्छति—अथेति । अथेति प्रश्ने । प्रदेशे = स्थाने । कस्मिन् स्थाने पद्मावती वर्तत इत्यर्थः ।

† विदूषक उत्तरयति—समुद्दगिहके—इति । समुद्रगृहके नाम जलयन्त्रगृहे पद्मावत्याः शयनं कल्पितमस्तीति पद्मिनिकयोक्तम्, अतः सा तत्रैव भविष्यतीति मन्ये इत्यर्थः ।

‡ राजा वदति—तेन–हीति । हि शब्दो वाक्यालङ्कारे । तेन हि = यद्येवं तर्हीत्यर्थः । तस्य = समुद्रगृहकस्य । मार्गम् = पन्थानम् । आदेशय = बोधय । अग्रेसरो भवेत्यर्थः ।

§ मार्ग प्रदर्शयन् विदूषक आह—एदु–इति । वीप्सया त्वरा द्योत्यते ।

□ उभौ परिक्रामतः = राजविदूषकौ स्तोकमन्तरं गच्छतः ।

---

अच्छा, बतलाओ तो कि, पद्मावती कहाँ है ?

विदूषक—समुद्रगृह में शय्या पर पड़ी हैं ।

राजा—अच्छा, तो समुद्रगृह का रास्ता बतलाओ ।

विदूषक—आइये, आइये, महाराज !

( दोनों घूमते हैं )

विदूषकः—इदं समुद्दगिहकं। पविसदु भवं । [ इदं समुद्रगृहकम् । प्रविशतु भवान् । ※]

राजा—पूर्वं प्रविश । †

विदूषकः—भो ! तह । ( प्रविश्य ) अविहा चिट्ठदु चिट्ठदु दाव भवं । [ भोः ! तथा । अविहा तिष्ठतु तिष्ठतु तावद् भवान् । ‡ ]

राजा—किमर्थम् । §

विदूषकः— ☐ एसो सु दीवप्पभावसूइदरूवो वसुधातले

※ समुद्रगृहकं प्राप्य विदूषकः तद्राजानं दर्शयति—इदं-इति । इदमित्यङ्गुल्या निर्देशः । अस्तीति शेषः । प्रविशतु = अन्तर्गच्छतु ।

† अपरिचिते स्थाने प्रथममात्मनः प्रवेशमनुचितं सम्भाव्य राजा तत्र विदूषकं पूर्वं प्रवेशयति—पूर्वं प्रविशेति । पूर्वम् = आदौ ।

‡ विदूषकस्तदनुमोदते—भो-इति । तथा = भवान् यदाज्ञापयति, तदहं स्वीकरोमीत्यर्थः ।

अन्तः प्रविश्य विदूषको वदति—अविहा-इति । अविहेति खेदे । तिष्ठतु, इति संभ्रमे द्वित्वम् । तावदिति वाक्यालङ्कारे ।

§ इत्थं विदूषकेण वारितान्तःप्रवेशः राजा पृच्छति—किमर्थमिति । किमर्थं मां बहिरेव निरुणत्सि, किञ्च कारणं तव खेदस्येत्यर्थः ।

☐ विदूषक उत्तरयति—एसो-इति । एषः=अविभावितस्वरूपो जन्तुविशेषः । दीपप्रभावसूचितरूपः = दीपस्य प्रभावेण सामर्थ्येन, सूचितं प्रकटीकृतम् , रूपं

विदूषक—यही समुद्रगृह है । इसके भीतर चलिये ।

राजा—पहिले तुम चलो ।

विदूषक—बहुत अच्छा ( भीतर जाकर ) अरे ! बापरे बाप ! महाराज ! उधर ही रहिये, उधर ही ।

राजा—क्यों ? ( ऐसा क्यों कहते हो )

विदूषक—दीपक के उजाले में जमीन पर लोटता हुआ वह साँप दिखाई दे रहा है ।

परिवत्तमाणो अअं काओदरो । [ एष खलु दीपप्रभावसूचितरूपो वसुधातले परिवर्तमानोऽयं काकोदरः । ]

राजा—( प्रविश्यावलोक्य सस्मितम् ) अहो सर्पव्यक्तिर्वैधेयस्य ।

ऋज्वायतां हि मुखतोरणलोलमालां
भ्रष्टां क्षितौ त्वमवगच्छसि मूर्ख ! सर्पम् ।

स्वरूपं यस्य सः । यद्वा दीपप्रभया दीपप्रकाशेन, अवसूचितं रूपमाकारो यस्य सः । वसुधातले = भूतले । परिवर्तमानः = परिलुठन् । अयं काकोदरः = अयं—मया समीपं गत्वा स्पष्टं दृष्टः । काकोदरः—काकम्—ईषत्कुटिलगतिमदुदरं यस्य सः । फणी, सर्प इत्यर्थः । "कुण्डली गूढपाच्चक्षुःश्रवा काकोदरः फणी" इत्यमरः । अस्मिन् स्थले दीपप्रभाप्रकाशिताकारो भूतले चेष्टमानः सर्पो वर्तते, अतो भवता नान्तःप्रवेष्टव्यमित्यर्थः ।

विदूषकोक्तिमाकर्ण्य समुद्रगृहकस्यान्तः प्रविश्य तत्र सर्पप्रतिभासवस्तु सम्यङ् निर्वर्ण्य वस्तुस्थितिं बुद्ध्वा विदूषकस्य मूर्खतायां हसन् राजा वदति—अहो इति । अहो—इत्याश्चर्ये । सर्पव्यक्तिर्वैधेयस्य = सर्पव्यक्तिः, सर्पज्ञानमित्यर्थः । वैधेयस्य = मूर्खस्य विदूषकस्य । अहो ! मूर्खोऽयं विदूषकः दृश्यमानं वस्तु सर्पत्वेन जानातीत्यर्थः ।

नाऽयं सर्पः, किन्तु मालेवेति वस्तुस्थितिं प्रदर्श्य राजा विदूषकस्य भ्रमं निराकरोति— ऋज्वायतामिति ।

( अन्वयः ) हे मूर्ख ! हि, ( त्वम् ) ऋज्वायताम्, क्षितौ, भ्रष्टाम्, मुखतोरणलोलमालाम्, सर्पम्, अवगच्छसि, या, निशि, मन्दानिलेन, परिवर्तमाना, भुजगस्य, विचेष्टितानि, किञ्चित्, करोति ।

( टीका ) हे मूर्ख ! = हे मूढ ! वसन्तक ! ( त्वम् ) ऋज्वायताम् = ऋजुः सरला चासौ आयता दीर्घा च ताम् । अनेन विशेषणेन मालायां सर्पाकारसादृश्यं भ्रान्त्युत्पादकं सूचितम् । क्षितौ = भूतले । भ्रष्टाम् = अधःपतिताम् । मुखतोरण-

राजा—( पैठ और देख तथा विहँस कर ) अहा ! यह मूर्ख इसे साँप समझ रहा है ।

रे मूर्ख ! द्वार पर की लटकी हुई लम्बी माला जो कि जमीन पर गिर पड़ी

मन्दानिलेन निशि या परिवर्तमाना
किञ्चित् करोति भुजगस्य विचेष्टितानि ॥ ३ ॥

विदूषकः—※( निरूप्य ) सुट्ठु भवं भणादि । ण हुँ अअं काओ-अरो । (प्रविश्यावलोक्य) तत्तहोदी पदुमावदी इह आअच्छिअ णिग्गदा

लोलमालाम् = मुखं मुख्यं प्रधानम्, यत्तोरणं—समुद्रगृहकस्य बहिर्द्वारम् "तोरणोऽस्त्री बहिर्द्वारम्" इत्यमरः। तत्र लोला पवनकम्पनवशाच्चलनशीला या माला स्रक्, ताम् । सर्पम् = भुजगम् । अवगच्छसि = जानासि सर्पोऽयमिति मन्यसे इत्यर्थः। या = तोरणमाला । निशि = रात्रौ । मन्दानिलेन = मन्दपवनेन । परिवर्तमाना = परितः स्पन्दमाना भुजगस्य । विचेष्टितानि = वक्रगत्या चलनादीनि कार्याणि । किञ्चित् = किञ्चिदिव, अल्पमित्यर्थः । करोति = विधत्ते । भ्रान्तापह्नुतिरलङ्कारः । "वसन्ततिलकं" वृत्तम् ।

समुद्रगृहकबहिर्द्वारे लम्बमानां मालां सर्पोऽयमित्यवगम्य भयाकुलं विदूषकं राजा परिहसन्नाह—रे मूर्ख ! वसन्तक ! कुत्र सर्पः, व्यर्थमेव भवान्, बिभेति, इयं किल सरला दीर्घा च भूतले निपतिता समुद्रगृहकतोरणद्वारावलम्बिता माला वर्तते। इमां त्वं सर्पं इत्यवगतवानसि, इयञ्च रात्रिवशात् प्रकाशमान्द्येन मन्दवायुना वेल्लिता सती सर्पस्येव कुटिलचलनादीनि चेष्टितानि किञ्चिदिव करोति, अतस्तव अस्यां सर्पभ्रमो जातः। वस्तुतो नाऽयं सर्पः, किन्तु मालैवेति महदाश्चर्यं मे तव मौर्ख्ये इति भावः ॥ ३ ॥

※ राज्ञ उक्तिं श्रुत्वा तत्र सर्पो नास्तीति वस्तुस्थितिं, सम्यग्विभाव्य विदूषको वदति—सुट्ठु—इति । सुष्ठु = शोभनम्, यथार्थमित्यर्थः । खल्विति निश्चये ।

है, उसे तू साँप समझ रहा है । वह तो रात की मन्द मन्द वायु से हिल-डुल रही है, जिससे तुझे साँप का चलना भासित हो रहा है ॥ ३ ॥

विदूषक—( गौर से देख कर ) हाँ, आप ठीक कह रहे हैं। यह साँप नहीं है । ( पैठ कर और देख कर ) मालूम होता है, महारानी पद्मावती यहाँ आकर चली गयीं ।

भवे। [ सुष्ठु भवान् भणति। न खल्वयं काकोदरः तत्रभवती पद्मावती-हागत्य निर्गता भवेत्। ]

राजा—वयस्य ! अनागतया भवितव्यम् ❀

विदूषक—कहं भवं जाणादि। [ कथं भवान् जानाति। † ]

राजा—किमत्र ज्ञेयम् ‡। पश्य,

---

अयम् = भूमौ लम्बमानः। काकोदरो न = सर्पो न। भवदुक्तमेव सत्यम्। मम तु मिथ्यैव सर्पभ्रान्तिर्जाता। भूमौ लम्बमानोऽयं न सर्प इति भावः।

इत्थं वदन्नेव विदूषकः समुद्रगृहकस्यान्तः प्रविश्य तत्र पद्मावतीमदृष्ट्वा वदति—तत्तहोदी–इति। तत्रभवती = मान्या। इह = समुद्रगृहके। निर्गता = इहागत्य पुनर्निष्क्रान्ता। मान्या पद्मावती अत्र समुद्रगृहके समागत्य पुनरितः प्रतिनिवृत्ता भवेत्, पद्मिनिकया तु इहैव तत्रभवत्याः स्थितिः सूचिताऽऽसीदिति भावः।

❀ तत्र पद्मावत्या आगमनचिह्नं किमप्यविभाव्य राजा विदूषकोक्तिं निराकुरुते—वयस्येति। वयस्य ! = मित्र ! अनागतया = अनायातया, समुद्रगृहकमप्रविष्टयेत्यर्थः। पद्मावती इहागत्या प्रतिनिवृत्ता इति न, किन्तु–इहागतैव नेति भावः।

† पद्मावती नैवागतेति राजोक्तेः कारणं पृच्छति विदूषकः—कहं–इति। कथम् = केन प्रकारेण जानाति = पद्मावती नैवागतेति निश्चिनोति।

‡ राजोत्तरयति—किमत्रेति। अत्र = पद्मावती इहागता न वेति विषये। ज्ञेयम् = अनुमानेन ज्ञातुं योग्यम्। पद्मावती इह नागतेत्यर्थस्य स्पष्टं प्रतीयमानत्वात् तत्रानुमानादि विचारस्यावश्यकताऽपि नास्तीत्यर्थः। विदूषकसन्तोषार्थं कथमिदमवगतमिति राजा निरूपयति—पश्य–शय्येति।

---

राजा—मित्र, वे यहाँ आई ही नहीं।

विदूषक—आप कैसे जानते हैं ?

राजा—अरे ! इसमें जानने की क्या बात है ! देखो—

शय्या नावनता तथास्तृतसमा न व्याकुलप्रच्छदा
न क्लिष्टं हि शिरोपधानममलं शीर्षाभिघातौषधैः ।

( अन्वयः ) हि, शय्या, तथास्तृतसामा, अवनता न, व्याकुलप्रच्छदा न, अमलम्, शिरोपधानम्, शीर्षाभिघातौषधैः, न, क्लिष्टम्, रोगे दृष्टिविलोभनम्, जनयितुम्, काचित्, शोभा, न, कृता । पुनः, प्राणी, रुजा, शयनं, प्राप्य, शीघ्रम्, स्वयम्, न, मुञ्चति ।

( टीका ) हि = यतः, यस्मात् कारणात् । शय्या = शयनीयम् । तथास्तृतसमा = तथा – यथापूर्वम्, आस्तृता विहिततूलिकाद्यास्तरणा, सा चासौ समा— अविषमा, किञ्चिदपि वैषम्यं नाधिगता । तथा इति पृथक् पदं वा । अवनता न = देहभारेण मनागपि नीचैर्नता न वर्तते । शय्योपरि शयानस्य देहभारेण शय्या मध्ये प्रान्तयोर्वा किञ्चिदवनता भवत्येव, इयं तु न तथेति भावः ।

व्याकुलप्रच्छदा = व्याकुलः शरीरभारपार्श्वपरिवर्तनादिना सङ्कुचितः प्रच्छदः निचोलपटः, शय्योपर्याच्छादितः, दुग्धफेनधवलः प्रच्छादनपटो यस्याः सा । "निचोलः प्रच्छदपटः" इत्यमरः । न = नैवास्ति । कुसुमसुकुमार्यास्तन्वङ्ग्याः पद्मावत्याः शरीरे भाराभावाच्छय्या कदाचिदवनता न भवेत्, परन्तु शयानायाः पार्श्वपरिवर्तनादिभिः प्रच्छदपटस्तु अवश्यमेव सङ्कुचितो भवेत्, अत्र च स न सङ्कुचित इत्यर्थः । अमलम् = शिरःसम्बन्धसुलभमलरहितम्, स्वच्छम्, शुभ्रमित्यर्थः । शिरोपधानम् = शिर उपधीयते स्थाप्यते यत्र तत्, उपबर्हः । अत्र "शिरोवाची शिरोऽदन्तो रजोवाची रजस्तथा" इति कोशप्रामाण्यात्, "पिण्डं दद्यात् गयाशिरे" "विचकर्त शिरान् द्रौणिः" इति शिष्टप्रयोगदर्शनाच्च 'शिर-शब्दोऽकारान्तो ग्राह्यः । तेन शिरस्य उपधानम् इति विग्रहो बोध्यः । शीर्षाभिघातौषधैः = शीर्षाभिघातः, शिरःपीडा, तस्य औषधैः, वेदनाप्रतीकारसमर्थैः शीर्षानुलेपनैः । न क्लिष्टम् = नैव दूषितम् । रोगे = आमये सति, प्रकृते शिरो-

बिछौना ज्यों का त्यों बिछा हुआ है । कुछ भी नीचा ऊँचा नहीं दीख पड़ता । बिछौने के ऊपर की चादर भी इधर उधर नहीं हुई । शिर के दर्द को दूर करने के लिये लेप की हुई औषधि से निर्मल तकिया भी

रोगे दृष्टिविलोभनं जनयितुं शोभा न काचित् कृता
प्राणी प्राप्य रुजा पुनर्न शयनं शीघ्रं स्वयं मुञ्चति ॥ ४ ॥

वेदनायां सत्यामित्यर्थः । दृष्टिविलोभनम् = दृष्टेः नेत्रयोः, विलोभनम् आकर्षकम्, रोगार्तस्य मनोरञ्जकमित्यर्थः । जनयितुम् = कर्तुम् । रुग्णस्य चक्षुरावर्जनसामग्रीं सन्निधाप्य रोगसंवेदनादन्यत्र मनोयोगमापादयितुमित्यर्थः । काचित् = कापि । शोभा = भित्तौ चित्रालङ्करणादिना सुषमा । न कृता = नैव विहिता । अत्र शोभा-पदेन भित्तौ चित्राद्यलङ्करणरूपैव शोभा ग्राह्या, शिरोवेदनया पीडितस्य चित्रा-वलोकनादिना क्षणमात्रं पीडाविस्मरणस्य सम्भवात् । यत्तु—शोभा = क्रीडाकौतुका-दिरचनादिकम् ( 'ताश, चौपड़ खेलना' आदि ) कैश्चिद् व्याख्यातम्, तच्छिरो-वेदनारुग्णस्य न मनोविनोदावहं भवितुमर्हतीति नाऽस्यभ्यं रोचते । पुनः = अन्यच्च । प्राणी = जीवमात्रम्, प्रकृते मनुष्य इत्यर्थः । रुजा = रोगेण हेतुना । शयनम् = शय्याम् । प्राप्य = लब्ध्वा । शीघ्रम् = त्वरितम् । स्वयं न मुञ्चति = आत्मना स्वेच्छया नैव परित्यजति; इत्थं च पद्मावती नाऽत्रायातेति सिद्धम् । अत्र पूर्वोक्तैर्हेतुभिः पद्मावत्यनागमनस्य साधनादनुमानालङ्कारः । अनुमानं नाम-गर्भसन्धेरङ्गं च प्रदर्शितम् । "शार्दूलविक्रीडितं" वृत्तम् ।

अत्र समुद्रगृहके पद्मावती नैव समागतेति स्वोक्तिं राजा समर्थयति—यद्यत्र पद्मावती आगता भवेत्, तर्हि तस्याः शय्योपरि शयने देहभारेण मध्ये प्रान्तयोर्वा शय्याया ईषदप्यवनतिर्भवितुं युक्ता । इह तु शय्या ईषदपि नावनताऽस्ति । किन्तु पूर्वं यथा आस्तृताऽऽसीत्, तथैव समा, न किञ्चिदपि वैषम्यं प्राप्ता दृश्यते । यदि प्रकृत्यैव कुसुमसुकुमार्याः पद्मावत्याः शरीरस्य लघुतया भाराभावेन शयनी-यस्य निम्नता नाभूदित्युच्यते, तर्हि कारणान्तरं श्रूयताम्, शय्योपर्यास्तृतः दुग्ध-फेनधवलः प्रच्छदपटोऽपि नेषदपि सङ्कुचितः । यद्यत्र पद्मावती सुप्ताऽभविष्यत्, अन्यच्च—शिरोवेदनया पीडितायाः पद्मावत्याः पीडापनोदनाय शिरस्थाहितैरनु-

मैंकी नहीं हुई ? रोगी की आँखों को लुभाने के लिये की हुई कोई सजावट भी नहीं दीख पड़ती, और दूसरी बात यह है कि, रोगी शय्या पाकर इतनी जल्दी अपने आप उसे छोड़ा नहीं करता ।

विदूषकः—तेण हि इमस्सिं सय्याए मुहुत्तअं उवविसिअ तत्तहोदिं पडिवालेदु भवं। [तेन ह्यस्यां शय्यायां मुहूर्तकमुपविश्य तत्रभवतीं प्रतिपालयतु भवान्। ॐ]

राजा—बाढम्। (उपविश्य) वयस्य! निद्रा मां बाधते। कथ्यतां काचित् कथा †।

लेपनद्रव्यैः निर्मलमिदमुपबर्हमवश्यमेव मलिनमभविष्यत्, नात्र मनागपि मालिन्यं दृश्यते। अपरञ्च—रोगिणश्चक्षुरावर्जनेन रोगसंवेदनादन्यत्र मनोयोगमापादयितुं कुड्येषु चित्रादिभिः कापि शोभा न रचिताऽस्ति, सामान्यतो जीवमात्रम्, किं पुनः प्रकृतिकोमलः स्त्रीजनः, रोगेण आक्रान्तः शयितुमिच्छन् शयनं प्राप्य पुनस्तदात्मना स्वेच्छया कदापि शीघ्रं न मुञ्चति। अयं तु रोगिणां स्वभाव एव, यत्ते शय्यामधिशयाना एव तिष्ठन्ति। अत्यावश्यक एव कार्ये शय्यां मुञ्चन्ति। इत्थञ्च पूर्वोक्तैर्हेतुभिः पद्मावत्या अत्रानागमनमेव साध्यते, न त्वागत्य निर्गमनमिति भावः॥ ४॥

ॐ युक्तियुक्तं राज्ञो वचनं निशम्य विदूषको वदति—तेण हि—इति। तेन हि=पद्मावत्यत्र नाऽयातेति निश्चयेन। अस्याम्=पद्मावत्युपभोगायास्तीर्णायाम्। शय्यायाम्=तल्पे। मुहूर्तकम्=क्षणमात्रम्। उपविश्य=स्थित्वा। प्रतिपालयतु=प्रतीक्षताम्। पद्मावतीमिति शेषः। पद्मावत्यत्र नायातेति निश्चयश्चेत् तर्हि तदर्थमास्तीर्णायामस्यां शय्यायां भवान् उपविश्य पद्मावतीं प्रतीक्षताम्, सा शीघ्रमेवायास्यतीति मन्ये इति भावः।

† राजा वदति—बाढमिति। बाढम्=वरम्। उपविश्य=पद्मावत्याः शय्यायां स्थित्वा। निद्राक्रान्तो राजा विदूषकं वदति—वयस्येति। वयस्य!=सखे वसन्तक! निद्रा=सुप्तिः। बाधते=आक्रामति। कथा=उपाख्यानम्। अत्र

विदूषक—तो आप इसी बिस्तरे पर थोड़ी देर बैठ कर महारानी पद्मावती के आने की बाट देखें।

राजा—बहुत अच्छा। (बैठ कर) मित्र! मुझे नींद आ रही है कोई कहानी कहो।

विदूषकः—अहं कहइस्सं । होन्ति करेदु अत्तभवं । [ अहं कथयिष्यामि । हुङ्कृतिं करोत्वत्रभवान् । ❀ ]

राजा—बाढम् । †

विदूषकः—अत्थि णअरी उज्जइणी णाम । तहिं अहिअरमणीआणि उदअह्लाणीणि वत्तन्ति किल । [ अस्ति नगर्युज्जयिनी नाम । तत्राधिकरमणीयान्युदकस्नानानि वर्तन्ते किल । ‡ ]

राजा—कथमुज्जयिनी नाम । §

---

शयनीये स्थितोऽहं निद्रयाऽऽक्रान्तोऽस्मि, तन्निद्रापनोदनाय किञ्चिन्मनोरञ्जकमुपाख्यानमारभ्यतामित्यर्थः ।

❀ विदूषको वदति—अहं—इति । "होन्ति" इति मूलस्य हुङ्कृतिमिति संस्कृतच्छाया दृश्यते, हुङ्कारमित्यर्थः । यद्वा—"हों" इत्यनुकरणम् । "हुँ" इति कथाश्रावयितुः प्रतिवाक्यान्तं कथाश्रवणसावधानतासूचनाय श्रोत्रा क्रियमाणो ध्वनिविशेषः । अहं कथां कथयामि, भवता मम वाक्यसमाप्तौ 'शृणोमि' इति सूचकः हुङ्कारः अवश्यमेव क्रियतामित्यर्थः ।

† राजा तदङ्गीकरोति—बाढमिति । हुङ्कृतिं करिष्यामीत्यर्थः ।

‡ विदूषकः कथामारभते—अत्थि—इति । नामेति प्रसिद्धौ । तत्र = उज्जयिन्याम् । अधिकरमणीयानि = अतिमनोहराणि । उदकस्नानानि = जलस्नानानि । स्नानार्हा मनोहरा जलाशयाः, सुन्दराणि स्नानागाराणि वा ।

§ विदूषकमुखादुज्जयिनीनाम श्रुत्वा तावता वासवदत्ताविषयकं किमप्यतीतं वृत्तं स्मरन् राजा पृच्छति—कथमिति । नामेति वाक्यालङ्कारे ।

---

विदूषक—मैं कहता हूँ । आप हुँकारी भरते जाइये ।

राजा—अच्छा ।

विदूषक—उज्जयिनी नाम की एक नगरी है । कहते हैं—वहाँ स्नान करने योग्य अत्यन्त सुन्दर स्थान है ।

राजा—क्या, उज्जयिनी ?

विदूषकः—जइ अणभिप्पेदा एसा कहा, अण्णं कहइस्सं । [ यद्यनभिप्रेतैषा कथा, अन्यां कथयिष्यामि । ❀ ]

राजा—वयस्य ! न खलु नाभिप्रेतैषा कथा † । किन्तु,

स्मराम्यवन्त्याधिपतेः सुतायाः
प्रस्थानकाले स्वजनं स्मरन्त्याः ।

❀ राज्ञः प्रश्नेन उज्जयिनीविषयिणीं कथां नैष शुश्रूषति, इति बुद्ध्या विदूषको वदति—जइ-इति । अनभिप्रेता = अनभिमता । यदीयमुज्जयिनीविषयिणी कथा भवते न रोचते, तर्हीत्यर्थः । अन्याम् = अपराम् ।

तस्याः कथायाः स्वानभिमतत्वं निषेधन् राजा स्वमनोभावं प्रकटयति—वयस्येति । न खलु नाभिप्रेता = अवश्यं प्रियैवेत्यर्थः । निषेधद्वयेन विधेर्दार्ढ्यं द्योत्यते । एषा कथा = त्वया प्रस्तूयमानमुपाख्यानम् । किन्त्विति वक्ष्यमाणश्लोकान्वयि ।

स्मरामीति ।

( अन्वयः ) प्रस्थानकाले, स्वजनम् , स्मरन्त्याः, स्नेहात् , प्रवृत्तम् , नयनान्तलग्नम्, बाष्पम्, ममैव, उरसि, पातयन्त्याः, अवन्त्याधिपतेः सुतायाः स्मरामि ।

( टीका ) प्रस्थानकाले = पित्रादिगुरुजनाज्ञां विनैव स्वजन्मभूमेरुज्जयिन्याः मया सार्कं कौशाम्बीं प्रति प्रयाणकाले । स्वजनम् = मदर्थे परित्यज्यमानं पित्रादिकं सम्बन्धिजनम् । स्मरन्त्याः = चिन्तयन्त्याः । स्नेहात् = स्वजनप्रेम्णा । प्रवृत्तम् = स्वत उद्गतम् । अत एव नयनान्तलग्नम् = नयनयोः नेत्रयोः, अन्ते प्रान्तभागे, अपाङ्गप्रदेशे इत्यर्थः । लग्नं संसक्तम् । पतनोन्मुखमिति यावत् । बाष्पम् = अश्रुजलम् । ममैव = मदीय एव । एवकारेण पितृभ्रात्रादिवर्गं मुञ्चन्त्यास्तदानीमहमेव

विदूषक—क्यों, यदि यह कहानी आपको अच्छी न मालूम होती हो, तो दूसरी कहूँ ।

राजा—मित्र ! यह बात नहीं कि, यह कहानी मुझे अच्छी मालूम नहीं होती । परन्तु—

( उज्जयिनी नाम का श्रवण कर ) मैं अवन्ति-राज-कुमारी वासवदत्ता का स्मरण करने लगता हूँ, जिसने उज्जायिनी से चलने के समय अपने माता-पिता

वाष्पं प्रवृत्तं नयनान्तलग्नं
स्नेहान्ममैवोरसि पातयन्त्याः ॥ ५ ॥

अपि च,॥

बहुशोऽप्युपदेशेषु यथा मामीक्षमाणया ।
हस्तेन स्रस्तकोणेन कृतमाकाशवादितम् ॥ ६ ॥

एकलो बन्धुरासम् इति सूच्यते । उरसि = वक्षसि । पातयन्त्याः = विसृजन्त्याः, वर्षयन्त्या इत्यर्थः । अवन्त्याधिपतेः = अवन्तीश्वरस्य महाराजप्रद्योतस्य । अत्रा-वन्त्याधिपतेरिति प्रयोगश्चिन्त्यः । अवन्त्याः आसमन्तादधिपतिः तस्येति कल्पनया कथञ्चिन्नेयः । सुतायाः = दुहितुर्वासवदत्तायाः, सुतां वासवदत्तामित्यर्थः । 'अधीगर्थे'-त्यादिना षष्ठी । स्मरामि = चिन्तयामि । अस्मिन् पद्ये प्रथमचरणे उपेन्द्रवज्रा द्विती-यादिचरणत्रये इन्द्रवज्रेति अनयोर्मेलनादुपजातिवृत्तम् ।

विदूषकेणोज्जयिनीविषयिण्यां कथायां प्रस्तुतायामुज्जयिनीशब्दश्रवणेन स्वमनसि समुपस्थितं वासवदत्ताविषयकं विचारं राजा प्रदर्शयति—सखे ! वसन्तक ! भवता प्रस्तुता कथा ममानभिप्रेताऽऽसीदिति भवता न शङ्कितव्यम् । भवन्मुखादुज्जयिनी-नाम श्रुत्वैवाहं वासवदत्तायास्तामवस्थामस्मार्षम् । यदा किल पित्रादिस्वजनानुमतिं विना मया सह स्वजन्मभूमेरुज्जयिन्याः कौशाम्बीं प्रति प्रिया वासवदत्ता प्रातिष्ठत, तदा मदर्थे परित्यज्यमानं पित्रादिकं स्वजनं विचिन्तयन्त्यास्तस्याः स्वजनप्रेम्णाऽ-कस्मादुद्गतमपाङ्गसंसक्तं वाष्पं तदानीं तस्या एकस्यैव बन्धोर्ममैवोरसि वर्षन्त्या महाराजप्रद्योतसुतायाः प्रियाया वासवदत्तायाः तात्कालिकी अवस्था मम दृशोः पुर इव समुपस्थिता । अत एव मया कथामारभमाणो भवान् 'कथमुज्जयिनी नाम' इति वाक्येन मध्य एवाक्षिप्तः, नान्यत्किमपि कारणमिति भावः ॥ ५ ॥

॥ अन्यदपि वासवदत्ताविषयकं वृत्तं वक्तुमिच्छन्नाह—अपि चेति । बहुश इति ।

आदि परिजनों का स्मरण करते हुए प्रेम की अधिकता से बढ़ते हुये अश्रुप्रवाह को मेरे ही गोद में बहाया था ॥ ५ ॥

और—

जो मेरे सङ्गीत सिखाते समय मेरे उपदेशों को न समझकर केवल मेरे

विदूषकः—भोदु, अण्णं कहइस्सं । अत्थि णअरं बह्मदत्तं णाम । तहिं किल राआ कंपिल्लो णाम । [ * भवतु, अन्यां कथयिष्यामि । अस्ति

( अन्वयः ) माम्, ईक्षमाणया, यया, बहुशः, अपि, उपदेशेषु, च्युतकोणेन हस्तेन, आकाशवादितम्, कृतम् ।

( टीका ) माम् = वीणावादनकलाशिक्षकमुदयनम् । ईक्षमाणया = सस्नेहमनवरतमवलोकयन्त्या । यया = अवन्तिराजकन्यया वासवदत्तया । बहुशः अपि = अनेकवारमपि । उपदेशेषु = मया दीयमानासु वीणावादनकलाशिक्षासु । च्युतकोणेन = च्युतः मदवलोकनव्यासङ्गेन ग्रहणानवधानतया च्युतः कोणः वीणावादनसाधनीभूतः सारिकाख्यो यन्त्रविशेषो यस्मात् सः तेन । "द्वयोस्तु कोणो वीणादेर्वादनं सारिका च सा" इति शब्दार्णवः । "कोणो वीणादिवादनम्" इत्यमरश्च । हस्तेन = करेण । अधः पतितमपि वीणावादनयन्त्रमजानान्त्या आकाशवादितम् = आकाशे वीणातिरिक्ते शून्यस्थले, वादितम् वादनार्थमङ्गुलिव्यापारणम् । कृतम् = अनुष्ठितम् । लयतालादिशून्यं व्यर्थमेव वादनं कृतमित्यर्थः । अत्रापि 'अवन्त्याधिपतेः सुतायाः स्मरामि' इति पूर्वेण सम्बन्धो बोध्यः । "अनुष्टुब्" वृत्तम् ।

राजा वासवदत्ताविषयकमन्यदप्याह—सखे ! वसन्तक ! अन्यदपि शृणु । जानास्येव मां वीणावादनरसिकम् । यदा प्रियायै वासवदत्तायै मया वीणावादनशिक्षणं दातुमुपक्रान्तं तदा वीणावादनोचिताः बहुविधा उपदेशा मया तस्यै दीयन्तेस्म । सा तु मत्कृतानुपदेशान् सावधानं शृण्वत्यपि स्नेहातिरेकात् अनवरतं मन्मुखैकार्पितदृष्टिरासीत् । इत्थं तस्या मनसोऽन्यत्र व्यासङ्गेन सारिकाख्यो वीणावादनयन्त्रविशेषः हस्ताच्च्युतोऽपि तया नावगतः । ततश्च कोणरहितेनैव हस्तेन तया वृथैव वीणावादने प्रयतितम्, तां तस्या मुग्धतामहमद्यापि स्मरामीति भावः ॥ ६ ॥

* विदूषकः पूर्वमुपक्रान्तया कथया वासवदत्तास्मरणेन राज्ञो विमनायमा-

---

मेरा मुँह ही देखती रह जाती और मिजराब से खाली हाथ से शून्य जगह में बे ताल सुर के गाने बजाने की क्रिया करती रहती थी ॥ ६ ॥

विदूषक—अच्छा दूसरी कहानी कहता हूँ । ब्रह्मदत्त नाम का एक नगर है । वहाँ काम्पिल्य नाम का एक राजा है ।

नगरं ब्रह्मदत्तं नाम । तत्र किल राजा काम्पिल्यो नाम ।

राजा—किमिति किमिति ※ ।

विदूषकः—( पुनस्तदेव पठति )

राजा—मूर्ख ! राजा ब्रह्मदत्तः, नगरं काम्पिल्यमित्यभिधीयताम् † ।

विदूषकः—किं राआ बह्मदत्तो, णअरं कंपिल्लं । [ किं राजा ब्रह्मदत्तः, नगरं काम्पिल्यम् ] ‡ ।

राजा—एवमेतत् + ।

---

नतां दृष्ट्वा कथान्तरमुपक्षिपति—भोदु—इति । किलेति प्रसिद्धौ । ब्रह्मदत्तनामके नगरे काम्पिल्यनामको राजाऽस्तीत्यर्थः । अत्र काम्पिल्यनामके नगरे ब्रह्मदत्तो नाम ऽराजाऽस्तीति वक्तुमुचितम् । परन्तु हास्यरतिना विदूषकेण "बाबाजी दण्डवत् इत्यत्र "दण्डाजी बम्बवत्" इतिवत् विपर्यस्तम् । तेन हास्यपरिपोषो भवति ।

※ नामविपर्यासं श्रुत्वा सकौतुकं राजा पृच्छति—किमितीति । द्विरुक्त्या सम्भ्रमो द्योत्यते ।

† विमनायमानं राजानं हासयितुमिच्छन् विदूषकः पूर्वोक्तमेव पुनः पठति । तच्छ्रुत्वा विदूषकभ्रान्तिं निराकुर्वन् राजा वदति—मूर्खेति । अभिधीयताम् = कथ्यताम् ।

‡ राज्ञो वचनं श्रुत्वा तस्य याथार्थ्यावगतये पुनस्तदनूद्य विदूषकः पृच्छति — किं इति ।

+ राजा स्वोक्तेर्याथार्थ्यं बोधयति—एवमेतदिति । यन्मयोक्तं तदेव सत्यमित्यर्थः ।

---

राजा—क्या क्या ?

विदूषक—( फिर वैसा ही कहता है )

राजा—मूर्ख ! राजा ब्रह्मदत्त और नगर का नाम काम्पिल्य ऐसा कह ।

विदूषक—क्या राजा ब्रह्मदत्त और नगर का नाम काम्पिल्य ?

राजा—हाँ, ऐसा ही समझो !

विदूषकः—तेण हिं मुहुत्तअं पडिवालेदु भवं, जाव ओट्ठगअं करिस्सं। राआ बह्मदत्तो, णअरं कंपिल्लं। (इति बहुशस्तदेव पठित्वा) इदाणिं सुणादु भवं। अयि सुत्तो अत्तभवं। अदिसीदला इअं वेला। अत्तणो पावरअं गह्णिअ आअमिस्सं। (निष्क्रान्तः) [तेन हि मुहूर्तकं प्रतिपालयतु भवान्, यावदोष्ठगतं करिष्यामि। राजा ब्रह्मदत्तः, नगरं काम्पिल्यम्। इदानीं श्रृणोतु भवान्। अयि सुप्तोऽत्रभवान्। अतिशीतलेयं वेला। आत्मनः प्रावारकं गृहीत्वागमिष्यामि ❀ ]।

(ततः प्रविशति वासवदत्ता आवन्तिकावेषेण, चेटी च † )

❀ विदूषकः राजोक्तस्य दृढाभ्यासं कर्तुमवकाशं याचते—तेण हिं-इति। तेन हि = तर्हि। मुहूर्तकम् = क्षणमात्रम्। ओष्ठगतम् = झटित्युच्चारणसौकर्याय पुनः पुनरभ्यासेन कण्ठस्थम्।

राजोक्तं कण्ठस्थं कृत्वा राजानं विदूषकः पुनराह—इदाणिं-इति। राजानं निद्राणमवलोक्य विदूषको वदति—अयि-इति। अयीति प्रश्ने। अत्र भवान् राजा सुप्तः किमित्यर्थः। मयाऽपि जागरित्वा किं कार्यम्? तात्कालिकं शैत्यमनुभवन् वदति—अदिसीदला-इति। अतिशीतला = शैत्यबहुला। इयं वेला = अयं समयः, रात्रिसमय इत्यर्थः। प्रावारकम् = ऊर्णाघटितं तूलादिघटितं वा उत्तरासङ्गं वस्त्रम्। "द्वौ प्रावारोत्तरासङ्गौ" इत्यमरः। निष्क्रान्तः = प्रावारकमानेतुं निर्गतः।

† ततः = विदूषकनिर्गमनानन्तरम्। आवन्तिकावेषेण = आवन्तिकावेषधारिणी वासवदत्ता प्रविशतीत्यर्थः। चेटी = पद्मिनिका मधुकरिकयोरन्यतरा।

विदूषक—यदि ऐसी बात है, तो जरा ठहर जाइये। तब तक मैं इसे कण्ठस्थ कर लूँ। (कई बार उसी को पढ़कर) अच्छा, अब आगे सुनिये। ऐं!! महाराज तो सो गये। खूब ठण्ढक पड़ती है। मैं अपनी चादर ले आऊँ।

(चला गया)

(आवन्तिका के वेष में चेटी के साथ वासवदत्ता आती है)

चेटी—एदु एदु अय्या। दिढं खु भट्टिदारिआ सीसवेदणाए दुक्खाविदा। [ एत्वेत्वार्या। दृढं खलु भर्तृदारिका शीर्षवेदनया दुःखिता ❀। ]

वासवदत्ता—हद्धि, कहिं सअणीअं रइदं पदुमावदीए। [ कुत्र शयनीयं रचितं पद्मावत्या † ]

चेटी—समुद्दगिहके किल सेज्जात्थिण्णा। [ समुद्रगृहके किल शय्यास्तीर्णा ‡ ]

वासवदत्ता—तेण हि अग्गदो याहि। [ तेन ह्यग्रतो याहि + ]

( उभे परिक्रामतः × )

चेटी—△इदं समुद्दगिहकं। पविसदु अय्या। जाव अहं वि सीसा-

---

❀ चेटी वदति—एदु–इति। वीप्सया त्वरा द्योत्यते। दृढम् = अत्यर्थम्। खल्विति निश्चये। भर्तृदारिका = पद्मावती शिरःपीडयाऽत्यन्तं दुःखिताऽस्ति तत्र श्रीमत्या सत्वरमागन्तव्यमित्यर्थः।

† पद्मावत्याः शिरोवेदनावृत्तान्तं श्रुत्वा दुःखिता वासवदत्ता वदति—हद्धि–इति। हा धिक् = पद्मावत्या अस्वस्थतां श्रुत्वा महद्दुःखमनुभवामीत्यर्थः। कस्मिन् भवने पद्मावत्याः शयनीयं कल्पितं तन्मे कथयेति वासवदत्ता चेटीं पृच्छति।

‡ चेट्युत्तरयति—समुद्दगिहके–इति।

+ वासवदत्ता वदति—तेण हि–इति। अग्रतो याहि = मार्गं दर्शयितुं ममाग्रतो गच्छेत्यर्थः।

× उभे परिक्रामत इत्यनेन वासवदत्ताचेट्योः ततो निर्गमनं सूचितम्।

△ समुद्रगृहकस्य समीपं गत्वा तदङ्गुल्या दर्शयन्ती चेटी वासवदत्तां वदति—

---

चेटी—महोदया जी! आइये, आइये। राजकुमारी शिर की पीड़ा से बहुत दुःखित हैं।

वासवदत्ता—हाय! पद्मावती का बिस्तरा कहाँ लगा हुआ है।

चेटी—समुद्रगृह में।

वासवदत्ता—अच्छा तो आगे आगे चल। ( दोनों घूमती हैं )

चेटी—यह समुद्रगृह है। आप भीतर चलें। तब तक मैं सिर पर का लेप लेकर जल्द आती हूँ।

णुलेवणं । तुवारेमि । ( निष्क्रान्ता ) [ इदं समुद्रगृहकम् । प्रविशत्वार्या । यावदहमपि शीर्षानुलेपनं त्वरयामि । ]

**वासवदत्ता**—अहो अकरुणा खु इस्सरा मे । विरहपय्युस्सुअस्स अय्यउत्तस्स विस्समत्थाणभूदा इअं पि णाम पदुमावदी अस्सत्था जादा । जाव पविसामि । (प्रविश्यावलोक्य) अहो परिजणस्स पमादो । अस्सत्थं पदुमावदिं केवलं दीवसहाअं करिअ परित्तजदि । इअं पदुमावदी

इदं—इति ।इदमित्यङ्गुल्या निर्देशः । आर्या = आवन्तिका । प्रविशतु = समुद्रगृहकस्यान्तर्गच्छतु । शीर्षानुलेपनम् = शिरोवेदनोपशामकमनुलेपनमौषधम् । त्वरयामि = त्वरया सम्पादयितुं गच्छामि । निष्क्रान्ता = शीर्षानुलेपानयनाय चेटी निर्गता ।

† अथ समुद्रगृहकान्तःप्रविशन्ती तत्र शय्यायां शयानं—प्रावरणाच्छादितवपुषं राजानमुदयनमियं पद्मावतीति सम्भावयन्ती तदीयास्वास्थ्यचिन्तया खिद्यमाना पद्मावती स्वगतं विमृशति—अहो—इति । अहो–इति खेदे । खल्विति निश्चये । मे = मम, मद्विषय इत्यर्थः । ईश्वराः = भाग्यविधात्र्यो देवताः । अकरुणाः निर्दयाः, भाग्यदेवताः अपि कुपिताः सन्तीत्यहं सम्भावयामीत्यर्थः । विरहपर्युत्सुकस्य = मत्सम्बन्धिविरहेण समुत्कण्ठितचेतसः विश्रामस्थानभूता = उत्कण्ठितमनोविनोदपात्रम् । अवस्था = शिरोवेदनया पीडिता । मम वियोगे खिन्नस्यार्यपुत्रस्य पद्मावत्येव केवलं चेति विश्रामभूमिरासीत्, साऽपीदानीं शिरोवेदनया पीडिता जातेत्यहो मे दुर्भाग्यमित्यर्थः ।

वासवदत्ता इत्थं विचिन्तयन्ती समुद्रगृहकान्तः प्रविश्य तत्र पद्मावतीमेकलामेव शयानां दृष्ट्वा वदति—अहो—इति । परिजनस्य = परिचारकवर्गस्य । प्रमादः

( चली गयी )

**वासवदत्ता**—हा ! ईश्वर हम पर सचमुच ऐसे रुष्ट हैं कि, जो एकमात्र पद्मावती ही मेरे विरह से अधीर हुये स्वामी को शान्ति और सुख देने वाली रह गयी थी, वह भी बीमार पड़ गयी । अच्छा, भीतर चलूँ । ( पैठ कर और देख कर ) अरे ! वाह रे ! सहेलियों की असावधानी कि अस्वस्थ हुई पद्मावती सोई हुई है । मैं भी बैठती हूँ । अगर अलग बैठूँगी, तो मालूम होगा कि आवन्तिका पद्मावती को प्यार नहीं करती । इस लिये इस शय्या पर ही बैठूँ ।

ओसुत्ता। जाव उवविसामि। अहवा अच्चासणपरिग्गहेण अप्पो विअ सिणेहो पडिभादि। ता इमस्सिं सय्याए उववि्सामि। ( उपविश्य ) किं णु हु एदाए सह उवविसन्तीए अज्ज पहलादिदं विअ मे हिअअं। दिट्ठिआ अविच्छिण्णसुहणिस्सासा। णिव्वुत्तरोआए होदव्वं। अहव एअ-

= अनवधानत्वम्। अस्वस्थाम् = शिरोवेदनया पीडिताम्। दीपसहायाम् = दीप एव सहायः प्रकाशकरणेन समाश्वासकः सहचरो यस्यास्ताम्, एकाकिनीमित्यर्थः। परित्यजति = पर्यत्यजदित्यर्थः। भूतार्थे लट्। अवसुप्ता = निद्रिता। उपविशामि = तल्पाधः कुट्टिमे तिष्ठामीत्यर्थः।

दूरे उपवेशनमनुचितं विभाव्य चिन्तयति—अहव–इति। अन्यासनपरिग्रहेण = पद्मावत्याः शय्यां विहायाऽन्यत्रोपवेशनेन। अल्प इव स्नेहः प्रतिभाति = न्यूनमिव पारस्परिकं प्रेम प्रतीयते। रुग्णस्य जनस्य शय्यां विहाय दूरे उपवेशनेन स्नेहविघातको भेदभावः प्रतीयत इत्यर्थः। उपविश्य = पद्मावत्याः शय्यायामेव स्थित्वा। किन्नु खलु = किमिति, न जाने केन कारणेनेत्यर्थः। एतया = पद्मावत्या। अद्य = इदानीम् प्रह्लादितमिव मे हृदयम् = हर्षोत्फुल्लमिव मे चेतः। पद्मावत्या सह तस्याः शय्यायामुपविशन्त्याः मम हृदयमिदानीं न जाने केन वा कारणेन हर्षोत्फुल्लमिव सञ्जातमित्यर्थः।

राज्ञः अविच्छिन्नं निस्सरतः श्वासवायून् विलोक्य पद्मावत्येवेयमिति सम्भावयन्ती वासवदत्ता वदति—दिट्ठिआ–इति। दिष्ट्या = सौभाग्येन। अविच्छिन्नसुखनिःश्वासाः = अविच्छिन्नो—विच्छेदरहितः सन्तत इत्यर्थः, सुखः सुखपूर्वकः, अनायासनिर्गमागम इत्यर्थः, निःश्वास उच्छ्वासो यस्याः सा। रोगिणां निःश्वासपवनास्तु शिथिलाः सकष्टनिर्गमागमाश्च भवन्ति, अस्यास्तु निःश्वासवायवः सौभाग्येनानिरुद्धा अनायाससञ्चाराश्च लक्ष्यन्ते इत्यर्थः, अत एवानया, निवृत्तरोगया = रोगनिर्मुक्तया, उल्लाघयेत्यर्थः।

पक्षान्तरमुपन्यस्यति—अहव–इति। एकदेशसंविभागतया = एकदेशस्य संविभागो यस्याः सा, तस्याः भावस्तत्ता तया। शयनीयस्य = शय्यायाः। शय्यायां

( बैठ कर ) अहा! इसके साथ बैठने से मेरा हृदय आज ऐसा क्यों आनन्दित हो रहा है। सौभाग्य से इसकी सांस अच्छी तरह लगातार चल रही है।

देससंविभाअदाए सअणीअस्स सूएदि मं आलिङ्गेहि त्ति । जाव सइस्सं । † ( शयनं नाटयति ) [ अहो अकरुणाः खल्वीश्वरा मे । विरहपर्युत्सुकस्यार्यपुत्रस्य विश्रामस्थानभूतेयमपि नाम पद्मावत्यस्वस्था जाता । यावत् प्रविशामि । अहो परिजनस्य प्रमादः । अस्वस्थां पद्मावतीं केवलं दीपसहायां कृत्वा परित्यजति । इयं पद्मावत्यवसुप्ता । यावदुपविशामि । अथवान्यासनपरिग्रहेणाल्प इव स्नेहः प्रतिभाति । तदस्यां शय्यायामुपविशामि । किंनु खल्वेतया सहोपविशन्त्या अद्य प्रह्लादितमिव मे हृदयम् । दिष्ट्याविच्छिन्नसुखनिःश्वासा । निवृत्तरोगया भवितव्यम् । अथवैकदेशसंविभागतया शयनीयस्य सूचयति मामालिङ्गेति । यावच्छयिष्ये । ]

राजा —( स्वप्नायते ) हा वासवदत्ते ! ❀

---

जनान्तरशयनपर्याप्तभागस्य रिक्ततया स्थापितत्वादित्यर्थः । सूचयति = बोधयति । माम् = पद्मावतीम् । आलिङ्ग = आश्लिष्य स्वपिहि । यावत् = अतः । शयिष्ये = पद्मावतीमालिङ्ग्य तया सहैव अत्र शयनं करिष्य इत्यर्थः ।

शयनं नाटयति = पद्मावतीबुद्ध्या तस्मिन् शयनीये राज्ञ उदयनस्य समीपे शयनमभिनयति ।

❀ अथ शय्यायां शयानो राजा दृढसंस्कारबलादुद्भूतां प्रियां वासवदत्तां चिन्तयन् स्वप्नेऽपि तन्नामग्रहणपूर्वकं तामाह्वयति—राजा ( स्वप्नायते ) हा वासवदत्ते !–इति । स्वप्नायते—अत्र स्वप्नशब्दः स्वप्नवत्परः, स्वप्नः = स्वप्नवान्, तद्वदाचरति, स्वप्नायते । स्वप्नं पश्यन् प्रलपतीत्यर्थः । इतः परम् "हस्तौ प्रसारयति" इत्येतत्पर्यन्तं राज्ञः सर्वा अप्युक्तयः स्वप्नप्रलापरूपा अवबोद्धव्याः ।

---

मालूम होता है कि नीरोग हो गयी । शय्या के एक किनारे पर सोने से मालूम होता है कि जैसे साथ सोने को कह रही हो । अच्छा, मैं भी सो जाती हूँ ।

( सोती है )

राजा—( स्वप्न में ) हा ! वासवदत्ते !

वासवदत्ता—( सहसोत्थाय ) हं अय्यउत्तो, ण हु पदुमावदी । किं णु खु दिट्ठह्मि । महन्तो खु अय्यजोअन्धराअणस्स पडिण्णाहारो मम दंसणेण णिप्फलो संवुत्तो । [ हम् आर्यपुत्रः, न खलु पद्मावती । किन्नु खलु दृष्टाऽस्मि । महान् खल्वार्ययौगन्धरायणस्य प्रतिज्ञाभारो मम दर्शनेन निष्फलः संवृत्तः । * ]

राजा—हा अवन्तिराजपुत्रि ! †

---

* राज्ञा क्रियमाणं स्वनामग्रहणं श्रुत्वा वासवदत्ता अकस्मात् ससम्भ्रममुत्थाय सविस्मयं स्वगतं विमृशति—हं—इति । हमिति वितर्के शङ्कायां च । आर्यपुत्रः न खलु पद्मावती = पूर्वं वस्त्राच्छन्नमुखतया इयं पद्मावतीति मया अवगतमासीत्, इदानीं "हा वासवदत्ते !" इति सम्बोधनेन स्वरपरिचयेन च जानामि, यदयमार्यपुत्रो नेयं पद्मावतीत्यर्थः । खल्विति वाक्यालङ्कारे । किन्नु खलु दृष्टाऽस्मि = किं प्रबुद्धेन आर्यपुत्रेणाहमवलोकिताऽस्मि ? अन्यैर्वा इहस्था दृष्टाऽस्मि ? महान् = दुर्वहः । प्रतिज्ञाभारः = "वासवदत्तां निगूढं संस्थाप्य मगधराजपुत्र्या पद्मावत्या सह स्वामिनो विवाहं घटयित्वा मगधराजसाहाय्येन स्वामिनो राज्यं पुनः प्रत्याहरिष्यामि" इत्येवं रूपायाः यौगन्धरायणकृतायाः प्रतिज्ञायाः भारः । स च प्रतिज्ञाभारः ममाद्य दर्शनेन निष्फलः सञ्जातः । यद्यपि पद्मावतीपरिणयरूपायाः प्रतिज्ञायाः एकोंऽशः सिद्धः, तथापि राज्यप्रत्याहरणरूपो मुख्योंऽशस्तु तदवस्थ एवेत्यर्थः । मां जीवन्तीं विदित्वा कदाचित् कुपितो मगधराजः राज्यप्रत्याहरणरूपे कर्मणि साहाय्यं न करिष्यति चेत्, आर्ययौगन्धरायणस्य प्रतिज्ञा विफला स्यादित्याशयः ।

† भूयोऽपि राजा स्वप्नदृष्टां वासवदत्तामाह्वयति—हा अवन्तिराजपुत्रि !—इति । अवन्तिराजप्रद्योततनये ! वासवदत्ते ! इत्यर्थः ।

---

वासवदत्ता—( एकाएक उठ कर ) ऐं ! ये तो आर्यपुत्र हैं । पद्मावती नहीं । क्या इन्होंने मुझे देख लेने से आर्य यौगन्धरायण का महान् प्रतिज्ञाभार निष्फल हो गया ।

राजा—हा ! अवन्तिराजपुत्रि !

वासवदत्ता—दिट्ठिआ सिविणाअदि खु अय्यउत्तो । ण एत्थ कोवि जणो । जाव मुहुत्तअं चिट्ठिअ दिट्ठिं हिअअं च तोसेमि । [ दिष्ट्या स्वप्नायते खल्वार्यपुत्रः । नात्र कश्चिज्जनः । यावन्मुहूर्तकं स्थित्वा दृष्टिं हृदयं च तोषयामि । ❀ ]

राजा—हा प्रिये ! हा प्रियशिष्ये ! देहि मे प्रतिवचनम् । †

वासवदत्ता—आलवामि भट्टा ! आलवामि । [ आलपामि भर्तः ! आलपामि ‡ । ]

---

❀ निमीलितचक्षुषैव राज्ञा कृतमात्मनः सम्बोधनं निशम्य तमुत्स्वप्नायमानमवधारयन्ती वासवदत्ता वदति—दिट्ठिआ—इति । दिष्ट्या = सौभाग्येन । स्वप्नायते = स्वप्ने प्रलपति । नात्र कश्चिज्जनः = आर्यपुत्रं मां च विहाय तृतीयः कश्चिज्जनो नास्ति । न चाऽहमार्यपुत्रेण दृष्टा, नान्येन च केनचिदिति वृथैव ममार्ययौगन्धरायणप्रतिज्ञाभारनिष्फलत्वशङ्केति वासवदत्ताया आशयः । अथ विजने तस्मिन् स्थाने राज्ञो मुखदर्शनलोभं निगूहितुमक्षमा वासवदत्ता पुनः स्वगतं वदति—जाव—इति । मुहूर्तकम् = क्षणमात्रम् । स्थित्वा = राज्ञः समीप उपविश्य । दृष्टिम् = राजमुखदर्शनेनात्मनो नयने । हृदयं च = तन्मधुरवाक्यश्रवणेन चेतश्च । तोषयामि = आनन्दयामि । चिरकालात् प्रियवियोगानलदह्यमानचित्ताऽहमस्मिन् सौभाग्योपनतेऽवसरे प्रियस्य मुखं दृष्ट्वा तद्वाङ्माधुरीं चाऽस्वाद्य तृप्ता भवेयमित्यर्थः ।

† राजा पुनः प्रलपन्नाह— हा प्रिये !—इति । प्रियशिष्ये ! = वीणावादनकलाशिक्षायां मदन्तेवासिनि ! प्रतिवचनम् = प्रत्युत्तरम् ।

‡ वासवदत्तोत्तरयति—आलवामि-इति । भर्तः ! = आर्यपुत्र ! आलपामि = प्रतिवचनं ददामि । अत्रार्यपुत्रेति सम्बोधनमकृत्वा भर्तः इति सम्बोधनकरणेन वासवदत्तायास्तत्कालोचितं किमपि चार्यमभिव्यज्यते ।

---

वासवदत्ता—सौभाग्य से राजा स्वप्न देख रहे हैं । भले यहाँ कोई नहीं है । थोड़ी देर ठहर कर अपने नेत्र और हृदय को शीतल तो करूँ ।

राजा—हा प्रिये ! हा प्रियशिष्ये ! बोलो न ।

वासवदत्ता—बोलती हूँ । स्वामी, बोलती हूँ ।

राजा—किं कुपितासि ※।

वासवदत्ता—णहि णहि, दुक्खिदह्मि। [ नहि नहि, दुःखिताऽस्मि †। ]

राजा—यद्यकुपिता, किमर्थं नालङ्कृतासि ‡।

वासवदत्ता—इदो वरं किं। [ इतः परं किम्। △]

राजा—किं विरहिकां स्मरसि □।

※ राजा स्वप्नायमान एव पुनः पृच्छति—किमिति। प्रिये! त्वं क्रुद्धासि किम्? यन्मया सह नालपसीत्यर्थः।

† वासवदत्तोत्तरयति—णहि-इति। न कुपिताऽस्मीत्यर्थः। किन्तु दुःखितास्मि = भवद्वियोगदुःखेन पीडितास्मि।

‡ राजा पुनः पृच्छति—यदीति। यदि कुपिता नासि, तर्हि भूषणानि किमिति न धृतवत्यसीत्यर्थः।

△ वासवदत्तोत्तरयति—इदो-इति। भवद्वियोगेन दुःखितास्मीत्यतःपरमलङ्काराणामधारणस्य किं कारणान्तरं वक्तव्यमित्यर्थः। भवद्वियोगदुःखमेवालङ्काराणामधारणे कारणमिति भावः।

□ राजा पुनरपि स्वप्नावस्थायामेव वदति—किमिति। सपत्नीमिव दुःखदां विरचितां विरहिकां वा, इदानीं स्मरसि?

तत्स्मरणसञ्जातदुःखेनैव न किमपि प्रतिवचनं ददासीति राज्ञ आशयः विरचिका विरहिकेति वा काचिदन्तःपुरस्था राज्ञ उदयनस्य भोगिनी रक्षिता वनिता आसीत् कथासरित्सागरकथामुखलम्बके तस्या मूलकथा द्रष्टव्या।

राजा—क्या रुष्ट हो गयी हो?

वासवदत्ता—नहीं, नहीं, दुःखित हूँ।

राजा—यदि कुपित नहीं हो, तो अलङ्कारों से अपने को सिंगारा क्यों नहीं है?

वासवदत्ता—इससे बढ़ कर और क्या कारण हो सकता है।

राजा—क्या विरहिका को याद करती हो?

वासवदत्ता—( सरोषम् ) आ अवेहि, इहावि विरहिआ ।
[ आ अपेहि, इहापि विरहिका ❀ । ]

राजा—तेन हि विर ( चि ? हि ) कार्थं भवती प्रसादयामि । †
( हस्तौ प्रसारयति )

वासवदत्ता—चिरं ठिदह्मि । को वि मं पेक्खे । ता गमिस्सं ।
अहव, सय्यावलम्बिअं अय्यउत्तस्स हत्थं सअणीए आरोविअ गमिस्सं ।
[ चिरं स्थितास्मि । कोऽपि मां पश्येत् । तद् गमिष्यामि । अथवा,

❀सपत्नीनाम श्रुत्वा कोपकषायिता वासवदत्ता सरोषमाह—आ—इति । आ—इति कोपे स्मरणे च । अपेहि = दूरमपसर । इहापि = पद्मावतीशयनभवनेऽपि । अस्मिन् पद्मावतीशयनभवने वराकी विरचिका विरहिका वा कथमागन्तुं शक्नोतीत्याशयः ।

† वासवदत्तां विरचिकास्मरणेन सकोपां सम्भाव्य तत्कृते तां प्रसादयितुं प्रयतमानो राजा स्वप्न एव वदति—तेन हीति । तेन हि = विरचिकास्मरणेन यदि ते कोपस्तर्हि । विरचिकार्थम् = विरचिकानामग्रहणजन्यं ममापराधं प्रमार्ष्टुम् । भवतीम् = त्वाम्, वासवदत्ताम् । प्रसादयामि = पादपतनादिना अनुनयामि ।

हस्तौ प्रसारयति = स्वप्ने सकोपायाः दूरमपसरन्त्याः वासवदत्तायाः पादोपग्रहणपूर्वकं प्रसादनाय राजा स्वकरौ प्रसारयतीत्यर्थः । केचित्तु "हस्तौ प्रसारयती" त्यत्र "दृढमालिङ्गितुं पाणी प्रसारयति" इत्यर्थं कुर्वते । एतावत्पर्यन्तं वासवदत्तोदयनयोः सानुबन्धमुक्तिप्रत्युक्तिप्रदर्शनेऽपि वस्तुतः स्वप्नगतेन राज्ञा वासवदत्तोक्तं किमपि न श्रुतम् , स तु स्वप्न एव तस्या उक्तिं कल्पयित्वा तदनुगुणं स्वयमुत्तरमाहस्मेति बोध्यम् । इयता प्रबन्धेनोत्स्वप्नायमानस्य राज्ञो भणितयो दर्शिताः । इतः परं प्रबोधं प्राप्तस्य विद्युल्लताया इव झटिति विद्युत्य तिरोभवन्त्या वासवदत्ताया विरहेण दूयमानस्य तस्य विरहदुःखव्यञ्जिका वाचः प्रदर्शयिष्यन्ते ।

वासवदत्ता—( क्रोध से ) आः । यहाँ भी विरहिका !

राजा—अच्छा, विरहिका के लिये मैं तुम्हें मनाता हूँ ।

( दोनों हाथ फैलाता है )

वासवदत्ता—बहुत देर तक ठहर गई । कदाचित् कोई देख ले । इस

शय्यावलम्बितमार्यपुत्रस्य हस्तं शयनीय आरोप्य गमिष्यामि ❀ ] ।

( तथा कृत्वा निष्क्रान्ता )

राजा—( सहसोत्थाय ) वासवदत्ते ! तिष्ठ तिष्ठ । हा धिक् †

❀ अथ स्वप्ने प्रियस्यात्मप्रसादनव्यतनं दृष्ट्वाऽपेतकोपा वासवदत्ता हस्तप्रसारणेन प्रियस्य निद्राभङ्गं विदित्वा स्वरूपप्रकाशनभिया ततः प्रस्थातुकामा वदति — चिरं- इति । चिरं स्थितास्मि = आर्यपुत्रं पश्यन्ती 'तद्वाङ्माधुरीं चास्वादयन्ती अत्राऽहं चिरं स्थितास्मि, अविदित एवातीतो भूयान् समयः, यद्यहमत्राधिकं स्थास्यामि, तर्हि एतावत्कालपर्यन्तं सौभाग्येन केनाप्यदृष्टां मां कोऽप्यागन्तुकः पश्येत्, अतो ममेतो गमनमेवोचितमित्यर्थः । गमनोद्यता वासवदत्ता राज्ञो हस्तं शय्याप्रान्तादधोलम्बमानं दृष्ट्वा स्नेहातिरेकेण तं शय्यायामारोपयितुमिच्छन्ती वदति — अहव-इति । शय्या-प्रलम्बितम् = शय्याप्रदेशादधो लम्बमानम् । हस्तम् = करम् । शयनीये = तल्पे । आरोप्य = संस्थाप्य । अत्र केचित् "हस्तमिति जातावेकवचनम् । कराविति यावत्" । इति ब्रुवते, तत्रेदं प्रष्टव्यम्, यद्युभयोर्हस्तयोर्लम्बमानत्वं कवेरभिप्रेतम-भविष्यत्, तर्हि स वासवदत्तामुखेन हस्तावित्येवावदिष्यत् । वस्तुतस्तु—वासव-दत्तापादोपग्रहणाय शय्यैकदेशे शयानस्य हस्तौ प्रसारयतो राज्ञः स्वाप्निकावसादेन एकः कर एव शय्याधो लम्बते स्म, द्वितीयः करस्तु रिक्ते शय्यैकदेशे निपतितः, लम्बमानमेव करं यथास्थानं स्थापयितुं वासवदत्ताया उद्यम इति बोध्यम् ।

तथा कृत्वा निष्क्रान्ता = प्रियस्य शय्याया अधोलम्बमानं करं पुनः शय्यायां संस्थाप्य वासवदत्ता ततो निर्गतेत्यर्थः ।

† अथ वासवदत्ताकरस्पर्शसौख्याल्लब्धप्रबोधो राजा झटिति पुरतः प्रयान्तीं वनितां वासवदत्तामवधार्य तां जिघृक्षुः सहसा समुत्थाय वदति—वासवदत्ते-इति । तां जिघृक्षुः धावन् वदति—तिष्ठ तिष्ठेति । अत्रान्तरे तद्ग्रहणरभसेन द्वार-पक्षभागाभिहतः सन् विघ्नितगतिः शोचति—हा धिगिति । हन्त ! प्रार्थयमानं मामनादृत्य गतैव प्रियेत्यर्थः ।

लिये अब जाऊँ । अथवा पलङ्ग से नीचे लटके हुए आर्यपुत्र के हाथ को पलङ्ग पर रख कर जाऊँ । ( वैसा ही करके चली गयी )

राजा—( अचानक उठकर ) वासवदत्ता, ठहरो, ठहरो ।

निष्क्रामन् सम्भ्रमेणाहं द्वारपक्षेण ताडितः ।
ततो व्यक्तं न जानामि भूतार्थोऽयं मनोरथः ॥ ७ ॥
( प्रविश्य ❀ )

राजा स्वावस्थां वर्णयति—निष्क्रामन्निति ।

(अन्वयः) अहम्, सम्भ्रमेण, निष्क्रामन्, द्वारपक्षेण ताडितः, ततः, अयम्, भूतार्थः मनोरथः ( इति ) व्यक्तं न जानामि ।

( टीका ) अहम्=उदयनः । सम्भ्रमेण=निर्गच्छन्तीयं वनिता वासवदत्तैव, काचिदन्या वेति निर्धारणत्वरया । निष्क्रामन्=समुद्रगृहकाद्बहिर्निर्गच्छन् । द्वारपक्षेण=द्वारपार्श्वभागेन । ताडितः=प्रहृतोऽस्मि । ततः=तस्मात् कारणात् । यस्माद् द्वारपार्श्वभागाहतेर्मम गतिः कुण्ठिता, तस्मात् कारणादित्यर्थः । अयम्=वासवदत्तायाः समागमः । भूतार्थः=वास्तविकं वृत्तम् । किं वा, मनोरथः=मनःसङ्कल्पजो भ्रम इत्येतद्=व्यक्तम्—स्फुटम् न जानामि=नैव वेद्मि । अत्र वाक्यार्थः कर्म । "अनुष्टुब्" वृत्तम् ।

समुद्रगृहकान्निर्यान्तीं वनितां वासवदत्तामिव सम्भाव्य सहसा तल्पात् समुत्थाय तस्या जिघृक्षया धावन् राजा पक्षद्वाराभिघातात् कुण्ठितगतिरभूत् । तात्कालिकीं स्वावस्थामित्थं वर्णयति—निर्यान्तीयं वनिता वासवदत्ता वा काचिदन्या वेति निर्धारणत्वरया समुद्रगृहकान्निर्गच्छन्नहं पक्षद्वाराभिघातात् कुण्ठितगतिरभवम् । अत एव तां धर्तुं नापारयम्, तेन चायं सत्यमेव वासवदत्तासमागमः संवृत्तः ? उत वासवदत्तानिरन्तरचिन्तनवशाज्जनितेयं भ्रान्तिरिति संशयस्तदवस्थ एवास्तीति भावः ॥७॥

❀ अथ शैत्यनिवारणाय प्रावरणमानेतुं गतस्य विदूषकस्य प्रवेशं सूचयति—प्रविश्येति ।

हाय ! जल्दी में निकलता हुआ मैं दरवाजे से टकरा गया । इस लिये मैं ठीक नहीं समझ सका कि, सचमुच वह वासवदत्ता थी, या नहीं ( केवल स्वप्न मात्र था )

( प्रवेश कर )

विदूषकः—अइ पडिबुद्धो अत्तभवं । [ अयि ! प्रतिबुद्धोऽत्रभवान् । ❀

राजा—वयस्य ! प्रियमावेदये, ध्रियते खलु वासवदत्ता । †

विदूषकः—अविहा वासवदत्ता । कहिं वासवदत्ता । चिरा खु उवरदा वासवदत्ता । [ अविहा वासवदत्ता । कुत्र वासवदत्ता । चिरात् खलूपरता वासवदत्ता ‡ ] ।

राजा—वयस्य ! मा मैवं, §

---

❀ राजानं प्रबुद्धं विलोक्य विदूषकः स्वगतं भाषते—अइ—इति । अयि—इति हर्षे । प्रतिबुद्धः = अपगतनिद्रः ।

† राजा विदूषकमागतं दृष्ट्वा वदति—वयस्येति । प्रियमावेदये = प्रीतिकरं वृत्तान्तं ते कथयामि । ध्रियते = प्राणान् धारयति, जीवतीत्यर्थः । मम प्रिया वासवदत्ताऽद्यापि जीवति, नैव मृतेति प्रियं वृत्तं ते कथयामीत्यर्थः ।

‡ असम्भाव्यमिव राज्ञो वचनमाकर्ण्य विदूषकस्तन्निषेधति—अविहा—इति । अविहेति खेदे । कष्टम् वासवदत्तामुद्दिश्य चिन्तयति भवान् ! कुत्रेदानीं वासवदत्ता ? तस्यास्तूपरताया अतीतो भूयान् समय इत्यर्थः ।

§ विदूषकं निषेधन् राजा वदति = वयस्येति । मामेति निषेधे । द्विरुक्त्या सम्भ्रमो द्योत्यते । वासवदत्तामुपरतां मा ब्रूयाः, सौभाग्येन सा अद्यापि जीवतीत्यर्थः । सा मया कथं दृष्टेति वृत्तं राजा वर्णयति—शय्यायामिति ।

---

विदूषक—अहा ! महाराज तो जाग गये ।

राजा—मित्र ! तुम्हें एक प्रिय बात सुनाता हूँ । वासवदत्ता अभी जीवित है ।

विदूषक—हा ! वासवदत्ता ? वासवदत्ता अब कहाँ ? उस के मरे हुए तो बहुत दिन बीत गये ।

राजा—नहीं ! मित्र ! ऐसी बात न कहो ।

शय्यायामवसुप्तं मां बोधयित्वा सखे ! गता ।
दग्धेति ब्रुवता पूर्वं वञ्चितोऽस्मि रुमण्वता ॥ ८ ॥

( अन्वयः ) हे सखे ! शय्यायाम्, अवसुप्तम्, माम्, बोधयित्वा, ( सा ) गता । दग्धा, इति, ब्रुवता, रुमण्वता पूर्वं वञ्चितः, अस्मि ।

( टीका ) हे सखे ! = हे मित्र ! वसन्तक ! शय्यायाम् = पर्यङ्के । अवसुप्तम् = गाढं निद्रितम् । माम् = उदयनम् । बोधयित्वा = निजकरस्पर्शसौख्यदानेन प्रबोधमापाद्य । सा वासवदत्ता । गता = समुद्रगृहकान्निर्गता । दग्धा = लावाणकग्रामदाहे वासवदत्ता भस्मीभूता । इति = एवम् । ब्रुवता = मृषा भाषमाणेन । रुमण्वता = तन्नामकेनामात्येन । पूर्वं = प्राक् । वञ्चितोऽस्मि = असत्योक्त्या प्रतारितोऽस्मि । अत्र अस्मीति भूतार्थे लट् । प्रतारितोऽभूवमित्यर्थः । अत्र वासवदत्तया पूर्वमहं प्रबोधितः, पश्चात् सा गतेति कथनेन मद्बोधनतद्गमनरूपव्यापारयोः पौर्वापर्यवर्णनाद्राज्ञो जागरावस्थायामेव वासवदत्तायाः गमनं सिद्ध्यति । ततश्च वासवदत्तादर्शनं सत्यं भ्रान्तिर्वेति विकल्पे भ्रान्तिकल्पनिरसनेन वासवदत्तादर्शनं सत्यं भ्रान्तिर्वेति विकल्पे भ्रान्तिकल्पनिरसनेन वासवदत्तादर्शनस्य सत्यत्वं साधितम् । "अनुष्टुब्" वृत्तम् ।

वासवदत्ता चिरादुपरतेति वादिनं विदूषकं निषेधन् राजा वदति— सखे ! वसन्तक ! प्रिया वासवदत्ता मृतेति न त्वया वक्तुमुचितम्, अद्येदानीमिह शय्यायां गाढं प्रसुप्तं मां सा निजकरस्पर्शसौख्यप्रदानद्वारा प्रबोध्य तदनन्तरमस्मात् स्थानान्निर्गता । सा च मया प्रत्यक्षं चक्षुर्भ्यां दृष्टा, कुसुमकोमलस्तत्करस्पर्शश्चानुभूत इति सा अवश्यं जीवतीति निर्धारयामि । पुरा लावाणकग्रामस्य अग्निना दाहे सति तत्रैव सापि भस्मीभूतेति मृषा भाषमाणेन मन्त्रिणा रुमण्वता नूनमहं प्रतारितोऽभवमिति भावः ॥ ८ ॥

उक्तपद्यानन्तरम्—पद्मावत्या मुखं वीक्ष्य विशेषकविभूषितम् ।
जीवत्यावन्तिकेत्येवं पूर्वं विज्ञातमेव मे ॥

हे सखे ! वह तो पलङ्ग पर सोये हुए मुझको जगा कर चली गयी । वासवदत्ता जल गई—ऐसा कहते हुए रुमण्वान् ने पहले मुझे धोखा दिया है ॥८॥

विदूषकः—अविहा असम्भावणीअं एदं ण। आ उदअह्वाणसङ्कित्तणेण तत्तहोदिं चिन्तअन्तेण सा सिविणे दिट्ठा भवे। [अविहा असम्भावनीयमेतद् न। आ उदकस्नानसङ्कीर्तनेन तत्रभवतीं चिन्तयता सा स्वप्न दृष्टा भवेत् ❀ ]।

राजा—एवम्! †

इतीदं पद्यं म० म० त० गणपतिशास्त्रिमहोदयैः "भावप्रकाशस्याष्टमेऽधिकारे स्वप्नवासवदत्तादुद्धृत्य पठितम्" इत्यधिकं संयोजितम्। प्रकरणानुरोधेनास्य पद्यस्य न कापि सविशेषमावश्यकता प्रतीयत इति तदस्माभिरिहोपेक्षितम्।

❀ राज्ञो वचनं श्रुत्वाऽपि तत्र विश्वासमाधातुमपारयन् विदूषकः स-खेदमाह—अविहा-इति। अविहेति खेदे। खेदश्च वासवदत्ता जीवत्येवेति राज्ञो दृढविश्वासमालोक्य। असम्भावनीयमेतन्न? एतत्=वासवदत्ताकृतं भवतः प्रबोधनम्। असम्भावनीयं न=अशक्यसम्भावनं नास्ति किम्? असम्भाव्यमिदं यदि, कथं सा मां प्रबोधयिष्यतीत्यत आह—आ-इति। आ-इति स्मरणे। स्मृतं मया वासवदत्तादर्शनकारणमित्यर्थः। तदेवाह—उदकेति। उदकस्नानसंकीर्तनेन=पूर्वं मया कथयितुमुपक्रान्ते उपाख्याने "उज्जयिन्यां रमणीयानि स्नानागाराणि सन्तीति" प्रस्तावेन। तत्रभवतीम्=वासवदत्ताम्। चिन्तयता=स्मरता। सा=वासवदत्ता। स्वप्ने दृष्टा भवेत्=स्वप्ने एव भवतो वासवदत्तासाक्षात्कारः संवृत्तः, न तु जागरायाम्।

† राजा विदूषकोक्तिमनुमोदते—एवमिति। एवम्=भवान् सत्यं वदति, नूनं मया स्वप्ने एव सा दृष्टेत्यर्थः, यद्वा—काकुरयम्। एवम्? किं मया स्वप्ने सा दृष्टेति ब्रूषे?

अयं स्वप्नो वा जागर्या वेति राजा वितर्कयति—यदीति।

विदूषक—हाँ, यह असम्भव नहीं है। मैंने जो उदकस्नान की बात पहिले कह थी, उसीसे उसका स्मरण करते हुए आपने उसे स्वप्न में देखा होगा।

राजा—हाँ, मैंने स्वप्न देखा है।

यदि तावदयं स्वप्नो धन्यमप्रतिबोधनम् ।
अथायं विभ्रमो वा स्याद् विभ्रमो ह्यस्तु मे चिरम् ॥९॥

( अन्वयः )—यदि तावत्, अयम्, स्वप्नः, ( तर्हि ) अप्रतिबोधनम्, धन्यम्, अथ, अयम्, विभ्रमो वा स्यात् ( तर्हि ) मे विभ्रमो हि चिरम्, अस्तु।

( टीका )—यदि=चेत्, त्वद्वचनानुसारेण स्वप्न एवायमित्यभ्युपगम्यते चेदित्यर्थः। तावदिति वाक्यालङ्कारे। अयम्—एषः, मयाऽनुभूयमानो वासवदत्तादर्शनरूपोऽर्थः। स्वप्नः=मनःसङ्कल्पजन्यं स्वाप्नं विज्ञानम्। तर्हि। अप्रतिबोधनम्=तस्मात् स्वप्नादजागरणम्। धन्यम्=बहुमतम्, प्रियमित्यर्थः। यदि वासवदत्तादर्शनं स्वप्नस्तर्हि स स्वप्न एव मम सर्वदा अनुवर्तताम्, तस्माज्जागरणं नेच्छाम्यहमित्यर्थः। पक्षान्तरमाह—अथेति। अथ=पक्षान्तरे। नायं स्वप्नः, किं तर्हि जागरैवेति पक्षे। अयम्=वासवदत्तादर्शनस्पर्शनरूपोऽर्थः। विभ्रमो वा =मतिभ्रमो वा। स्यात्=भवतु। तर्हि, मे=मम, विभ्रमो हि=बुद्धिभ्रम एव। अत्र हि शब्दो एवकारार्थो, निश्चयार्थो वा अप्यर्थं इति केचित्। अपरे तु—मूले एव "विभ्रमोऽप्यस्तु" इति पाठान्तरं कल्पयन्ति। वयं तु हि शब्दस्य निश्चयार्थतां प्रकल्प्य "विभ्रमो हि" इतीयमेव पाठं बहुमन्यामहे। अकारणमेव महाकविप्रयोगेषु पाठभेदं—कल्पयितुं न क्षमामहे च। चिरम्=दीर्घकालम्। अस्तु भवतु, वासवदत्तायाः समागमः सातत्येनानुवर्तते चेत्, स्वप्नविभ्रमावपि मम बाढमभीष्टाविति भावः। "अनुष्टुप्" वृत्तम्।

वासवदत्ता हि भवता स्वप्न एव दृष्टा, तस्याः स्पर्शोऽपि स्वप्न एवाऽनुभूतः इति वादिनं विदूषकं राजा वदति—सखे! वसन्तक! यदि प्रियाया वासवदत्ताया मयाऽनुभूते दर्शनस्पर्शने स्वप्नगते एवेति ब्रूषे, तर्हि तदप्यहमभ्युपगच्छामि यदीदं मयाऽनुभूयमानं प्रियादर्शनं स्वप्नः, तर्हि सुखमयात् तस्मात् स्वप्नात् सर्वदाऽजागरणमेव मे बहुमतम्। स एव स्वप्नः सर्वदा मेऽनुवर्तताम्। अथवा यदीमं बुद्धिभ्रमं ब्रूषे तर्हि तादृशो मतिभ्रमो निश्चयेन मे चिरमस्तु। प्रियाया वासवदत्तायाः समागम सातत्येन सम्पादयन् स्वप्नो वा विभ्रमो वा यः कोऽपि मे बाढमभीष्ट इति भावः॥

यदि यह स्वप्न है तो न जागना ही अच्छा था और यदि यह भ्रम है तो भ्रम बना रहना ही मैं अच्छा समझता हूँ॥ ९॥

विदूषकः—मा दाणिं भवं अत्ताणं ओहसिअं कादुं। किन्तु इमस्सिं राअउले अवन्तिसुन्दरी णाम जक्खिणी पडिवसदि। सा तुए दिट्ठा भवे।
[ मेदानीं भवानात्मानमवहसितं कर्तुम्। किन्त्वस्मिन् राजकुलेऽवन्ति-सुन्दरी नाम यक्षिणी प्रतिवसति। सा त्वया दृष्टा भवेत्। ※ ]

राजा—न न, †।

स्वप्नस्यान्ते विबुद्धेन नेत्रविप्रोषिताञ्जनम्।

---

※ सदृशवस्तुदर्शनजन्या राज्ञो वासवदत्तादर्शनभ्रान्तिरिति मन्वानो विदूषको राजानमाह—मा—इति। मा इदानीं भवानात्मानमवहसितं कर्तुम् = प्रयततामिति शेषः। "मया वासवदत्ता दृष्टा, तस्याः स्पर्शश्चानुभूतः" इत्युक्त्या भवानात्मानं परिहासपात्रं कर्तुं न प्रयततामित्यर्थः। लावाणकग्रामे वह्निदाहेन दग्धा वासवदत्ता भवता दृष्टेति श्रुत्वा सर्वेऽपि भवन्तं हसिष्यन्तीति भावः। तर्हि वासवदत्तादर्शनं कथं सम्पन्नमित्यत आह—किन्त्विति। अस्मिन् राजकुले = मगधराजस्यान्तःपुरे। अवन्तिसुन्दरीनाम = अवन्तिसुन्दरीति नाम्ना प्रसिद्धा। यक्षिणी = यक्षपत्नी। यक्षो देवयोनिविशेषः। यक्षिण्यो हि निशासु यत्र तत्र सञ्चरन्तीति तासु काचिद्यदृच्छयेहाप्याऽऽगता भवेत्, सैव भवता दृष्टा स्यादिति विदूषकोक्तेराशयः।

† विदूषकोक्तिं राजा निषेधति—न नेति। नन = नञ्द्वयेन प्रकृतार्थदार्ढ्यं द्योत्यते। अवन्तिसुन्दरी यक्षिणी नैव दृष्टा, किन्तु वासवदत्तैव दृष्टेत्यर्थः।

तदेवाह—स्वप्नस्येति।

( अन्वयः )—स्वप्नस्य, अन्ते, विबुद्धेन ( मया ) चारित्रम्, रक्षन्त्याः, अपि, नेत्रविप्रोषिताञ्जनम्, दीर्घालकम्, मुखम्, दृष्टम्।

( टीका )—स्वप्नस्य = स्वप्नावस्थायाः। अन्ते = अवसाने। विबुद्धेन = प्रबुद्धेन सता मया। चारित्रम् = प्रोषितभर्तृककुलस्त्रीजनोचितं सद्वृत्तम्, पर-

---

विदूषक—महाराज! आप अपनी हँसी न करा लें, कदाचित् यहाँ अवन्ति-सुन्दरी नाम की एक यक्षिणी रहती है, उसे आपने देखा होगा।

राजा—नहीं, नहीं।

स्वप्न के अन्त में जागने पर मैंने अपने आचार का पालन करने वाली

चारित्रमपि रक्षन्त्या दृष्टं दीर्घालकं मुखम् ॥१०॥

पुरुषदर्शनपरिहारादिरूपम् । रक्षन्त्या अपि = सम्यक्परिपालयन्त्या अपि । अपि शब्देन जीवितमाक्षिप्यते तेन लावाणकग्रामेऽग्निदाहाद्यरिष्टेभ्यः स्वजीवितमपि तया संरक्षितमिति फलति । अत्र वासवदत्ताया इति विशेष्यं प्रकरणानुरोधादाक्षेप्यम् । नेत्रविप्रोषिताञ्जनम् = नेत्राभ्यां नयनाभ्याम् विप्रोषितं चिरनिर्वासितम्, अञ्जनं कज्जलं यस्मिन्, तत् । कज्जलरहितनयनमित्यर्थः । दीर्घालकम् = दीर्घा असंयतत्वेन लम्बमाना अलकाः चूर्णकुन्तलाः यस्मिन् तत् । जटीभूतरूक्षकवरीकमित्यर्थः ।"अलकाश्चूर्णकुन्तलाः" इत्यमरः । मुखम् = आननम् । दृष्टम् = प्रत्यक्षमवलोकितम् । लम्बमानालकं कज्जलरहितनयनं—तन्मुखं मया दृष्टमित्यर्थः । तथाचोक्तम्—

क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम् ।
हास्यं परगृहे यानं त्यजेत् प्रोषितभर्तृका ॥ इति ॥

इत्थं सविशेषं तन्मुखस्य प्रत्यक्षं दर्शनान्न काप्यन्या शङ्का कर्तुमुचितेति तात्पर्यम् । "अनुष्टुब्" वृत्तम् ।

विदूषकोक्तामवन्तिसुन्दरीयक्षिणीदर्शनशङ्कां निषेधन् राजा वदति—सखे ! वसन्तक ! मया अवन्तिसुन्दरीनाम यक्षिणी दृष्टा स्यादिति यच्छङ्कसे, तत्सर्वथाऽनुचितमेव । मया हि स्वापावसाने प्रबुद्धेन प्रोषितभर्तृकुलस्त्रीजनोचितं स्वकीयं शीलं सम्यक् परिपालयन्त्याः लज्जाशीलायाः प्रियाया वासवदत्ताया एव कज्जलसम्पर्करहितं नयनं लम्बमानरूक्षालकं वदनं प्रत्यक्षं दृष्टम् । न चात्र काचिदपि भ्रान्तिः सम्भवति । मया दृष्टा वनिता किल यक्षिणी, इत्यपि वक्तुं न शक्यते । यतः यक्षिण्याः नयनयोः कज्जलराहित्यमलकानामधोलम्बमानत्वं रूक्षत्वं च न सम्भवतीति मया वासवदत्तैव दृष्टा, न यक्षिणी निश्चितम् । तथा च नायं स्वप्नो न च यक्षिणीदर्शनमिति भावः ॥ १० ॥

वसी का बिना काजल की आँख वाला और लम्बे बढ़े हुए चूर्ण-कुन्तलों से ढँका हुआ मुख देखा है ( जो यक्षिणी का हो ही नहीं सकता ) ॥ १० ॥

अपि च वयस्य ! पश्य पश्य,

यो ऽयं सन्त्रस्तया देव्या तया बाहुर्निपीडितः ।
स्वप्नेऽप्युत्पन्नसंस्पर्शो रोमहर्षं न मुञ्चति ॥११॥

विभ्रमोऽमिति वादिनं विदूषकं लक्षणान्तरं दर्शयन् राजा वदति—अपि च वयस्य ! पश्य पश्य—योऽयमिति ।

( अन्वयः )—सन्त्रस्तया तया देव्या, यः, अयम्, बाहुः, निपीडितः, स्वप्नेऽपि उत्पन्नसंस्पर्शः ( सः ) रोमहर्षम्, न मुञ्चति ।

( टीका )—सन्त्रस्तया = मज्जागरणसम्भावनया भीतभीतया, तया देव्या = वासवदत्तया । योऽयम् = पुरोदृश्यमानः । बाहुः = मम भुजः । निपीडितः = शय्याप्रलम्बनसम्भावितपीडावारणाय शयनीयारोपणकाले स्वकरे मन्दं गृहीतः । दृढतया निपीडने तु, प्रबुद्धो भवेयमिति शङ्कितयेत्यर्थः । स्वप्नेऽपि = स्वप्नावस्थायामपि । उत्पन्नसंस्पर्शः = उत्पन्नः संजातः, संस्पर्शः सम्पर्को यत्र, तथा भूतोऽपि । सः । रोमहर्षम् = आनन्दोद्गतरोमाञ्चम् । न मुञ्चति = इदानीं जागरावस्थायामपि न जहाति । स्वप्नावस्थायामनुभूतेनापि तत्करस्पर्शेनेदानीमप्यहमानन्दोद्गतरोमाञ्चित एव वर्ते इत्याशयः ।

आत्मना दृष्टा वनिता वासवदत्तैवाऽऽसीदिति लक्षणान्तरेणापि प्रमाणीकर्तुमिच्छन् राजा वदति—सखे ! वसन्तक ! मया वासवदत्तैव दृष्टेत्यत्र प्रमाणान्तरमपि ते पुर उपस्थापयामि पश्य, यदा शयानस्य ममैको बाहुः शय्यातो लम्बमान आसीत्, तदा तया देव्या स मे बाहुर्मन्दमुत्क्षिप्य शय्यायामारोपितः । दृढनिपीडनेन कदाचिदहं प्रबुद्धो भवेयमिति शङ्कया तया अतीव मृदुतया मम बाहुः स्वकरे गृहीतः । तथाविधपूर्वानुभूतलोकोत्तरस्पर्शसुखमहिम्ना सद्यः प्रबुद्धोऽहमभवम् । स्वप्नावस्थायां तत्करसंस्पर्शसुखात् तदानीं समुत्पन्नो रोमहर्षो जागरावस्थायामपि विद्यते । यदि मया दृष्टा वनिता यन्ती, तर्हि मम रोमहर्षो न घटते, अतः सा वासवदत्तैवेति भावः ॥ ११ ॥

मित्र ! और भी देखो न—

डरते हुए भी उसने जो मेरा हाथ पकड़ा था, स्वप्न में भी उसके स्पर्श सुख से अब तक इसमें रोमाञ्च बना हुआ है ॥ ११ ॥

**विदूषकः**—मा दाणि भवं अणत्थं चिन्तिअ। एदु एदु भवं। चदुस्सालं पविसामो। [ मेदानीं भवाननर्थं चिन्तयित्वा। एत्वेतु भवान्। चतुःशालं प्रविशावः ❀ ]।

( प्रविश्य † )

**काञ्चुकीय**—जयत्वार्यपुत्रः। अस्माकं महाराजो दर्शको भवन्त-माह—एष खलु भवतोऽमात्यो रुमण्वान् महता बलसमुदयेनोपयातः

❀ राजानं वासवदत्तैकाग्रमानसं विभाव्य तस्माद्दुरभिनिवेशान्निवर्तयितुकामो विदूषको विषयान्तरमुपक्षिपति—मा—इति। अनर्थम् = असम्भाव्यमर्थम्। आत्मा-नमायासयत्विति शेषः। असम्भाव्यमर्थं चिन्तयित्वेदानीं भवान् आत्मानं न आया-सयत्वित्यर्थः। असम्भाव्यार्थचिन्तनमायासमात्रफलकमिति भावः। केचित्तु अस्मिन् विदूषकवाक्ये 'चिन्तिअ' इति प्राकृतशब्दस्य 'चिन्तय' इति संस्कृतच्छायां लिखन्ति। तत्र तैरिदमवधातव्यम्—यच्चिन्तयेति कवेरभिमतमभविष्यद्यदि, तर्हि स विदूषकवाक्ये 'चिन्तेहि' इति प्रयोगमकरिष्यत्। 'चिन्तिअ' इत्यस्य 'चिन्तय' इति संस्कृतच्छाया भवितुं नार्हति। किञ्च—विदूषकवाक्ये भवानिति कर्तृपदस्य 'चिन्तयतु' इति क्रियापदं समुचितम्, नतु 'चिन्तय' इति। अत्र सारासारविचारं निष्पन्नाः सुधियः स्वयमेव कुर्वन्तु। एत्वेत्विति वीप्सया चतुश्शालप्रवेशत्वरा सूच्यते। चतुश्शालम् = संजवनम्, भवनविशेषम्।

† काञ्चुकीयस्य प्रवेशमाह—प्रविश्येति। राज्ञा दर्शकेन वत्सराजसमीपं प्रेषितः काञ्चुकीयो वदति—जयत्विति। वत्सराजो भवान् विजयतामित्यर्थः। अयं समुदाचारः। प्रस्तुतमर्थमाह—अस्माकमिति। महाराजदर्शकस्य संदेशं निर्दिशति—एष—इति। भवतः=तव वत्सराजस्य। बलसमुदयेन = सैन्यसमुदायेन।

विदूषक—बेकार बातों की चिन्ता को छोड़िये। आइये, चौक में चलें।

( कञ्चुकी का प्रवेश )

कञ्चुकी—जय हो महाराज की। हमारे महाराज दर्शक ने आपको कहला भेजा है कि, आप के सचिव रुमण्वान् बड़ी भारी सेना लेकर आरुणि का वध करने के लिये चल पड़े हैं। और मेरे भी—हाथी, घोड़े, रथ और पैदल—चारों

खल्वारुणिमभिघातयितुम् । तथा हस्त्यश्वरथपदातीनि मामकानि विजयाङ्गानि सन्नद्धानि । तदुत्तिष्ठतु भवान् । अपि च,

भिन्नास्ते रिपवो भवद्गुणरताः पौराः समाश्वासिताः
पार्ष्णी चापि भवत्प्रयाणसमये तस्या विधानं कृतम् ।

सहेति शेषः । उपयातः = समुपस्थितः । आरुणिम् = वत्सराज्यापहर्तारमुदयनस्य शत्रुम् । अभिघातयितुम् = भवता अभिहतं कर्तुम् । भवद्द्वारा तं समूलमुन्मूलयितुमित्यर्थः । तथा = तमेवार्थं साधयितुम् । हस्त्यश्वरथपदातीनि = हस्तिनश्च, अश्वाश्च, रथाश्च, इति हस्त्यश्वरथम्, पदातयश्च येषु तानि—गजहयरथारोहिपादचारिप्रभृतीनि । मामकानि = मत्सम्बन्धीनि, दर्शकराजस्वामिकानीत्यर्थः । विजयाङ्गानि = विजयसाधनीभूतानि सैन्यानि सन्नद्धानि = गन्तुमुद्यतानि, सज्जानि । तत् = तस्मात् कारणात्, भवान् = वत्सराजः । उत्तिष्ठतु = विजययात्रायै सज्जो भवतु । अपि च = अन्यच्च ।

अन्यच्च यत्कृतं तदाह = भिन्ना इति ।

( अन्वयः ) ते रिपवः भिन्नाः, भवद्गुणरताः पौराः समाश्वासिताः । अपि भवत्प्रयाणसमये ( या ) पार्ष्णी, तस्याः विधानं कृतम् । अरिप्रमाथजननम्, यत् यत् साध्यम्, तत्, तत्, मया, अनुष्ठितम् । बलैश्च त्रिपथगा नदी अपि तीर्णा । ( अतः ) वत्साः तव हस्ते ।

( टीका ) ते = तव । रिपवः = शत्रुपक्षाश्रिताः, अत एव शत्रवः । भिन्नाः = भेदप्रयोगेण शत्रुपक्षात् पृथक्कृताः, स्वपक्षमानीता वा । मिथः संहतास्ते शत्रवो भेदनीतिप्रयोगेण दुर्बलतां गमिता इत्यर्थः । भवद्गुणरता = भवतः तव वत्सराजस्य, गुणेषु प्रजासुपरिपालनदयादाक्षिण्यादिगुणेषु, रताः अनुरक्ताः, भवद्गुणगौरवेण भवन्तमेव स्वामिनं कामयमाना इत्यर्थः । पौराः = पुरवासिनो जनाः, भवत्प्रजा इत्यर्थः । समाश्वासिताः = 'वत्सराजो महता बलसमूहेन स्वशत्रून् शीघ्रं पराजित्या-

तरह की सेनायें सज धज कर तैयार हो गयी हैं । इस लिये आप उठिये, और तैयार हो जाइये । और भी—

आपके शत्रुओं में भेदभाव हो गया है । आप के गुणों के वशीभूत नगरवासियों को आश्वासन दिया गया है । यात्रा के समय आपके पीछे-पीछे जाने

यद्यत् साध्यमरिप्रमाथजननं तत्तन्मयानुष्ठितं
तीर्णा चापि बलैर्नदी त्रिपथगा वत्साश्च हस्ते तव ॥१२॥

चिरादेव लब्धराज्यो भवतः पालयिष्यति, इत्यादि कथयित्वा आश्वासं प्रापिताः। अपि च = अन्यच्च। भवत्प्रयाणसमये = भवतः तव, प्रयाणसमये विजययात्रावसरे या पार्ष्णी = यत्सैन्यपृष्ठम्। अस्ति। तस्याः = पार्ष्णीभागस्थितां शत्रूणामित्यर्थः। विधानम् = निवारणोपायः। सैन्यपृष्ठभागसंरक्षणोपाय इत्यर्थः। कृतम् = विहितम्। भवत्सैन्यपृष्ठभागस्थिताः शत्रवो यथा नोपद्रवं कुर्युः, यथा च सैन्यपृष्ठं सुसंरक्षितं भवेत्, तथाविध उपायो विहित इत्यर्थः। "पार्ष्णिः स्यादुन्मदास्त्रियाम्। स्त्रियां द्वयोः सैन्यपृष्ठे" इति कोशात् स्त्रीलिङ्गात् पार्ष्णिशब्दात् "कृदिकारादक्तिनः" इति ङीषि पार्ष्णीशब्दः सिध्यति। अरिप्रमाथजननम् = अरीणां शत्रूणाम्, प्रमाथो विध्वंसः, तस्य जननम्, शत्रुविध्वंससाधनमित्यर्थः। यत्, यत्, साध्यम् = यद्यत्कार्यं कर्तुं शक्यम्, तत्तत् = कार्यम्। मया = मगधराजेन। अनुष्ठितम् = साधितम्। बलैश्च = अस्माकं सैन्यैश्च। त्रिपथगा नदी अपि = आकाशभूमिपातालमार्गगामिनी गङ्गाख्या सरिदपि। तीर्णा = लङ्घिता। अस्माकं सैन्यं गङ्गानदीं तीर्त्वा शत्रुराज्यान्तरे प्रविष्टमित्यर्थः, अतः, वत्साः = तन्नामानो जनपदाः, वत्सदेशा इत्यर्थः। तव = ते, उदयनस्य। हस्ते = करे। गता इत्यवेहि — इति शेषः। सर्वाण्यपि जयसाधनानि मया सम्यक् सम्पादितानीति वत्सदेश इदानीं तव हस्तगत इव बोद्धव्य इत्यर्थः। इत्यस्माकं महाराजो दर्शको भवन्तमाहेति पूर्वेण सम्बन्धः। "शार्दूलविक्रीडितं" वृत्तम्।

महाराजदर्शकेन वत्सराजसमीपं प्रेषितः काञ्चुकीयो वत्सराजं वदति—राजन्! अयं भवदमात्यो रुमण्वान् भवतः साहाय्याय महता सैन्यसमुदायेन सह समुपस्थितोऽस्ति। मदीयानि च चतुरङ्गबलानि सर्वतः सन्नद्धानि, तद्भवानपि विजय-

वाली सेना का भी ठीक प्रबन्ध कर दिया गया है इस प्रकार शत्रु-संहार के लिये जो जो साधन हो सकते हैं; उनका अच्छी तरह आयोजन कर दिया गया है। यहाँ तक कि, मेरी सेना गङ्गा पार कर चुकी है। अब आप वत्सदेश को भी अपने हाथ में ही आया हुआ समझिये ॥ १२ ॥

राजा—( उत्थाय ) बाढम् *। अयमिदानीम्,
उपेत्य नागेन्द्रतुरङ्गतीर्णे, तमारुणिं दारुणकर्मदक्षम्।

यात्रायै सज्जो भवतु। किञ्च ये भवतः शत्रुपक्षे स्थिता आसन्, ते मया भेदनीति-प्रयोगेण ततः पृथक्कृताः। केचित् स्वपक्षमानीताश्च। इत्थं सम्प्रति दुर्बलो भवतः शत्रुपक्षः। भवतो राज्यसुपरिपालनदयादाक्षिण्यादिगुणगरिम्णा भवत्यनुरक्ताः भवतः प्रजाः—भवानविलम्बेन शत्रून् पराजित्य स्वप्रजाः पालयिष्यति—इति कथनेन समाश्वासिताः। अपि च भवतो विजययात्रावसरे ये भवत्सैन्यपृष्ठभागस्थाः शत्रव आसन्, तेषां निरोधोपायः सैन्यपृष्ठरक्षणोपायश्च सम्यग्विहितः शत्रुनिध्वंसनोपयोगि यद्यत्कार्यं कर्तुं शक्यमासीत् तत्तत्सर्वमपि मया सम्पादितम्। अस्माकं सैन्यैश्च गङ्गा-नदीं तीर्त्वा शत्रुराज्ये प्रवेशः कृतः। अतः वत्सदेशा इदानीं भवतो हस्तगता इवेति भवता वेदितव्यम्। इत्यस्माकं—महाराजो दर्शको भवन्तमाहेति भावः ॥१२॥

* उत्साहवर्द्धनं काञ्चुकीयस्य वचनं निशम्य समुद्भूतसमुत्साहो राजोत्थाय वदति—बाढमिति। बाढम् = वरम् महाराजदर्शकाज्ञामनुसृत्याऽस्मिन् भाविनि महति संग्रामेऽहमपि योद्धुं सन्नद्धोऽस्मीत्यर्थः। अयमिदानीमिति वक्ष्यमाणश्लोकान्वयि।

भाविनि संग्रामे आत्मना चिकीर्षितं वदति—उपेत्येति।

( अन्वयः ) इदानीम्, अयमहम्, उपेत्य नागेन्द्रतुरङ्गतीर्णे विकीर्णबाणोग्रतरङ्गभङ्गे महार्णवाभे युधि दारुणकर्मदक्षम्, तम्, आरुणिम्, नाशयामि।

( टीका ) इदानीम् = अस्मिन् समये, सर्वेषु युद्धसाधनेषु सन्नद्धेष्वित्यर्थः। अयमहम् = एषोऽहम्, उदयनः, उपेत्य = आरुणिनामकं शत्रुमभिगम्य नागेन्द्र-तुरङ्गतीर्णे = नागेन्द्राः गजश्रेष्ठाः तुरङ्गा अश्वाश्च, तैः तीर्णे कृततरणे "समित्याजि-समिद्युधः" इति कोशप्रामाण्याद्युधूशब्दस्य स्त्रीलिंगत्वेऽपि अत्र महाकविना पुंसि प्रयुक्तत्वात् पुंल्लिङ्गोऽपि युध्शब्दोऽस्तीति प्रतिभाति। गजाश्वसंकुल इत्यर्थः। विकीर्ण-बाणोग्रतरङ्गभङ्गे = विकीर्णाः प्रक्षिप्ताः, भटैः परस्परमुद्दिश्य प्रेरिता इत्यर्थः, ये बाणाः शराः, त एव उग्राः भीषणाः, तरङ्गाणाम् वीचीनाम् भङ्गा इव कहर्य इव,

राजा—( उठ कर ) बहुत अच्छा ( मैं तैयार ही हो गया )।
अब मैं वहाँ जाकर ( चढ़ाई कर ) हाथी और घोड़ों से भरे हुए तथा

विकीर्णबाणोग्रतरङ्गभङ्गे, महार्णवाभे युधि नाशयामि ॥१३॥

( निष्क्रान्ताः सर्वे )

इति पञ्चमोऽङ्कः ।

---

स्मिन् तथाभूते, भटप्रक्षिप्तबाणरूपभीषणतरङ्गसमाकुल इत्यर्थः । महार्णवाभे= महांश्चासावर्णवः समुद्रस्तस्य आभेव आभा शोभा यस्य तस्मिन् । महासमुद्रोपम इत्यर्थः । युधि = संग्रामे । दारुणकर्मदक्षम् = दारुणकर्मसु, क्रूरकर्मसु दक्षम् चतुरम्, क्रूरकर्मपरायणमित्यर्थः, तम् = मम राज्यापहारित्वेन शल्यरूपतया मया सर्वदा निध्यायमानं प्रसिद्धम् । आरुणिम् = तदाख्यं रिपुम्, नाशयामि = घातयामि । अत्रोपमालंकारः । "उपेन्द्रवज्रा" वृत्तम् ।

काञ्चुकीयस्य मुखात् सैन्यस्य युद्धसन्नाहं महाराजदर्शककृतां सुव्यवस्थां च निशम्य समुद्भूतयुद्धरसावेशः समुत्साहवान् राजा वदति—बाढम्, अयमहं सन्नद्धोऽस्मि योद्धुम्, अहं किल भटप्रक्षिप्तबाणरूपभयानककल्लोलसमाकुले गजेन्द्रहयादिन्यासे महासमुद्रसदृशे महायुद्धे क्रूरकर्मपरायणं मम राज्यापहर्तारं मदान्धं तमारुणिं नाम रिपुमभिगम्य क्षणेनैव समूलमुन्मूलयामि । का शक्तिस्तस्य मम पुरः स्थातुमिति भावः ॥१३॥

सर्वेषां निष्क्रमणं सूचयति—निष्क्रान्ताः सर्वे इति ।

स्वप्नवासवदत्तस्य व्याख्याने "श्रीः" पदाङ्किते ।
नारायणीये तस्याऽयं पञ्चमोऽङ्कः समाप्तिमैत् ॥

इतिश्रीमन्नारायणशास्त्रिप्रणीतायां 'श्री'रित्याख्यायां
स्वप्नवासवदत्तटीकायां पञ्चमोऽङ्कः समाप्तः ।

---

चलाए हुए बाण रूपी लहरों से उमड़े हुए महासमुद्र रूपी युद्ध में दारुण कर्म करने में ( मेरे राज्य हरण करने में ) प्रवीण उस आरुणि का विनाश (अवश्य) करूँगा ।

( सब चले गये )

पाँचवाँ अङ्क समाप्त ।

---

# अथ षष्ठोऽङ्कः* ।

—o❀o—

( ततः प्रविशति काञ्चुकीयः† )

काञ्चुकीय—क इह भोः ! काञ्चनतोरणद्वारमशून्यं कुरुते ‡ ।

---

अथ षष्ठोऽङ्कः ।

*अस्मिन्नङ्के संग्रामविजयलाभानन्तरं राज्ञ उदयनस्य घोषवतीनामिकाया वासवदत्तावीणायाः प्राप्तिः, तद्दर्शनेन समुद्बुद्धशोकस्य राज्ञो विलपनम्, महासेन-भूपते महाराज्ञश्च सकाशाद्राज्ञ उदयनस्य विजयाभिनन्दनाय दूतयोरागमनम्, पद्मावत्याः समक्षं महाराज्ञीदूत्या वत्सराजाय वासवदत्ताचित्रपटसमर्पणम्, चित्र-दर्शनेन तदाकारसंवादमालोक्य पद्मावत्याश्चेतसि वासवदत्तायामाशङ्का, अत्रान्तरे यौगन्धरायणस्य न्यासग्रहणाय पद्मावत्याः सविधे आगमनम्, आवन्तिकां पुरः प्रेक्ष्य राज्ञोऽपि तस्यामाशङ्का, यौगन्धरायणस्य कपटवेषापनोदनपूर्वकं स्वस्वरूप-परिचयप्रदानम्, रहस्योद्भेदनम्, स्वापराधक्षमाप्रार्थनम्, अवन्तिनृपतेः महाराज-महासेनस्य समीपे प्रस्थातुं सर्वेषां प्रस्तावश्चेत्यादि विषयाः सप्रपञ्चं सम्यक् प्रतिपाद-यिष्यन्ते ।

† राज्ञ उदयनस्य पुनः स्वराज्यप्राप्तिम्, घोषवतीवीणाप्राप्तिजन्यमौत्कण्ठ्यम्, महाराजमहासेनसन्देशवचनं च मध्यमनीचपात्रद्वारा प्रदर्शयितुं मिश्रविष्कम्भकम-वतारयति—ततः प्रविशतीति ।

‡ महासेनभूपतेः सन्देशमादाय समागतः काञ्चुकीयो वत्सराजभवनमहाद्वार-मुपेत्य पृच्छति—क—इति । काञ्चनतोरणद्वारम् = काञ्चनमयः सुवर्णरचितः, तोरणो बहिर्भागो यस्य तथाविधस्य महाभवनस्य, द्वारं बहिर्द्वारम् । अशून्यं कुरुते = सनाथं करोति । "रत्नतोरणद्वारम्" इति पाठान्तरम् । तत्र रत्नघटितमित्यर्थः करणीयः । अस्मिन् राजभवनस्य बहिर्द्वारे कः प्रहरी वर्तते, यो मम सन्देशं महाराजं श्रावयेदित्यर्थः ।

---

## छठा अंक

( कञ्चुकी का प्रवेश )

कञ्चुकी—अजी ! यहाँ स्वर्णतोरणद्वार पर कौन है ?

( प्रविश्य )

प्रतीहारी—अय्य ! अहं विजआ । किं करीअदु । [ आर्य ! अहं विजया । किं क्रियताम् ॐ ] ।

काञ्चुकीयः—भवति ! निवेद्यतां निवेद्यतां वत्सराज्यलाभप्रवृद्धोदयायोदयनाय—एष खलु महासेनस्य सकाशाद् रैभ्यसगोत्रः काञ्चुकीयः प्राप्तः, तत्रभवत्या चाङ्गारवत्या प्रेषितार्या वसुन्धरा नाम वासवदत्ताधात्री च प्रतीहारमुपस्थिताविति † ।

ॐ काञ्चुकीयोक्तिं श्रुत्वा प्रतीहारी प्रविश्य वदति—अय्य–इति । अहं विजया = विजया नाम्नी अहं द्वाररक्षिका समुपस्थिताऽस्मि । किं क्रियताम् = भवतः का आज्ञा मया परिपाल्यताम् ।

† काञ्चुकीयो वदति—भवति–इति । भवति ! = मान्ये ! निवेद्यताम् = सूच्यताम् । वीप्सया निवेदनत्वरा द्योत्यते । वत्सराज्यलाभप्रवृद्धोदयाय = वत्सानां तदाख्यानां देशानाम्, यद्राज्यं वत्सराज्यम्, तस्य लाभेन प्राप्त्या, प्रवृद्धः प्रकर्षेण वृद्धिंगतः, उदय उन्नतिर्यस्य, तस्मै । शत्रुणापहृतं स्वराज्यं पुनर्लब्ध्वा हर्षप्रकर्षं बिभ्रते इत्यर्थः । वत्सराज्यलाभप्रवृद्धोदयायेति उदयनविशेषणेन राज्ञा युद्धे स्वभुजबलेन दर्शकराजसाहाय्येन च शत्रुं जित्वा पुनः स्वराज्यमासादितमित्यादिः युद्धवृत्तान्तः सूचितः । युद्धदर्शनस्य नाटकेषु निषिद्धत्वात् । यन्निवेदनीयं तदाह—एष–इति । एषः = अहम् । खल्विति वाक्यालङ्कारे । महासेनस्य सकाशात् = अवन्तिदेशाधिपस्य वासवदत्तायाः पितुर्महासेनस्य सकाशात्, तदाज्ञयेत्यर्थः । रैभ्यसगोत्रः = रैभ्यगोत्रोत्पन्नः ।

( प्रवेश कर )

प्रतीहारी—आर्य ! मैं हूँ, विजया । कहिये क्या आज्ञा है ।

कञ्चुकी—कल्याणि !, वत्सराज्य के मिलने से विशेष अभ्युदय को प्राप्त किये हुए महाराज उदयन से जाकर कहिये कि, महाराज महासेन के यहाँ से रैभ्यसगोत्र कञ्चुकी और महारानी अङ्गारवती की भेजी हुई वसुन्धरा नाम की वासवदत्ता की धाई, दोनों द्वार पर आये हुए हैं ।

प्रतीहारी—अय्य ! अदेसकालो पडिहारस्स। [ आर्य ! अदेशकालः प्रतीहारस्य ※ ] ।

काञ्चुकीयः—कथमदेशकालो नाम † ।

---

"सकारेण तु वक्तव्यं गोत्रं सर्वत्र धीमता"

इति धर्मशास्त्रानुसारेण सगोत्र इत्युक्तम् । प्रतिज्ञायौगन्धरायणे तन्नामोल्लेखाद्बादरायणनामक इत्यर्थोऽपीति केचित् । गोत्रशब्दस्य नामवाचकत्वं स्वीकृत्य रैभ्यनामेति च परे । प्राप्तः = द्वारदेशमुपस्थितः अङ्गारवत्या = महासेनपत्न्या, वासवदत्ताया मात्रा । प्रेषिता = प्रेरिता । वसुन्धरा नाम = वसुन्धरेत्याख्या । वासवदत्ताधात्री = वासवदत्ताया उपमाता । प्रतीहारम् = द्वारदेशम् । "स्त्री द्वार्द्वारं प्रतीहारः" इत्यमरः । इति = एवम् । निवेद्यतामिति पूर्वेण सम्बन्धः । महासेननृपतेर्निदेशेन रैभ्यसगोत्रः काञ्चुकीयोऽहम्, राजमहिष्या अङ्गारवत्या प्रहिता वासवदत्ताया उपमाता चेति द्वावावां महाराजवत्सराजस्य विजयमभिनन्दितुं स्वामिसन्देशं श्रावयितुं च द्वारदेशमुपस्थितौ स्वः, इत्थं राज्ञे उदयनाय निवेद्यतामिति भावः ।

※ निवेदनस्य नायं शोभनोऽवसर इति प्रतीहारी वदति—अय्य—इति । अदेशकालः = अत्र देशकालशब्दौ समुचितदेशकालपरौ, तेनानुचितो देशः अनुचितः कालश्चेत्यर्थः । प्रतीहारस्य = द्वारपालस्य । "प्रतिहारो द्वारपालः" इत्यमरः । राज्ञे सन्देशं श्रावयितुमिति शेषः । द्वारपालस्य राज्ञः सविधे गन्तुमिदानीं देशः कालश्चायोग्योऽस्ति । राजा यस्मिन् स्थाने इदानीं वर्तते, तत्र द्वारपालेन गन्तुं न शक्यते । अनवसरश्चायं निवेदनस्येति भावः ।

† काञ्चुकीयस्तत्कारणं पृच्छति—कथमिति । कस्माद्धेतोरिदानीमनवसरो निवेदनस्येत्यर्थः ।

---

प्रतीहारी—आर्य !, इस समय तो महाराज से कुछ कहने का मौका नहीं है ।

कञ्चुकी—क्यों नहीं है ? ( क्या कारण है ? )

**प्रतीहारी**—सुणादु अय्यो । अज्ज भट्टिणो ( सु ? स ) य्यामहा-प्पासादगदेण केण वि वीणा वादिदा । तं च सुणिअ भट्टिणा भणिअं-घोसवदीए सद्दो विअ सुणीअदित्ति । * [ शृणोत्वार्यः । अद्य भर्तुः शय्या-महाप्रासादगतेन केनापि वीणा वादिता । तां च श्रुत्वा भर्त्रा भणितं

* प्रतीहारी तत्कारणं वदति—सुणादु-इति । भर्तुः=राज्ञ उदयनस्य । शय्यामहाप्रासादगतेन=शय्या, शयनार्थं मञ्चकाद्यवस्थापनं यत्र तादृशो यो महा-प्रासादः, तस्मिन् गतेन स्थितेन । केनापि=अज्ञातनामधेयेन केनापि पुरुषेण । वीणा=तन्त्री । वादिता=नादिता । पं० म० म० त०—गणपतिशास्त्रिभिः प्रका-शिते मूलमात्रे स्वप्नवासवदत्तस्य प्रथमसंस्करणे "अज्जभट्टिणो ( सु ? स ) य्यामहा-प्पासादगदेण केण वि वीणा वादिदा" इति पाठो दृश्यते, तदनुरोधेनैवास्माभिरु-परिनिर्दिष्टप्रकारेण व्याख्यातम् । महीपतीनां भोजनशयनासनादिकार्यसम्पत्तये पृथक् पृथक् प्रासादाः भवन्तीति शय्यामहाप्रासादगतेनेति पाठे न किञ्चिदप्यनौ-चित्यं पश्यामः । टीकाकारैः विभिन्नानि पाठान्तराणि कुतः समासादितानीत्यजान-न्तोऽपि तानि तदर्थांश्च तैः कल्पितान् मनाक् प्रदर्शयामः । तत्र "सूर्यामुखप्रासाद-गतेन" इति पाठं ये स्वीकुर्वन्ति, तन्मते—"सूर्या=नवोढा पद्मावती तस्याः, मुखप्रासादगतेन=प्रसादपुरोभागवर्तिना । यद्वा—सूर्या=सूर्यासावित्रीतिप्रसिद्धा विवाहदेवता, सा मङ्गलार्थंदारुशिलाद्युत्कीर्णा मुखे यस्य स सूर्यामुखप्रासादः, तं गतेनेत्यर्थः । केचित्तु—"सूर्यामुख इति प्रासादस्य नाम केवलं प्रतिभाति न तत्र व्युत्पत्त्यन्वेषणमावश्यकम्" इति वदन्ति । अस्मिन् कल्पे न किमप्यनौचित्यं पश्यामः । परे तु—"अज्जभट्टिणो सुय्यामुहप्पासादगदेण णडेण केण वि वीणा वादिदा" इति पाठं स्वीकुर्वन्ति । तस्य संस्कृतच्छायां च—"अद्य भर्तरि [?]रणीय-मुख्यप्रासादगते नटेन केनापि वीणा वादिता" इति लिखन्ति । तत्र तैरीदृशः पाठः कुतः समासादित इति न विद्मः । किञ्च "सुय्यामुहप्पासादगदेण" इत्यस्य

प्रतीहारी—आर्य, सुनिये । आज महाराज के शय्यामहा-प्रासाद में अर्थात् जिस महल में महाराज शयन करते हैं, उसमें जाकर किसीने वीणा बजाई । उसे सुन कर महाराज ने कहा कि, यह घोषवती वीणा का सा शब्द सुनाई दे रहा है ।

घोषवत्याः शब्द इव श्रूयते इति । ]

काञ्चुकीयः—* ततस्ततः ।

प्रतीहारी—तदो तहिं गच्छिअ पुच्छिदो—कुदो इमाए वीणाए आगमो त्ति । तेण भणिअं—अह्मेहिं णम्मदातीरे कोच्यगुम्मलग्गा दिट्ठा । जइ प्पओअणं इमाए उवणीअदु भट्टिणत्ति । तं च उवणीदं अङ्के करिअ मोहं गदो भट्टा । तदो मोहप्पच्चागदेण बप्फपज्जाउलेण मुहेण भट्टिणा भणिअं—दिट्ठासि घोसवदि ! सा हु ण दिस्सदि त्ति । अय्य ! ईदिसो अणवसरो । कहं णिवेदेमि ।† [ ततस्तत्र गत्वा पृष्टः—कुतोऽस्या वीणाया आगम इति । तेन भणितम्—अस्माभिर्नर्मदातीरे ( कोच्य ? ) कूर्च-

---

"स्वीयमुख्यप्रासादगते", इति संस्कृतच्छायाऽपि कथं भवितुं शक्नोतीत्यवगन्तुं वयं न पारयामः । तां = वीणाम् । श्रुत्वा = आकर्ण्य । अत्र वीणाशब्देन वीणाध्वनिर्लक्ष्यते । भर्त्रा = वत्सराजेन, उदयनेन । घोषवत्याः शब्द इव श्रूयते = घोषवतीनाम राज्ञा उदयनेन वासवदत्तायै सस्नेहमुपहारीकृता वीणा । तस्याः स्वरश्च राज्ञः परिचित आसीदिति तं श्रुत्वा घोषवत्याः शब्द इव श्रूयत इति राज्ञोक्तम् । वसुनेमिना सुस्वरेयं घोषवती वीणा राज्ञे दत्ता, तया च राजा गजहृदयं वशीकर्तुं प्राभवदिति कथा कथासरित्सागरे प्रसिद्धा ।

* काञ्चुकीयः पृच्छति—तत-इति । तदनन्तरं किं सञ्जातमित्यर्थः ।

† प्रतीहारी वदति—तदो-इति । पृष्टः = अनुयुक्तः । वीणावादक इति शेषः । अस्या वीणायाः = घोषवत्याः । आगमः = प्राप्तिः । इयं घोषवती नामाऽस्मदीया वीणा भवता कुतः प्राप्तेति प्रश्नः ? तेन भणितम् = वीणावादकेनोच्चरितम् । कूर्चगुल्मलग्ना = कूर्चानां दर्भाणाम्, गुल्मे स्तम्बे, लग्ना संसक्ता । दृष्टा = अवलोकिता । प्रयोजनम् = कार्यम् । अनया = घोषवत्या वीणया ।

---

कञ्चुकी—फिर क्या हुआ ?

प्रतीहारी—तब जाकर उन्होंने बजाने वाले से पूछा कि, यह वीणा तुम्हें कहाँ मिली ? उसने कहा कि 'मैंने इसे नर्मदा नदी के किनारे कुशाओं की झाड़ी में पड़ा हुआ पाया । यदि आप को इसकी आवश्यकता है, तो लीजिये,

गुल्मलग्ना दृष्टा । यदि प्रयोजनमनया उपनीयतां भर्त्रेति । तां चोपनीताम् अङ्के कृत्वा मोहं गतो भर्ता । ततो मोहप्रत्यागतेन बाष्पपर्याकुलेन मुखेन भर्त्रा भणितं—दृष्टासि घोषवति ! सा खलु न दृश्यत इति । आर्य ! ईदृशोऽनवसरः कथं निवेदयामि । ]

काञ्चुकीयः—भवति ! निवेद्यताम् । इदमपि तदाश्रयमेव ✽ ।

---

उपनीयताम् = गृह्यताम्, भर्त्रा = राज्ञा, उदयनेन । ताम् = घोषवतीं वीणाम्, उपनीताम् = तत आनीताम् । अङ्के कृत्वा = उत्सङ्गे संस्थाप्य । मोहं गतः = मूर्च्छां प्राप्तः । ततः = तदनन्तरम् । मोहप्रत्यागतेन = अपगतमूर्च्छेन बाष्पपर्याकुलेन = अश्रुमलिनेन । मुखेन = वदनेन । भर्त्रा = राज्ञा उदयनेन । भणितम् = घोषवतीमुद्दिश्य कथितम् । घोषवति ! = तदाख्ये वासवदत्तावीणे ! दृष्टाऽसि = चिरान्मयाऽवलोकितासि । सा = तव स्वामिनी वासवदत्ता । न दृश्यते = नाव-लोक्यते । इति एवम् । भणितमिति सम्बन्धः । एवं राज्ञो दुरवस्थां निवेद्य विजया प्रतीहारी काञ्चुकीयं वदति—अय्य-इति । ईदृशः = पूर्वोक्तप्रकारः । अनवसरः = निवेदनयोग्योऽवसरो नास्तीत्यर्थः । कथं निवेदयामि = राज्ञः ईदृशीं दुरवस्थां पश्यन्त्यपि भवदागमनं कथं निवेदयितुमुत्सहे इत्यर्थः ।

✽ काञ्चुकीयो वदति—भवति-इति । भवति ! = मान्ये ! विजये ! निवेद्यताम् = अनवसरेऽपि संसूच्यताम् । आवयोरागमनमिति शेषः । इदमपि = राज-समीपे अस्मदागमनमपि । तदाश्रयमेव = सा वासवदत्ता आश्रयो यस्य तत्, वासवदत्तासम्बन्धमेवेत्यर्थः । वासवदत्तासम्बन्ध एव किञ्चिद्वक्तुमावामागतौ स्वः, अतस्त्वया राज्ञे अस्मदागमनं निवेद्यतामित्यर्थः ।

---

मैं इसे भेंट देता हूँ ।' तब उस वीणा को गोद में लेकर महाराज एकदम मूर्छित हो गये । कुछ देर बाद जब उनका मोह कुछ शिथिल हुआ, तब उन्होंने आँखों में आँसू भर कर कहा कि, घोषवति ! तूँ तो दिखलाई पड़ी पर वासवदत्ता नहीं दिखाई पड़ती । आर्य !, इसी से मैं कहती हूँ कि, इस समय कहने का मौका नहीं है ।

कञ्चुकी—कल्याणि ! आप मेरे आने का समाचार दे दीजिये । मेरा आना भी वासवदत्ता के सम्बन्ध में ही हुआ है ।

प्रतीहारी—अय्य ! इअं णिवेदेमि । एसो भट्टा सु (? स) य्यामहप्पासादादो ओदरइ । ता इह एव्व णिवेदइस्सं । ❀

काञ्चुकीयः—भवति ! तथा । †

( उभौ निष्क्रान्तौ ‡ )

मिश्रविष्कम्भकः ▽ ।

( ततः प्रविशति राजा विदूषकश्च □ )

---

❀ काञ्चुकीयस्य वचनं निशम्य प्रतीहारी वदति—अय्य-इति । इयं निवेदयामि=एषाऽहं त्वरितं राज्ञे सूचयामि ।

पुरो राजानं निर्दिश्य वदति—एसो-इति । शय्यामहाप्रासादात् = शयनीयस्थानभूताद्राजभवनात् । अवतरति = घोषवत्यधिगमवृत्तान्तमवगन्तुं पूर्वं शय्यामहाप्रासादं गतो राजा अध आयाति । तत् = तस्मात् कारणात् । इहैव = बहिर्द्वारदेश एव । निवेदयिष्यामि= स्ववक्तव्यं तत्पुरः समुपस्थापयिष्यामि ।

† प्रतीहार्युक्तिं काञ्चुकीयः सम्मनुते—भवति-इति । भवति ! = मान्ये ! तथा = यथा भवती इच्छति, तथैव भवतु ।

‡ उभौ निष्क्रान्तौ = प्रतीहारी-काञ्चुकीयौ च शय्यामहाप्रासादसमीपं गतौ ।

▽ मिश्रविष्कम्भकः—संस्कृतभाषाभाषिणा काञ्चुकीयेन प्राकृतभाषाभाषिण्या प्रतीहार्या च शत्रु उदयनस्य राज्यप्राप्तिः, भूपतेर्महासेनस्य राज्ञे उदयनाय निवेदयिष्यमाणं वाचिकं च प्रदर्शितमिति मिश्रः = सङ्कीर्णोऽयं विष्कम्भकः ।

□ अथ विदूषकेण सह राज्ञः प्रवेशमाह—ततः प्रविशतीति ।

---

प्रतीहारी—आर्य !, मैं अभी जाकर समाचार दे देती हूँ । ये महाराज महल से उतर रहे हैं । यहीं पर उन्हें विदित कर देती हूँ ।

कञ्चुकी—बहुत अच्छा ।

( दोनों चले गये )

मिश्र विष्कम्भक ।

( राजा और विदूषक आते हैं )

राजा—

श्रुतिसुखनिनदे ! कथं नु देव्याः
स्तनयुगले जघनस्थले च सुप्ता ।
विहगगणरजोविकीर्णदण्डा
प्रतिभयमध्युषितास्यरण्यवासम् ॥ १ ॥

प्रविष्टो राजा वासवदत्ताविरहितामत एव दुर्भागधेयां घोषवतीं वीणामुद्दिश्य वदति—श्रुतिसुखनिनदे—इति ।

( अन्वयः ) हे श्रुतिसुखनिनदे ! देव्याः स्तनयुगले जघनस्थले च सुप्ता, ( त्वम् ) ( अधुना ) विहगगणरजोविकीर्णदण्डा, प्रतिभयम् , अरण्यवासम्, कथं नु अध्युषिताऽसि ॥ १ ॥

( टीका ) हे श्रुतिसुखनिनदे = श्रुत्योः कर्णयोः, सुखः सुखकरः, निनदः स्वनो यस्याः सा, तत्सम्बुद्धौ, कर्णतर्पणनिःस्वने ! इत्यर्थः । घोषवति !, देव्याः = वासवदत्तायाः । स्तनयुगले != कुचयुग्मे ! जघनस्थले च = श्रोणिपुरोभागे, उत्सङ्गतले इत्यर्थः । सुप्ता = सुखं शयाना । सुखस्थितेत्यर्थः । वादनकाले हि वीणाया उत्सङ्गतले विश्रान्तिः स्तनस्पर्शश्च भवत्येव । त्वम् । अधुना विहगगण-रजोविकीर्णदण्डा = विहगानां पक्षिणाम् , गणः समूहः, तस्य यद्रजः धूलिः मलो वा तेन विकीर्णः व्याप्तः, दूषितः दण्डः प्रवालो यस्याः सा । "वीणादण्डः प्रवालः स्यात्" इत्यमरः । पक्षिगणमलाविलदण्डेत्यर्थः । प्रतिभयम् = भयानकम् । "भयङ्करं प्रति-भयम्" इत्यमरः । अरण्यवासम् = वनवासम् । कथं नु = कथमिव । अध्युषिताऽसि = आश्रिताऽसि । "उपान्वध्याङ्वसः" इति द्वितीया । "पुष्पिताग्रा" वृत्तम् ।

वासवदत्ताविरहेणेव मौनवतीं पुरः पतितां घोषवतीं वीणामुद्दिश्य राजा सखेदं वदति—अयि !, कर्णरसायननि स्वने ! ताललयानुगते ! वासवदत्ताकरसम्पर्क-पवित्रे ! घोषवति ! वीणे ! या त्वं पुरा वीणावादनलोलचित्तया देव्या वासवदत्तया

राजा—ऐ ! कानों को सुख देने वाली वीणा, तू वासवदत्ता के स्तनों और जंघाओं पर सोया करती थी; फिर चिड़ियों के मल से गंदली होकर इस भयानक जङ्गल में कैसे वास करती हो ! ॥ १ ॥

अपि च, अस्निग्धासि घोषवति ! या तपस्विन्या न स्मरसि ❀ ।

श्रोणीसमुद्वहनपार्श्वनिपीडितानि
स्वेदस्तनान्तरसुखान्युपगूहितानि ।

सादरं कुसुमसुकुमारे स्वकीयोत्सङ्गतले सन्निवेशिता सती तस्याः कुचकुम्भयुगले स्वीयसौभाग्यं सुचिरमवाप्तवती । सा त्वमिदानीमेषु दुर्दिनेषु तव दण्डं निजाश्रय-यष्टिं मत्वा तत्र निवसद्भिर्विहगैः समुत्सृष्टेन मलेन मलिनप्रवाला भूत्वा भयङ्कर-मारण्यवासमध्यवात्सीः । मन्ये, देव्या विरह एव तव दैवदुर्विलासहेतुरिति भावः ॥

❀ अपि च = अन्यच्च । हे घोषवति ! = वासवदत्तीये वीणे ! अस्निग्धाऽसि = स्नेहरहिताऽसि, शुष्कहृदयासीत्यर्थः ।

तत्र हेतुमाह—या—इति । या = वासवदत्तया सस्नेहं स्वाङ्के उपलालिताऽपि त्वम् । तपस्विन्याः—दुर्दैवदग्धायाः । न स्मरसि = न चिन्तयसि । इदं वक्ष्यमाण-श्लोकान्वयि ।

किन्न स्मरसीत्याह—श्रोणीति ।

( अन्वयः ) श्रोणीसमुद्वहनपार्श्वनिपीडितानि, स्वेदस्तनान्तरसुखानि, उपगूहि-तानि विरहे माम् उद्दिश्य परिदेवितानि च, वाद्यान्तरेषु सस्मितानि कथितानि च ॥

( टीका ) श्रोणीसमुद्वहनपार्श्वनिपीडितानि = श्रोण्या कटिभागेन जघनेन, समुद्वहनानि धारणानि, पार्श्वेन कक्षेण, निपीडितानि संघर्षणानि, वीणाऽऽनयना-वसरे वासवदत्तया स्वीयजघनभागावष्टम्भेन कृतानि समुद्वहनानि, तदानीमेव सञ्जा-तानि तत्पार्श्वभागसंघर्षणानि चेत्यर्थः । यद्वा—श्रोणिः = नितम्बसदृशः पृथुलो वीणादण्डाधोभागः, तस्याः समुद्वहनानि धारणानि । पार्श्वसादृश्यात् प्रवालाख्यो वीणादण्डोऽत्र पार्श्वशब्देन ग्राह्यः, तस्य निपीडनानि, वादनार्थमुत्सङ्गे धारणावसरे-ऽवमर्दनानि च । स्वेदस्तनान्तरसुखानि = स्वेदे वादनजनिते श्रमे सति, स्तनयोः कुचयोः, अन्तरे मध्यभागे, सुखानि सुखजनकानि । उपगूहितानि = आलिङ्गनानि ।

और भी—ऐ घोषवति ! तू बड़ी स्नेह-शून्य है, जो कि तू बजाने के समय तपस्विनी वासवदत्ता की जंघा पर रक्खा जाना, बगल से दबाया जाना, थकने पर कुचों के बीच सुख से सोलाया जाना, विरह की दशा में मुझे उद्देश्य कर

**उद्दिश्य मां च विरहे परिदेवितानि**
**वाद्यान्तरेषु कथितानि च सस्मितानि ॥ २ ॥**

विरहे = मद्वियोगे। माम् = उदयनम्। उद्दिश्य = लक्ष्यीकृत्य। परिदेवितानि च = विलपितानि च। "विलापः परिदेवनम्" इत्यमरः। किञ्च-वाद्यान्तरेषु = वाद्यस्य वादयितुमुपक्रान्तस्य गतिरागादिप्रकारस्य अन्तरेषु छिद्रेषु—वीणाचार्येणापि मया कृतासु अनवधानतासु। सस्मितानि = वीणाचार्योऽपि मादृशशिष्यजन इव प्रायः स्खलतीत्यर्थसूचकमन्दहाससहितानि। कथितानि च = वीणाचार्योऽपि यत्र स्खलति, तत्र शिष्यजनस्य त्रुटिरुपेक्षणीयैवेत्यादिरूपाणि भाषितानि च। न स्मरसीति पूर्वेण सम्बन्धः। कैश्चिदत्र राजपक्षेऽपि कश्चिद् गूढोऽर्थः सूचितः। स च वासवदत्तां दग्धां मन्यमानस्य तदीयवीणादर्शनेन समुद्बुद्धशोकस्य राज्ञो मुखे चेतसि चानुचित इव प्रतिभाति। यथाकथञ्चित् सम्भवन्नपि अश्लीलताबाहुल्यादस्माभिरिहोपेक्ष्यते। "वसन्ततिलकं" वृत्तम्।

घोषवतीं नाम स्वपुरःस्थितां वासवदत्ताया वीणामुपालम्भमानो राजा वदति—अयि! घोषवति! त्वं नूनं स्नेहरहिता शुष्कहृदयाऽसि। पुरा कुसुमकोमलाङ्गुल्यापि देव्या वासवदत्तया त्वदानयनावसरे कृतानि जघनभागावष्टम्भेन सदयं धारणानि तदानीमेव च सञ्जातानि देवदुर्लभानि तस्याः पार्श्वभागसंघर्षणानि च मनागपि न स्मरसि, किञ्च यदा सा चिरं त्वां वादयित्वा परिश्रान्ता भवति स्म तदा पीनोन्नतयोः स्तनयोरन्तराले त्वां स्थापयित्वा त्वामुपगूह्य सा चिरं तिष्ठति स्म, तदपि त्वं न स्मरसि, अन्यच्च मद्वियोगे सति तया मामुद्दिश्य कृतानि त्वत्स्वरानुगतानि विलपितान्यपि किं त्वया स्मर्यन्ते? वादयितुमुपक्रान्तस्य गतिरागादिविशेषस्योपदेशदानावसरेऽनवधानतया मया कृतानि स्खलितान्यभिलक्ष्य तया "यत्र आचार्यः स्खलति, तत्र शिष्यजनस्य त्रुटिरुपेक्षणीयैव" इत्यर्थसूचनाय कृतानि मन्दहाससहितानि मुग्धवचनानि तु त्वं नैव स्मरसीति मन्ये। अहो! शुष्कहृदयत्वं तवेति भावः ॥२॥

विलाप करना, बजाने में हुये दोषों का मुसकान के साथ बताया जाना आदि सब कुछ भूल गई ॥ २ ॥

विदूषकः—अलं दाणि भवं अदिमत्तं सन्तप्पिअ। [ अलमिदानीं भवानतिमात्रं सन्तप्य। * ]

राजा—वयस्य ! मा मैवं, †

चिरप्रसुप्तः कामो मे वीणया प्रतिबोधितः।
तां तु देवीं न पश्यामि यस्या घोषवती प्रिया ॥ ३ ॥

* वासवदत्तावियोगेन सन्तप्तचित्तं विलपन्तं च राजानं विदूषकः समाश्वासयति—अलमिति। अलम् = पर्याप्तम्। भवता पर्याप्तं रुदितं विलपितं च, नेतः परमधिकमावश्यकमित्यर्थः। इदानीम् = अधुना। अतिमात्रम् = भृशम्, अत्यधिकमित्यर्थः। सन्तप्य = सन्तापमनुभूय। इदानीं भवानतिमात्रं सन्तापं न करोत्वित्यर्थः। यद्वा—"अलं दाणिं भवं अदिमत्तं सन्तप्पिअ" इति प्राकृते "भवं" इत्यस्य "भवन्" इति सम्बोधनात्मिकां संस्कृतच्छायां परिकल्प्य "भोः! इदानीमतिमात्रं सन्तप्यालम्" इत्यर्थः करणीयः। अस्मिन् कल्पे न किमप्यसामञ्जस्यं प्रतीयते। केचित्तु—पूर्वं प्रदर्शिते प्राकृते 'मा' पदमधिकं प्रयुज्य "संतप्पिअ" इत्यत्र 'संतप्पिदु' इति पाठभेदं परिकल्पयन्ति।

† राजा स्वसन्तापस्यानिवार्यत्वं प्रपञ्चयति—वयस्येति। मा मा, एवम्। वादीरिति शेषः। सन्तापो मया दुस्त्यज इत्यर्थः।

तत्र हेतुमाह—चिरप्रसुप्त इति।

( अन्वयः ) वीणया मे चिरप्रसुप्तः कामः प्रतिबोधितः, यस्याः, घोषवती प्रिया, तां देवीं तु न पश्यामि।

( टीका ) वीणया = वासवदत्तायाः घोषवतीनामिकया वीणया। मे = मम। चिरप्रसुप्तः = चिरात् चिरकालात्, प्रसुप्तः उद्बोधकसामग्र्यभावाद्धृदि निलीय स्थित इव। कामः = प्रियासङ्गमेच्छा। प्रतिबोधितः = जागरितः। यस्याः = मम

विदूषकः—महाराज !, अब बहुत सन्ताप न कीजिये।

राजा—मित्र ! ऐसा मत कहो।

इस वीणा ने बहुत दिन के सोये हुए काम को जगा दिया। पर वह देवी नहीं दिखाई देती, जिसे यह घोषवती अत्यन्त प्यारी थी ॥ ३ ॥

वसन्तक ! शिल्पिजनसकाशान्नवयोगां घोषवतीं कृत्वा शीघ्रमानय ।❀

विदूषकः—जं भवं आणवेदि ( वीणां गृहीत्वा निष्क्रान्तः )
[ यद् भवानाज्ञापयति । † ]

प्रियायाः, देव्या वासवदत्तायाः । घोषवती = तदाख्येयं पुरःस्थिता वीणा । प्रिया = अङ्कोपलालनात् प्रीतिपात्रमासीत् । तां देवीं तु = अस्याः वीणायाः स्वामिनीं प्रियां वासवदत्तां तु । न पश्यामि = सर्वथा द्रष्टुमिच्छन्नपि द्रष्टुं न लभे । अतः सन्तापो मया दुस्त्यज इत्याशयः । "अनुष्टुब्" वृत्तम् ।

विदूषकेण सन्तापपरित्यागाय प्रार्थितो राजा आत्मनस्तत्करणासमर्थत्वं प्रपञ्चयन्नाह—वयस्य ! वसन्तक ! मैवं वादीः । दैवदुर्विलासेन यस्मिन् दिने प्रियया वासवदत्तया वियोगः सञ्जातः, तद्दिनमारभ्य मम हृदयस्यान्तः प्रतिपलं ज्वलन्नपि वियोगाग्निः व्यतीतेषु कतिपयेषु मासेषु उद्बोधकसामग्रीरूपेन्धनाभावात् स्फुलिङ्गावस्थामागतः सुप्तप्राय इव आसीत्, सोऽद्य प्रियाया अङ्कोपलालितां चिरसहचरीं घोषवतीं नाम वीणां दृष्ट्वा वाढं सन्धुक्षितः । प्रियायाः प्रीतिपात्रमियं घोषवती मम पुरस्तिष्ठति, स्मारयति च मां प्रियायास्तांस्तान् विलासान् । अस्याः स्वामिनी मम प्राणेश्वरी वासवदत्तावियोगानलसन्तापः कथङ्कारं मया परित्यक्तुं शक्यते इति भावः ॥ १२ ॥

❀ इत्थमात्मनः सन्तापस्य परित्यागानर्हत्वं निर्दिश्य वीणासंस्कारकरणाय राजा विदूषकमादिशति—वसन्तकेति । शिल्पिजनसकाशात् = वीणासंस्करणकुशलकलाकोविदसमीपात् । नवयोगाम् = नवः नूतनः, योगः दूषितभागापनयनपूर्वकं तन्त्रीदण्डादिसम्बन्धो यस्यां तादृशीम् । पुनर्नवीकृतामित्यर्थः । सखे ! वसन्तक ! चिरादरण्यवासेन त्रुटितसन्धिबन्धैषा घोषवती भवता तत्कलाकोविदद्वारा पुनर्नवीकृत्य शीघ्रं मत्समीपमुपस्थापनीयेति भावः ।

† विदूषकस्तदनुमोदते—जं-इति । यत् = वीणायाः पुनर्नवीकरणम् । तद्भवदाज्ञानुसारं शीघ्रं सम्पाद्य आनयामीति शेषः ।

वसन्तक ! कारीगर से इस घोषवती की मरम्मत करा कर शीघ्र ले आओ ।

विदूषक—जैसी आप की आज्ञा ( वीणा लेकर बाहर चला गया )

( प्रविश्य ❀ )

प्रतीहारी—जेदु भट्टा। एसो खु महासेणस्स सआसादो रब्भसगोत्तो कञ्चुईओ देवीए अङ्गारवदीए पेसिदा अय्या वसुन्धरा णाम वासवदत्ताधत्ती अ पडिहारं उवट्ठिदा। [ जयतु भर्ता। एष खलु महासेनस्य सकाशाद् रैभ्यसगोत्रः काञ्चुकीयो देव्याङ्गारवत्या प्रेषितार्या वसुन्धरा नाम वासवदत्ताधात्री च प्रतीहारमुपस्थितौ। † ]

राजा—तेन हि पद्मावती तावदाहूयताम्। ‡

---

राजाऽऽज्ञया वीणासंस्काराय वीणासहितस्य विदूषकस्य प्रवेशमाह—वीणां गृहीत्वा निष्क्रान्त-इति।

❀ राज्ञो महासेनस्य सकाशादागतं काञ्चुकीयं वासवदत्ताधात्री वसुन्धरां च समागतां सूचयितुं प्रतीहार्याः प्रवेशमाह—प्रविश्येति।

† प्रविष्टा प्रतीहारी राजानं विजयाऽऽशंसनपूर्वकं निवेदयति—जेदु-इति। जयतु भर्ता=विजयतां मम स्वामी महाराज उदयनः। महासेनस्य सकाशात्=अवन्तिदेशाधिपतेः वासवदत्तायाः पितुः महासेनाऽपराख्यस्य महाराजप्रद्योतस्य समीपात्। रैभ्यसगोत्रः=रैभ्यगोत्रोत्पन्नो, रैभ्यनामा वा। देव्या अङ्गारवत्या=महासेनस्य पत्न्या, वासवदत्ताया मात्रा। वासवदत्ताधात्री=वासवदत्ताया उपमाता। प्रतीहारम्=द्वारदेशम्। उपस्थितौ=सम्प्राप्तौ।

‡ अङ्गारवतीसन्देशश्रवणं वसुन्धरया सह सम्भाषणं च पद्मावत्यैव कर्तुमुचितमिति मन्वानो राजा प्रतीहारीमादिशति—तेन-हीति। तेन हि=यद्येवं तर्हि। आहूयताम्=आमन्त्र्यताम्। तावदिति वाक्यालङ्कारे।

---

( आकर )

प्रतीहारी—महाराज की जय हो। महासेन के यहाँ से रैभ्यसगोत्र कञ्चुकी और देवी अंगारवती की भेजी हुई वासवदत्ता की धाई वसुन्धरा, दोनों द्वार पर आये हुये हैं।

राजा—अच्छा तो पहिले पद्मावती को बुला लाओ।

प्रतीहारी—जं भट्टा आणवेदि । ( निष्क्रान्ता ) [ यद् भर्ताज्ञापयति । ❀ ]

राजा—किन्तु खलु शीघ्रमिदानीमयं वृत्तान्तो महासेनेन विदितः † ।

( ततः प्रविशति पद्मावती प्रतीहारी च ‡ )

प्रतीहारी—एदु एदु भट्टिदारिआ । [ एत्वेतु भर्तृदारिका । △ ]

पद्मावती—जेदु अय्यउत्तो । [ जयत्वार्यपुत्रः । □ ]

राजा—○ पद्मावति ! किं श्रुतं महासेनस्य सकाशाद् रैभ्यसगोत्रः

---

❀ प्रतीहारी राजाऽऽज्ञां स्वीकुरुते—जं–इति । राजाऽऽज्ञासम्पादनाय प्रतीहार्या निर्गमनं सूचयति—निष्क्रान्तेति ।

† काञ्चुकीयं वसुन्धरां च समागतां श्रुत्वा राजा स्वगतं विमृशति—किन्तु–इति । किन्तु खलु = कथम् । अयं वृत्तान्तः = पद्मावतीपरिणयपुनःस्वराज्यप्राप्त्यादिरूपं वृत्तम् । विदितः = ज्ञातः ।

‡ राजाऽऽज्ञानुसारं प्रतीहार्या सह पद्मावत्याः प्रवेशमाह—ततः प्रविशतीति ।

△ प्रतीहारी पद्मावत्यै मार्गं दर्शयति—एदु एदु–इति ।

□ राजानमुपगम्य तद्विजयाऽऽशंसनात्मकं समुदाचारं पद्मावती समाचरति–जेदु–इति ।

○ राजा पद्मावतीं पृच्छति—पद्मावतीति । किं श्रुतम् = महासेनस्य सका

---

प्रतीहारी—जैसी आपकी आज्ञा । [ चली गयी ]

राजा—क्या यह समाचार महाराज महासेन को इतना जल्दी मालूम हो गया ?

( पद्मावती और प्रतीहारी आती है )

प्रतीहारी—आइये, राजकुमारी जी । आइये ।

पद्मावती—आर्यपुत्र की जय हो ।

राजा—पद्मावती !, क्या तुमने यह सुना है कि, महाराज महासेन के

काञ्चुकीयः प्राप्तस्तत्रभवत्या चाङ्गारवत्या प्रेषितार्या वसुन्धरा नाम वासव-दत्ताधात्री च प्रतिहारमुपस्थिताविति ।

पद्मावती—अय्यउत्त ! पिअं मे णादिकुलस्स कुसलवुत्तन्तं सोदुं ।
[ आर्यपुत्र ! प्रियं मे ज्ञातिकुलस्य कुशलवृत्तान्तं श्रोतुम् । *]

राजा—अनुरूपमेतद् भवत्याभिहितं—वासवदत्तास्वजनो मे स्वजन इति । पद्मावति ! आस्यताम् । किमिदानीं नास्यते । †

---

शात् काञ्चुकीयः, अङ्गारवत्या प्रेषिता वसुन्धरा च द्वारदेशमुपस्थिताविति प्रतीहार्या निवेदितं त्वया समाकर्णितं न वेत्यर्थः ।

*सपत्नीबन्धुष्वप्यात्मीयतीप्रकाशनेनाऽऽत्मन उदाराशयतां प्रकटयन्ती पद्मावती राजानमुत्तरयति—अय्यउत्त—इति । ज्ञातिकुलस्य=स्वसम्बन्धिबन्धुवर्गस्य । कुशल-वृत्तान्तम्=क्षेमवार्ताम् । श्रोतुम्=आकर्णयितुम् । मे प्रियम्=ममाऽत्यन्तम-भीष्टम् । अत्र 'मे' इति मध्यमणिन्यायेन प्रियं ज्ञातिकुलस्य चेत्युभयत्राऽन्वेति । यद्वा—ज्ञातिकुलस्य=तातकुलस्य । "ज्ञातिस्तात-सगोत्रयोः" इति मेदिनी । अस्मिन् कल्पे वासवदत्तायाः पितरं स्वपितरमिव सम्भावयन्त्याः पद्मावत्याः परमो-दाराशयता सूच्यते ।

†पद्मावत्या वचनं निशम्य बाढं परितुष्टो राजा तां प्रशंसन्नाह—अनुरूपमिति । अनुरूपम्=योग्यम्, कुलशीलाद्युचितमित्यर्थः । वासवदत्तास्वजनः=वासवदत्ताया बन्धुवर्गः मे=मम पद्मावत्याः । स्वजनः=आत्मीयो बन्धुवर्गः । इति=एवं रूपम् । पद्मावतीं स्थितामेव दृष्ट्वा इयं ममाऽऽदेशं विना नोपवेक्ष्यतीति जानन् राजा

---

वहाँ से रैभ्यसगोत्र कञ्चुकी और देवी अङ्गारवती की भेजी हुई वासवदत्ता की धाई वसुन्धरा दोनों द्वार पर आये हैं ।

पद्मावती—आर्यपुत्र !, बहुत अच्छा समाचार है । मुझे अपने आत्मीय-जनों के कुशल समाचार जानने की बड़ी इच्छा है ।

राजा—यह तुमने उचित ही कहा कि 'वासवदत्ता के आत्मीय अपने भी आत्मीय हैं । पद्मावती !, आओ । बैठो । क्या बैठना नहीं चाहती ?

पद्मावती—अय्यउत्त ! किं मए सह उवविट्ठो एदं जणं पेक्खिस्सदि । [ आर्यपुत्र ! किं मया सहोपविष्ट एतं जनं द्रक्ष्यति । ❀ ]

राजा—कोऽत्र दोषः † ।

पद्मावती—अय्यउत्तस्स अवरो परिग्गहो त्ति उदासीणं विअ होदि । [ आर्यपुत्रस्यापरः परिग्रह इति उदासीनमिव भवति । ‡ ]

---

तां सस्नेहमाह—पद्मावतीति । आस्यताम् = उपविश्यताम् । किमिदानीं नीस्यते= मया आदिष्टयाऽपि किमिति नोपविश्यते इत्यर्थः ।

❀ अन्येषां समक्षं पत्या सहोपवेशनमनुचितं मन्यमाना लज्जाशीला पद्मावती राजानं निवेदयति—अय्यउत्त-इति । एतं जनम् = वासवदत्ताया बन्धुजनम् । भवानिति शेषः । द्रक्ष्यति = अवलोकयिष्यति । वासवदत्तासपत्नीं मां तत्स्थानस्थितां दृष्ट्वा तद्बन्धुजनस्य कापि मनःपीडा भवेदिति न मम भवता सह इहोपवेशनं समुचितमिति पद्मावत्या आशयः ।

† पद्मावतीकृतस्य सहोपवेशननिषेधस्य कारणमजानन् राजा पृच्छति—कोऽत्र दोष-इति । अत्र = मया सह तवोपवेशने । को दोषः = का क्षतिः, कीदृशमनौचित्यमित्यर्थः ।

‡ पद्मावत्युत्तरयति—अय्यउत्तस्स-इति । आर्यपुत्रस्य = भवतः । अपरः परिग्रहः = द्वितीया भार्या । इति = अतः । उदासीनमिव = स्नेहाल्पतया अनभिमतमिव । समागतस्य द्रष्टव्यस्य वासवदत्ताबन्धुवर्गस्येति शेषः, भवति = भवेत् । मां भवता सहोपविष्टां दृष्ट्वा तथाविधां प्रियां वासवदत्तां विस्मृत्य झटित्येवापरां पत्नीमुद्वूढवानिति भवतो विषये, इयमस्माकं वासवदत्तायाः सपत्नीति मद्विषये च वासवदत्ताबन्धुजनः स्नेहाल्पतारूपमुदासीनभावं भजेदिति भावः । केचित्त— "उदासीनं विअ" इति प्राकृतस्य "औदासीन्यमिव" इति संस्कृतच्छायां लिखन्ति ।

---

पद्मावती—आर्यपुत्र ! क्या आप मेरे साथ बैठकर उन लोगों से मिलेंगे ;

राजा—इसमें दोष ही क्या है ?

पद्मावती—महाराज ने दूसरा विवाह कर लिया है—यह बात कहीं उन्हें बुरी न लगे ?

राजा—कलत्रदर्शनार्हं जनं कलत्रदर्शनात् परिहरतीति बहुदोषमुत्पादयति। तस्मादास्यतीम् ※।

पद्मावती—जं अय्यउत्तो आणवेदि। (उपविश्य) अय्यउत्त! तादो वा अम्बा वा किंणु खु भणिस्सदि त्ति आविग्गा विअ संवुत्ता। [ यदार्यपुत्र आज्ञापयति। आर्यपुत्र! ततो वाम्बा वा किन्नु खलु भणिष्यतीत्याविग्नेव संवृत्ता। † ]

तत्र "उदासीनं" इति प्राकृतस्य "औदासीन्यम्" इति संस्कृतच्छाया कथं भवतीति वयं बोद्धुं न पारयामः।

※ पद्मावत्या आत्मना सहोपवेशनस्यैव समुचितत्वं राजा समर्थयति—कलत्रदर्शनार्हमिति '। कलत्रदर्शनार्हम् = कलत्रं भार्या। "कलत्रं श्रोणि-भार्ययोः" इति कोशः। कलत्रदर्शनमर्हतीति तथोक्तम्। आत्मीयत्वेनाभेदबुद्ध्या स्त्रीदर्शनोचितमित्यर्थः १ अयमुदयन इति शेषः जनम् = आत्मीयं बन्धुवर्गम्। कलत्रदर्शनात् = स्त्रीदर्शनात्। परिहरति = निषेधति। इति = एवं रूपम्। बहुदोषम् = आत्मीयबन्धुजनेऽपि भेदभावकरणेन भूयसीं निन्दाम्। अत्र बहुशब्देन दोषस्य गुरुत्वं सूच्यते, न त्वनेकसङ्ख्यत्वम्।

† पद्मावती पत्युराज्ञां स्वीकरोति—जं—इति। आर्यपुत्रो यदादिशति, तन्मयाऽवश्यमेवानुष्ठेयमित्यर्थः। उपविश्येत्यनेन पद्मावत्याः राजसन्निधावुपवेशनं सूचितम्। उपविष्टा च पद्मावती राजानं वदति—अय्यउत्त—इति। तातो वाम्बा वा = राजा महासेनः, राज्ञी अङ्गारवती च। चकारार्थे वा शब्दः। किन्नु खलु भणिष्यति = प्रियमप्रियं वा किं कथयिष्यति। इति = अस्माद्धेतोः। आविग्नेव = शङ्कापर्याकुलेव। अत्र पद्मावत्या वासवदत्तायाः पितरौ स्वपितृत्वेन निर्दिष्टाविति तस्याः महोदाराशयत्वं सापत्न्यकालुष्यराहित्यं च सूच्यते।

राजा—परन्तु जिसको स्त्री दिखलाना उचित है, उसे न दिखलाने से ही अनेक दोष उत्पन्न होते हैं। इस लिये आओ, बैठो।

पद्मावती—जैसी आप की आज्ञा। (बैठ कर) आर्यपुत्र! पिता और माता जी न जाने क्या कहेंगे। इस के जानने के लिये मैं बड़ी उद्विग्न हो रही हूँ।

राजा—* पद्मावति ! एवमेतत् ।

किं वक्ष्यतीति हृदयं परिशङ्कितं मे
कन्या मयाऽप्यपहृता न च रक्षिता सा ।
भाग्यैश्चलैर्महदवाप्तगुणोपघातः

* पद्मावत्याश्चित्तगतां शङ्कां निशम्य राजाऽपि स्वचित्तस्य शङ्काऽऽकुलत्वं वर्णयति—पद्मावतीति । एवमेतत् = भवत्या यच्छङ्कितं तदुचितमेवेत्यर्थः ।

राजा स्वचित्तां शङ्का वर्णयति—किं वक्ष्यतीति ।

( अन्वयः ) ( तातः अम्बा वा ) किं वक्ष्यति, इति मे अपि हृदयम् परिशङ्कितम्, कन्या सा मया अपहृता न च रक्षिता, चलैः भाग्यैः महदवाप्तगुणोपघातः ( अहम् ) पितुः जनितरोषः पुत्र इव भीतोऽस्मि ।

( टीका ) पद्मावतीवाक्यगते "तातो वा अम्बा वा" इति पदे अत्रानुवर्तेते । ततः = महाराजो महासेनः । अम्बा वा = महाराज्ञी माता अङ्गारवती वा । किं वक्ष्यति = दूतद्वारा धात्रीद्वारा वा किं कथयिष्यति । इति = एवम् । मे अपि = ममापि, मदीयमपीत्यर्थः । हृदयम् = चित्तम् । परिशङ्कितम् = शङ्काकुलम्, उद्विग्नं वर्तते । कृतापराधत्वादिति भावः । कन्या = असञ्जातविवाहमङ्गला कुमारी वासवदत्ता । सा = महाराजमहासेनदुहिता । मया = धूर्तेन उदयनेन । अपहृता = महाराजमहासेनस्यानुमतिमन्तरेणैवोज्जयिन्याः पलाय्य स्वराज्यमानीता । इत्थमपहृतापि, न च = नैव, रक्षिता = परिपालिता । लावाणकग्रामे वह्निदाहेन दग्धत्वात् । पित्रोरनुमितिं विना कन्याया अपहरणमेव प्रथमतो महानपराधः, अपहृताया अपरिपालनमनवेक्षणं च ततोऽपि घोरतरोऽपराधः तमहं कृतवानस्मि, एषैव मे हार्दिकी शङ्केत्याशयः । चलैः = चञ्चलैः, अस्थिरैरित्यर्थः । परिवर्तनशीलैरिति यावत् । भाग्यैः = पुराकृतदुष्कृतपरिपाकरूपैर्दुर्भागधेयैः । महदवाप्तगुणोपघातः = महत्

राजा—बात ऐसी ही है

मुझे भी ऐसी शङ्का हो रही है कि, न जाने वे क्या कहेंगे क्योंकि मैं कन्या को तो भगा लाया, पर उसकी रक्षा न कर सका । अपने दुर्भाग्य से मैंने

पुत्रः पितुर्जनितरोष इवास्मि भीतः ॥४॥

यथा स्यात् तथा, बाहुल्येनेत्यर्थः। यद्वा—महत्सु गुरुजनेषु, गुरुजनविषय इत्यर्थः। अवाप्तः प्राप्तः, गुणानां सदाचारविनयादीनामुपघातः भङ्गः व्यतिक्रमो येन, तथाभूतः, अहम्। अत एव पितुः = जनकस्य। जनितरोषः = जनित उत्पादितः, रोषः सदाचारव्यतिक्रममूलकः क्रोधो येन तथाविधः। पुत्र इव = सुत इव। भीतोऽस्मि = शङ्कितोऽस्मि। यद्वा – महदवाप्तगुणोपघात इत्यत्र महदिति पृथक् पदम्। तच्च क्रियाविशेषणविधया भीतोऽस्मीत्यनेन योज्यम्। तथा च—महत् = अत्यन्तम्। भीतोऽस्मि = शङ्कितोऽस्मि। अत्रोपमा। तथा च राज्ञ उदयनस्य प्रद्योतविषये पितृभक्तिः प्रतीयते। "वसन्ततिलकं" वृत्तम्।

राज्ञो महासेनस्य संकाशात् समागतं काञ्चुकीयम्, महाराज्या अङ्गारवत्या प्रेषितां वासवदत्ताधात्रीं वसुन्धरां च निशम्य तातोऽम्बा वा किं सन्देक्ष्यतीति सोद्वेगया पद्मावत्या स्वचित्तगताऽऽशङ्का राज्ञः पुरः प्रकटिता। राजाऽपि तां निशम्याऽहमपि साशङ्कोऽस्मीति वदन् स्वशङ्काकारणं वर्णयति—सखि! पद्मावति! मया किल, तातस्य महासेनस्य अम्बाया अङ्गारवत्याश्चानुमतिमन्तरेण तयोः कन्या मयि गाढमनुरक्ता कुमारी वासवदत्ता अपहृत्य कौशाम्बीमानीता, ततश्च दौर्भाग्यान्मम अनवधानेन लावाणकग्रामे वह्निदाहेन सा दग्धा, मया कथमपि रक्षितुं न पारिता। इत्थं सदाचारविनयादीनां गुणानां व्यतिक्रमः मत्तः कदापि न सञ्जात आसीत्, परन्तु सद्यानीं परिपाकोन्मुखदुर्दैवमहिम्ना सदाचारविनयादिगुणानामुपघातोऽभूत्। इत्थं च कृतापराधः पुत्रः पितुः पुरोगन्तुं यथा बिभेति, तथैवाहमपि पितृस्थानीयस्य राज्ञो महासेनस्य कृतापराधः, स दूतद्वारा किं मां निर्भर्त्सयिष्यति, अम्बा अङ्गारवती वा वसुन्धराद्वारा कीदृगुपालम्भं करिष्यतीति वाढमहं भीतोऽस्मि, काञ्चुकीयं वसुन्धरां च द्रष्टुं नोत्सह इति भावः॥ ४॥

बड़ों का अपराध किया है। मैं तो उनसे ठीक उसी तरह डर रहा हूँ, जैसे कि पिता के क्रोध से पुत्र डरता है॥ ४॥

पद्मावती—ण किं सक्कं रक्खिदुं पत्तकाले । [ न किं शक्यं रक्षितुं प्राप्तकाले । ❀ ]

प्रतीहारी—एसो कञ्चुईओ धत्ती अ पडिहारं उवट्ठिदा । [ एष काञ्चुकीयो धात्री च प्रतीहारमुपस्थितौ । † ]

राजा—शीघ्रं प्रवेश्यताम् ‡ ।

प्रतीहारी—जं भट्टा आणवेदी । [ यद् भर्ताज्ञापयति ] (निष्क्रान्ता)

( ततः प्रविशति काञ्चुकीयो धात्री प्रतीहारी च ) § ।

काञ्चुकीयः—भोः ! ○

---

❀ वासवदत्तारक्षणं कर्तुं मया न पारितमिति स्वदोषविमर्शनेन खिन्नचित्तं राजानं पद्मावती समाश्वासयति—ण-इति । प्राप्तकाले = विनाशकाले किम् = किमपि रक्षितुं न शक्यम् । प्राप्तकालो जन्तुः केनाप्युपायेन रक्षितुं न शक्य इत्यर्थः । तथा च "प्राप्तकालो न जीवति" इति न्यायेन आसन्नमृत्युर्वासवदत्ता आर्यपुत्रेण रक्षितुं न पारितेति न किमपि खेदकारणमिति भावः ।

† प्रतिहारी काञ्चुकीयस्य धात्र्याश्चागमनं पुनर्निवेदयति—एसो-इति । धात्री = वासवदत्तोपमाता वसुन्धरा । प्रतीहारम् = द्वारदेशम् । उपस्थितौ = प्राप्तौ ।

‡ राजा समादिशति—शीघ्रमिति । अविलम्बेन तौ मत्समीपं समानयेत्यर्थः ।

§ प्रतीहारी वदति—जं-इति । यथा स्वामी आज्ञापयति, तथा तौ शीघ्रं प्रवेशयामीत्यर्थः । प्रतीहार्या सह काञ्चुकीयस्य वसुन्धरायाश्च प्रवेशमाह—ततः प्रविशतीति ।

○ प्रविष्टः काञ्चुकीयः स्वगतं विमृशति—भोः-इति । भो इति आत्मनः सम्बोधनम् ।

---

पद्मावती—काल आने पर कौन किसको बचा सकता है ।

प्रतीहारी—महाराज !, कञ्चुकी और धाई दोनों द्वार पर आये हैं ।

राजा—शीघ्र उन्हें अन्दर ले जाओ ।

प्रतीहारी—जो आज्ञा । ( चली गयी )

( कञ्चुकी, धाई और प्रतीहारी का प्रवेश )

कञ्चुकी—अहा !

सम्बन्धिराज्यमिदमेत्य महान् प्रहर्षः
स्मृत्वा पुनर्नृपसुतानिधनं विषादः ।
किं नाम देव ! भवता न कृतं यदि स्याद्
राज्यं परैरपहृतं कुशलं च देव्याः ॥ ५ ॥

सम्बन्धिराज्यमिति ।

( अन्वयः ) इदम्, सम्बन्धिराज्यम्, एत्य, महान्, प्रहर्षः ( भवति ) नृपसुतानिधनम्, स्मृत्वा पुन महान् विषादः भवति । हे देव ! यदि परैः, अपहृतम्, राज्यम्, स्यात्, देव्याः कुशलं च स्यात्, ( तदा ) भवता किं नाम न कृतं स्यात् ।

( टीका ) इदम् = एतत् शत्रुं जित्वा पुनर्लब्धम् । सम्बन्धिराज्यम् = सम्बन्धिनः । वासवदत्तासम्बन्धेन सम्बन्धवतः आसस्य स्वामिनो जामातुरुदयनस्य, राज्यम् = तच्छासनाधीनं भूभागम् । एत्य = आगत्य । ममेति शेषः । महान् = बहुलः । इदं विशेषणं प्रहर्षे विषादे चान्वेति । प्रहर्षः = आनन्दः । भवति । किञ्च, नृपसुतानिधनम् = नृपसुताया अस्मत्स्वामिसुताया वासवदत्तायाः, निधनं मरणम् । "मरणं निधनोऽस्त्रियाम्" इत्यमरः । स्मृत्वा = विचिन्त्य । महान् = भूयान् । विषादः = खेदो भवति । हे देव ! = भागधेय ! यदि = चेत् । परैः = रिपुभिः । अपहृतम् = आक्रम्य स्वाधीनीकृतम् । राज्यं स्यात् = सिद्धं भवेत्, स्वशासनाधीनं सञ्जातं भवेदित्यर्थः । तथा, देव्याः = वासवदत्तायाः कुशलम् = क्षेमम्, पुनरुपलब्धिरित्यर्थः । स्यात् = भवेत् । सम्प्रति सौभाग्योपनतपुनः स्वराज्यप्राप्तिमूलकप्रहर्षं इव वासवदत्तानिधनजन्यविषादस्याऽप्यनवसरो भवेच्चेदित्यर्थः । यदि देव्याः कुशलं स्यादित्यनेन वासवदत्ताया भाविकुशलसम्भावनाऽपि सूचिता । तदा भवता = दैवेन । किं नाम = किमिव । न कृतं स्यात् = नानुष्ठितं भवेत् । अपि तु—इत्थं सति सर्वमेव कृतं स्यादित्यर्थः । "वसन्ततिलका" वृत्तम् ।

सम्बन्धी के राज्य में आकर मुझे परम आनन्द हो रहा है, परन्तु जब राजकन्या की मृत्यु का स्मरण होता है, तो बड़ा ही कष्ट होता है । शत्रुओं

**प्रतीहारी**—एसो भट्टा, उपसप्पदु अय्यो । [ एष भर्ता, उपसर्पत्वार्यः । ❀ ]

**काञ्चुकीयः**—( उपेत्य ) जयत्वार्यपुत्रः । †

**धात्री**—जेदु भट्टा । [ जयतु भर्ता । ‡ ]

**राजा**—( सबहुमानम् ) आर्य ! ▽

---

महासेनाऽऽज्ञया राजानमुदयनं द्रष्टुमुपस्थितस्तत् प्रतीहार्या तदन्तिकं प्रापितः काञ्चुकीयो मध्ये मार्गे स्वगतं विमृशति—भोः ! अद्येदानीं वासवदत्तासम्बन्धेन सम्बन्धिनः परमाप्तस्य राज्ञ उदयनस्य शासनाधीनमिदं वत्सराज्यमुपेत्य मम हि महान् प्रमोदो भवति । तदैव च अस्मत्स्वामिकुमार्याः वासवदत्तायाः मरणं सञ्चिन्त्य महद्दुःखं च सञ्जायते । कर्तुमकर्तुमन्यथाकर्तुं च समर्थ ! हे दैव ! पूर्वं प्रतिकूलतामुपगतेन भवता वत्सराज्यमिदं रिपुभिरपहारितम् । सम्प्रति अनुकूलेन भवता तत् पुनः प्रत्याहृतम् । यदि रिपुभिरपहृतं पुनः प्राप्तं वत्सराज्यमिव अन्तकेन नीतेति विश्रुता देवी वासवदत्तापि पुनः सकुशलं प्रत्याहृता भवेत् तदा भवता किमिव न कृतं भवेत् ! सर्वेऽप्यस्माकं मनोरथाः भवता पूरिता इत्येवाऽहं सम्भावयेयमिति भावः ५

❀ प्रतीहारी काञ्चुकीयं राजसमीपमुपस्थापयति—एसो-इति । एषः = पुरःस्थितः । उपसर्पतु = समीपमुपगच्छतु ।

† काञ्चुकीयो राजसमीपमुपस्थाय जयशब्देन तं वर्द्धयति—जयत्विति ।

‡ धात्री च राजानं जयशब्देन वर्द्धयति—जेदु—इति । भर्ता = स्वामी ।

▽ इत्थं जयशब्देनात्मानं वर्द्धयन्तं काञ्चुकीयं राजा बहुमानप्रदर्शनपूर्वकमाह—आर्य्य—इति । सम्बोधनमिदं वक्ष्यमाणश्लोकाऽन्वयि ।

---

द्वारा हरण किये गये राज्य की प्राप्ति और देवी वासवदत्ता का कुशल—यदि ये दोनों बातें हो जातीं तो हा ! दैव ! तूने क्या न किया होता ! ॥ ५ ॥

**प्रतीहारी**—ये स्वामी हैं । आप समीप जाइये ।

**कञ्चुकी**—( पास जाकर ) महाराज की जय हो ।

**धाई**—स्वामी की जय हो ।

**राजा**—( बड़े सम्मान से ) आर्य ! कहिये,

पृथिव्यां राजवंश्यानामुदयास्तमयप्रभुः ।
अपि राजा स कुशली मयाऽऽकाङ्क्षितबान्धवः ॥६॥

राजा अवन्तिदेशाधिपतेः महाराजमहासेनस्य कुशलं पृच्छति—पृथिव्यामिति ।

( अन्वयः ) आर्य ! पृथिव्याम्, राजवंश्यानाम्, उदयास्तमयप्रभुः मया आकाङ्क्षितबान्धवः स राजा अपि कुशली ।

( टीका ) आर्य ! = काञ्चुकीय ! । पृथिव्याम् = अखिलभूमण्डले । राजवंश्यानाम् = राजवंशप्रसूतानां महीपतीनाम् । उदयास्तमयप्रभुः = उदयः अभ्युदयः, अस्तमयः अस्तगमनम्, अवनतिः तयोः प्रभुः समर्थः, उत्कर्षापकर्षकरणसमर्थः । भाग्यविधाता, मण्डलेश्वरः । सम्राडिति यावत् । यद्वा—सूर्यस्य उदयास्तमयौ यावति भूभागे भवतः तावद्भूभागस्वामीत्यर्थः । मया = उदयनेन सह । आकाङ्क्षितबान्धवः = आकाङ्क्षितम् अभिलषितम् बान्धवं बन्धुभावः सौहार्दं येन तथाभूतः । सम्राडपि वासवदत्ताद्वारेण मम सौहार्देच्छुक इत्यर्थः । यद्वा—मया = उदयनेन कर्त्रा । आकाङ्क्षितम् अभिलषितम्, बान्धवं यस्य तथाभूतः । सः = परमप्रतापी पूजनीयः । राजा = प्रद्योतः । अपि कुशली = सकुशलो वर्तते किम् ? अपि प्रश्ने । "अनुष्टुब्" वृत्तम् ।

आत्मीनं जयशब्देनाभिवर्द्धयन्तं काञ्चुकीयं राज्ञो महासेनस्य कुशलं पृच्छन् राजा वदति—आर्य ! रैभ्यसगोत्र ! काञ्चुकीय ! पृथिव्यां यावन्तो राजवंशोद्भवा मूर्धाभिषिक्ता भूपालाः सन्ति, तावतां सर्वेषामपि भ्रूक्षेपमात्रेण निग्रहानुग्रहाभ्यामुत्कर्षापकर्षकरणे समर्थः, अत एव तेषां भाग्यविधाता मण्डलेश्वरः सम्राट्, यद्वा—यावति भूभागे भगवान् भानुरुदेति अस्तं याति च, तावतोऽशेषस्य भूमण्डलस्य प्रभुः । इत्थमपि वासवदत्तासम्बन्धेन मम सौहार्दाभिलाषी, किं वा अहं यस्य बन्धुभावमभिलषामि, तादृशो भवतः स्वामी महापराक्रमी महाराजो महासेनः सकुशलो वर्तते किम् ? चिरात् तस्य कुशलवार्ता मया न श्रुतेति भावः ॥ ६ ॥

मेरे साथ बन्धुभाव रखने वाले, पृथ्वी पर के उदयास्त तक के राजाओं के स्वामी महाराज महासेन कुशल से तो हैं न ! ॥ ६ ॥

काञ्चुकीयः—अथकिम्। कुशली महासेनः। इहापि सर्वगतं कुशलं पृच्छति।*

राजा—(आसनादुत्थाय) किमाज्ञापयति महासेनः।†

काञ्चुकीयः—सदृशमेतद् वैदेहीपुत्रस्य। नन्वासनस्थेनैव भवता श्रोतव्यो महासेनस्य सन्देशः।‡

* राज्ञा पृष्टः काञ्चुकीयः स्वस्वामिनः कुशलं निवेदयति—अथेति। अथकिम् = किमन्यत्। कुशली महासेनः = मम स्वामी महासेनः कुशलेन सह वर्तते। इहापि = अत्रापि, सपरिवारस्य भवतोऽपीत्यर्थः। सर्वगतं कुशलम् = सर्वविषयकं क्षेमम्। भवतो राज्यप्रजामन्त्रिपरिवारवर्गसहितस्य कुशलमस्ति किमिति प्रश्नः। पृच्छतीति भूतार्थे लट्। अप्राक्षीदित्यर्थः।

† अथ स्वकुशलनिवेदनप्रसङ्गेन वासवदत्तादाहकथाऽवश्यमेव वक्तव्या भवेत्, तया चाऽस्मापराधः प्रकाशितः स्यात्, अतः बहुमानप्रदर्शनव्याजेन स्वकुशलनिवेदनं परिहरन् राजा आसनादुत्थाय महाराजमहासेनाऽऽज्ञाश्रवणौत्सुक्यं नाटयति—किमाज्ञापयतीति। आज्ञापयति = आदिशति। महाराजमहासेनेन मदर्थे किमपि विशिष्य सन्दिष्टं स्याच्चेत् तमहं श्रोतुमिच्छामीति भावः।

‡ महाराजमहासेनाऽऽज्ञाश्रवणे राज्ञा आसनोत्थानेन प्रदर्शितं—बहुमानं प्रेक्ष्य सन्तुष्टचेताः काञ्चुकीयो वदति—सदृशमिति। एतत् = गुरुजनाऽऽज्ञाश्रवणे आसनत्यागादिना बहुमानप्रदर्शनम्। सदृशम् = अनुरूपम्। वैदेहीपुत्रस्य = वैदेही-विदेहराजतनया उदयनस्य जननी, तस्याः पुत्रस्य। विनयसदाचारादिसद्गुणसमवायेन प्रख्याते विदेहराजवंशे समुत्पन्ना यस्य माता, तस्य वत्सदेशाधीशस्य महाराजोदयनस्य गुरुजनाऽऽज्ञाश्रवणे आसनत्यागादिबहुमानप्रदर्शनं युक्तमेवेति भावः। राजानमासनाद्बहिः स्थितमेव दृष्ट्वा काञ्चुकीयो वदति—नन्विति। ननु—इति

कञ्चुकी—हाँ, महाराज महासेन सकुशल हैं और यहाँ के भी कुशल समाचार को पूछते हैं।

राजा—(आसन से उठकर) महाराज महासेन की क्या आज्ञा है?

काञ्चुकी—यह आपके योग्य ही शिष्टाचार है। परन्तु आसन पर बैठे ही बैठे महासेन का सन्देश सुनिये।

राजा—यदाज्ञापयति महासेनः । ❀ ( उपविशति )

काञ्चुकीयः—दिष्ट्या परैरपहृतं राज्यं पुनः प्रत्यानीतमिति । †

कुतः,

कातरा येऽप्यशक्ता वा नोत्साहस्तेषु जायते ।

---

अनुत्ये सम्भ्रमे वा । आसनस्थेयैव = आसनोपविष्टेनैव । श्रोतव्यः = आकर्णनीयः । महाराजमहासेनविषये भवता यावान् बहुमानः प्रदर्शितः, तावानेवालम् । अथ वक्ष्यमाणं सन्देशं भवानासनोपविष्ट एव श्रृणोत्वित्याशयः ।

❀ काञ्चुकीयानुरोधं महाराजमहासेनाऽऽज्ञामिव सम्भावयन् राजा वदति—यदाज्ञापयतीति । भवन्मुखेन महाराजमहासेनो यथा आज्ञापयति, तथैव करोमीत्यर्थः । काञ्चुकीयानुरोधानुसारं राज्ञः स्वासनोपवेशनं सूचयति—उपविशतीति ।

† अथ काञ्चुकीयो महाराजमहासेनस्य सन्देशं श्रावयति—दिष्ट्येति । दिष्ट्या = सौभाग्येन । परैः = शत्रुभिः । अपहृतम् = बलात् स्वाधीनीकृतम् । राज्यम् = वत्सदेशाधिपत्यम् । पुनः = भूयः । प्रत्यानीतम् = स्वभुजबलेन विजित्य प्रत्याहृतम् । शत्रुभिरपहृतं वत्सराज्यं पुनर्भवता स्वभुजबलेनार्जितमिति महान् प्रमोदाऽवसरोऽस्माकमित्यर्थः । कुतः = यतः ।

कातरा इति ।

( अन्वयः ) ये कातराः, अपि वा, अशक्ताः, तेषु, उत्साहः न जायते, हि प्रायेण नरेन्द्रश्रीः, सोत्साहैरेव भुज्यते ।

( टीका ) ये = ये राजानः । कातराः = अधीराः, बलवन्तोऽपि भीरुप्रकृतय इत्यर्थः । अपि या = किं वा । अशक्ताः = शक्तिरहिताः, बलहीना भवन्ति । तेषु = कातरेष्वशक्तेषु च राजसु । उत्साहः = अध्यवसायः, साहसम् । न जायते = नैवोत्पद्यते । बलवत्स्वपि प्रकृत्या भीरुषु शक्तिरहितेषु च पुरुषेषूत्साहः कदापि नैवोत्पद्यते, बलवन्तः साहसिकाश्चैवाध्यवसायिनो भवन्तीत्याशयः । हि = निश्चितमेवैतत् ।

---

राजा—जैसी महासेन की आज्ञा ( आसन पर बैठते हैं ) ।

कञ्चुकी—बड़े सौभाग्य की बात है कि, आपने शत्रुओं से छीना राज्य फिर प्राप्त कर लिया है । क्योंकि—

जो पुरुष कातर और असमर्थ हैं, उनमें तो कभी उत्साह ही नहीं पैदा

प्रायेण हि नरेन्द्रश्रीः सोत्साहैरेव भुज्यते ॥ ७ ॥

राजा—आर्य ! सर्वमेतन्महासेनस्य प्रभावः । ❀

प्रायेण = बहुधा । नरेन्द्रश्रीः = राजलक्ष्मीः । सोत्साहैरेव = उत्साहसम्पन्नैरध्यव-सायिभिः पुरुषैरेव । भुज्यते = आस्वाद्यते, अनुभूयते । यद्वा—नरेन्द्रश्रीरित्यत्र 'नरेन्द्र, श्रीः' इति पदद्वयं कल्पनीयम् । तथा च—"हे नरेन्द्र ! श्रीः सोत्साहैरेव भुज्यते" इत्यर्थः करणीयः । उत्साहशक्तिसम्पन्नेन भवता स्वभुजबलेन सपत्नापहृतं स्वराज्यं पुनः प्रत्याहृतमिति विशेषे वक्तव्ये उत्साहशक्तिसम्पन्नाः पुरुषा एव राज-श्रियं लभन्त इति सामान्यकथनेनाप्रस्तुतप्रशंसालङ्कारः । "अनुष्टुब्" वृत्तम् ।

महाराजमहासेनाऽऽज्ञया पुनः स्वराज्ये प्रतिष्ठितमुदयनमभिनन्दितुमुपागतः काञ्चुकीयो वदति—राजन् ! शत्रुभिरपहृतं वत्सराज्यं भवता स्वभुजबलेन शत्रून् पराभूय दिष्ट्या पुनः प्रत्याहृतमिति सत्यमयं प्रमोदाऽवसरोऽस्माकम् । ये खलु बल-वन्तोऽपि प्रकृत्या भीरवो भवन्ति, ये च प्रकृत्यैव दुर्बला भवन्ति, उभयेऽपि ते उत्साहशक्तेरास्पदं न भवन्ति । यत्र धैर्यं बलं च भवति, तत्रैवोत्साहोऽपि सर्वदा सन्नद्धस्तिष्ठति । लोके हि बहुधा दृश्यते, उत्साहशक्तिसम्पन्ना एव राजानः राज-लक्ष्मीं वशीकर्तुं शक्नुवन्ति । अलसैर्निरुद्यमैश्च पुरुषैः राज्यसुखप्राप्तेः कापि प्रत्याशा कर्तुं नोचिता । भवता च उत्साहशक्तिसम्पन्नतया राज्यलक्ष्मीर्वशीकृतेति लब्धराज्यं भवन्तमस्मत्स्वामी महाराजमहासेनः सानन्दमभिनन्दतीति भावः ॥ ७ ॥

❀ राजा स्वविनयं प्रदर्शयन्नाह—आर्येति । आर्य ! = मान्य ! काञ्चुकीय ! सर्वमेतत् = एतत्सर्वम् । संग्रामविजयराज्यलाभादिकम् । सर्वमेतदिति सामान्ये नपुंसकत्वम् । केचित्तु—सर्वमेतदित्यस्य "परकृतं राज्यापहरणं पुनस्तत्प्रत्याहरणं चेति तदर्थः" इत्यर्थं कुर्वते । तत्र वत्सराजस्य परकृत यद्राज्यापहरणं तदपि महासेनप्रभावादेव सञ्जातमिति तादृशेनार्थेन प्रतीयते । अस्माभिस्तु स्वाभिम-तोऽर्थः पूर्वं प्रकाशित एव, तत्र योग्यायोग्यत्वं निष्पक्षाः स्वयं विचारयन्तु । महा-सेनस्य = राज्ञः प्रद्योतस्य । प्रभावः = सामर्थ्यम्, तत्फलमित्यर्थः । पितृस्थानीयस्य

होता । प्रायः उत्साही पुरुष ही राज्यलक्ष्मी को भोगा करते हैं ॥ ७ ॥

राजा—आर्य ! यह सब महासेन ही का प्रभाव है । क्योंकि—

कुतः—

अहमवजितः पूर्वं तावत् सुतैः सह लालितो
दृढमपहृता कन्या भूयो मया न च रक्षिता ।

वत्सलस्य महाराजमहासेनस्य शुभानुध्यानमहिम्नैव मया संग्रामे विजयः पुनः स्वराज्यं च समासादितमिति भावः । अनेन वचनेन राज्ञो विनयो द्योत्यते ।

कुतः=यतः, महाराजमहासेनप्रभावादेव मया राज्यं लब्धमित्याह—अहमिति ।

( अन्वयः ) पूर्वं तावत्, अवजितः अहम्, सुतैः सह दृढं लालितः । मया कन्या दृढम् अपहृता, भूयः न च रक्षिता, तस्या निधनं श्रुत्वा अपि मयि तथैव स्वता ( अस्ति ) ननु उचितान् वत्सान् प्राप्तुम् यत् ( आसीत् ) अत्र नृपो हि कारणम् ।

( टीका ) पूर्वं तावत् = पुरा विन्ध्याटव्यां गजग्रहणप्रसङ्गे । अवजितः = नीलगजच्छद्मना वञ्चयित्वा विजित्य निगृहीतश्च । अहम् = उदयनः । इत्थं निगृहीतोऽप्यहम्, वत्सलस्वभावतया महाराजेनाऽऽत्मनः, सुतैः सह = पुत्रैः समम् । दृढम् = अत्यन्तम् । सुतनिर्विशेषमिति यावत् । लालितः = लालनपूर्वकं वात्सल्येन पालितः । पराजितोऽयं शत्रुभूत इति विचार्य न नाशितः न वा किञ्चिदप्यपालितः । इत्थं महाराजेन सुतनिर्विशेषं लालितेन पालितेनाऽपि योग्यमाचरितमिति भावः । इत्थं महाराजेन सुतनिर्विशेषं लालितेन पालितेनाऽपि कृतघ्नेन मया = उदयनेन । कन्या = असञ्जातपरिणया कुमारी महाराजमहासेनसुता वासवदत्ता । दृढम् = अत्यन्तानुचितप्रकारेण । अपहृता = बलात्कारपूर्वकं ततः आनीता । भूयः = पुनश्च । ( अपहृत्यापि ) न च = नैव । रक्षिता = पालिता । अग्निदाहात् तां रक्षितुं कोऽपि प्रयत्नो न कृतः । ममानवधानेनैव सा अग्निदाहेन दग्धेत्यर्थः । कन्याया अपहरणेन, अपहृताया अपि अरक्षणेन—इत्युभयथाऽपि मया ममोपकर्तुर्महाराजप्रद्योतस्य सर्वथा अपकृतमिति भावः । तस्याः = वासवदत्तायाः निधनम् = मरणवृत्तमित्यर्थः । श्रुत्वाऽपि = आकर्ण्याऽपि । मयि = नितान्तमपराधिनि मयि उदयने । तथैव = पूर्ववदेव । पुत्रनिर्विशेषमिति भावः । स्वता = ममता । आत्मीयजनोचितं वात्सल्यमित्यर्थः । अस्तीति शेषः । वासवदत्तानिधनं श्रुत्वाऽपि पुनरेव सम्प्रत्यपि मयि स्निह्यति महाराज इति भावः । नन्वि-

मैं पहले जीता गया । फिर भी महासेन ने अपने पुत्रों के समान लालन-पालन किया । ( यह भूलकर ) मैं उनकी कन्या को बलपूर्वक हर ले भागा

निधनमपि च श्रुत्वा तस्यास्तथैव मयि स्वता
ननु यदुचितान्न वत्सान् प्राप्तुं नृपोऽत्र हि कारणम् ॥८॥

काञ्चुकीयः—एष महासेनस्य सन्देशः। देव्याः सन्देशमिहात्र-

त्यवधारणे। निःसंशयमित्यर्थः। उचितान् = मयैव भोक्तुमुचितान्, मदीयान् ये। वंशपरम्परया अस्मच्छासनाधीना आसन्, अथ शत्रुभिर्बलादपहृता, तान् अकृतन्यूनाधिकान्। वत्सान् = वत्सदेशान्। प्राप्तुम् = पुनः प्रत्याहर्तुम्। यत् = धैर्यबलोत्साहादि यदावश्यकं जयोपकरणमासीत्। अत्र = राज्यप्राप्तिसमर्थतारूपेऽस्मिन् विषये। नृपो हि = महाराजमहासेन एव। अत्र हिकार एवकारार्थः। कारणम् = हेतुः। महाराजमहासेनप्रभाव एव मम राज्यलाभप्रधानहेतुरिति भावः। "हरिणी" वृत्तम्।

महाराजमहासेनप्रभावादेव स्वस्य राज्यलब्धिं वर्णयन् राजा वदति—पुरा किल विन्ध्याटव्यां गजग्रहणापराधेन बन्दीकृतोऽप्यहं गुणग्राहिणा महाराजेन स्वापत्यैः वासवदत्तागोपालकपालकाख्यैः सममेव सस्नेहं वात्सल्येन पालितः, न तु पराजित्य गृहीतोऽयं शत्रुरिति बुद्ध्या नाशितः, न वा किञ्चिद्विसदृशमाचरितम्। इत्थं सुतनिर्विशेषं वात्सल्यपूर्वकं पालितेनापि मया महाराजस्य तांस्तानुपकारान् अविगणय्याजातोपयमा महाराजस्य कुमारी कन्या वासवदत्ता अपहृता। पुनश्च वह्निदाहेन दह्यमाना सा कथमपि रक्षितुं न पारिता। इत्थं स्वात्मजाया विनाशभूतं कियता कालेन विदित्वाऽपि अपराधकारिण्यपि मयि महाराजः पुनरेव बाढं स्निह्यति। इदं तु निश्चयेन वक्तुं शक्यम्, यदहं शत्रुभिरपहृतं स्वराज्यं पुनः स्वायत्तीकर्तुं प्राभवम्, सोऽयं सकलः श्रीमन्महाराजमहासेनस्यैव प्रभावातिशयः। जयसाधनीभूतं च यद्धैर्यशक्त्युत्साहादि मया समासादितं तत्राऽपि महाराज एव कारणम्। तस्मात् महाराजमहासेनकृपैव मम सर्वथा अभ्युदयहेतुरिति भावः ॥८॥

❀ पूर्वोक्तं राजवचनं श्रुत्वा काञ्चुकीयो वदति—एष इति। एषः = पूर्वोक्तः।

और उसकी रक्षा न कर सका। कन्या का मरना सुनकर भी वे मेरे साथ आत्मीयता का ही व्यवहार करते हैं। इन सब बातों से वत्सदेश के फिर मिल जाने में राजा ही कारण हैं ॥ ८ ॥

काञ्चुकी—यह महाराज महासेन का सन्देश है। महारानी का सन्देश ये (आर्या वसुन्धरा) कहेंगी।

भवती कथयिष्यति ।

राजा—हा अम्ब ! ❀

षोडशान्तःपुरज्येष्ठा पुण्या नगरदेवता ।
मम प्रवासदुःखार्ता माता कुशलिनी ननु ॥ ९ ॥

सन्देशः = वाचिकम् । देव्याः = अङ्गारवत्याः । इह = भवतः पुरः । अत्रभवती = मान्या वासवदत्तोपमाता वसुन्धरा कथयिष्यति = निवेदयिष्यति ।

❀ वासवदत्तावियोगदुःखितो राजा देव्या नाम श्रुत्वैव वासवदत्तास्मरण-दुःखमभिनयति—हा-इति । हा अम्ब ! = मातः, कष्टम् ! अतिकष्टम् !! मम दैवदुर्विपाकाद्गता वासवदत्तेत्यर्थः ।

इत्थं शोकमभिनीय अम्बाया अङ्गारवत्याः कुशलं पृच्छति—षोडशेति ।

( अन्वयः ) षोडशान्तःपुरज्येष्ठा, पुण्या नगरदेवता, मम प्रवासदुःखार्ता माता, ननु कुशलिनी ?

( टीका ) षोडशान्तःपुरज्येष्ठा = षोडशसंख्यकानाम्, अन्तःपुराणाम् महा-राजमहासेनावरोधस्त्रीणाम्, ज्येष्ठा प्रधानभूता । कृताभिषेका पट्टराज्ञीति यावत् । पुण्या = पवित्रशीला । नगरदेवता = नगरस्य पुरस्य, देवता, पुरवासिसर्वजन-पूज्यत्वाद्देवतेव स्थिता । मम = मे । प्रवासदुःखार्ता = प्रवासदुःखेन, उज्जयिन्याः कौशाम्बीं प्रति प्रस्थाने वियोगदुःखेन, आर्ता पीडिता । माता = अम्बा अङ्गारवती देवी । ननु कुशलिनी = क्षेमयुक्ता अस्ति किम् ? अत्र पुण्या नगरदेवतेत्यनेना-ङ्गारवत्यां राज्ञः प्रगाढा भक्तिः सूच्यते । मातृशब्देन मातृवत्स्नेहः । मम प्रवास-दुःखार्तेत्यनेन स्वविषयकं वात्सल्यं च । षोडशान्तःपुरज्येष्ठेत्यनेन महासेनस्य भूपतेः षोडशमहिष्य आसन् इति च सूच्यते । "अनुष्टुब्" वृत्तम् ।

वासवदत्तास्मृतिशोकमभिनयन् राजा देव्या अङ्गारवत्याः कुशलं पृच्छति—या किल महाराजमहासेनस्य षोडशप्रधानमहिषीषु सर्वश्रेष्ठा पट्टराज्ञी वर्तते, पावनं च यस्याः शीलम्, नगरवासिनो जनाः देवतामिव यामाद्रियन्ते, सा ममोज्जयिन्याः कौशाम्बीं प्रति पलायनेन वियोगवेदनया दुःखिताऽभूत्, सा मे माता देवी अङ्गारवती कुशलयुक्ताऽस्ति किमिति भावः ॥ ९ ॥

राजा—हा ! माता !

धात्री—अरोआ भट्टिणी भट्टारं सव्वगदं कुसलं पुच्छदि। [ अरोगा भट्टिनी भर्तारं सर्वगतं कुशलं पृच्छति। * ]

राजा—सर्वगतं कुशलमिति ?। अम्ब ! ईदृशं कुशलम् †।

धात्री—मा दाणिं भट्टा अदिमत्तं सन्तप्पिदुं। [ मेदानीं भर्तातिमात्रं सन्तप्तुम्। ‡ ]

---

* धात्री वसुन्धरा देव्या अङ्गारवत्या आरोग्यं निवेद्य तया पृष्टं वत्सराजकुशलं निवेदयति—अरोआ—इति। अरोगा = रोगरहिता, सकुशलेति यावत्। भर्तारम् = भवन्तं वत्सराजम्। "अकथितञ्च" इत्यनेन कर्मसंज्ञा। सर्वगतम् = राज्यस्त्रीपरिजनादिविषयकम्। कुशलम् = क्षेमम्।

† देव्या अङ्गारवत्या कृतं सपरिवारस्याऽऽत्मनः कुशलप्रश्नमाकर्ण्य राजा सखेदं वदति—सर्वगतमिति। सर्वगतं कुशलमिति एतदनन्तरं 'पृच्छति' इति योज्यम्। दुर्दैवदग्धप्रियतमस्य मम कीदृक् सर्वगतं कुशलमम्बा पृच्छतीत्यर्थः। अम्ब != मातरङ्गारवति ! ईदृशं कुशलम् = प्रियायां वासवदत्तायां दग्धायामपि मन्दभाग्योऽहं यज्जीवामि, ईदृशमेव मे कुशलम्। वस्तुतस्तदकुशलमेवेत्यर्थः। अत्र स्वशोकं वचसाऽप्रकाश्य ध्वनिमर्यादयैव तं प्रकाशयतो राज्ञश्चेतसि वासवदत्तावियोगशल्यं गाढं निखातमिव प्रतीयते।

‡ राजानं वासवदत्तास्मरणेनात्यन्तं दुःखितं दृष्ट्वा धात्री तं समाश्वासयति—मा—इति। इदानीम् = अस्मिन् समये। अतिमात्रम् = भृशम्, अत्यन्तमित्यर्थः। सन्तप्तुम् = खेदं कर्तुम्। अर्हतीति शेषः। स्वदैवदुर्विलसितस्मरणेन भवता सविशेषं शोकः कर्तुं नोचित इत्यर्थः।

---

सोलह रानियों में सब से बड़ी, नगर देवता की सी पवित्र, मेरी बिदाई से दुःखी हुई माता जी तो कुशल से हैं न ! ॥ ९ ॥

धाई—हाँ, महारानी कुशल-पूर्वक हैं और यहाँ भी आप सब का कुशल समाचार पूछती हैं।

राजा—क्या सब का कुशल। माँ, यहाँ तो ऐसा ही कुशल है।

धाई—महाराज ! अब आप अधिक सन्ताप न कीजिये।

काञ्चुकीयः—धारयत्वार्यपुत्रः । उपरताप्यनुपरता महासेनपुत्री एवमनुकम्प्यमानार्यपुत्रेण * । अथवा,

कः कं शक्तो रक्षितुं मृत्युकाले
रज्जुच्छेदे के घटं धारयन्ति ।

* काञ्चुकीयोऽपि राजानं समाश्वासयति—धारयत्विति । धारयतु = आत्मानं पर्यवस्थापयतु । एवम् = इत्थम् । आर्यपुत्रेण = भवता । अनुकम्प्यमाना = प्रतिपलं स्मर्यमाणा । उपरतापि = मृतापि अनुपरता = जीवति । महासेनपुत्री=वासवदत्ता । भवता इत्थं प्रतिक्षणं स्मर्यमाणा महासेनदुहिता वासवदत्ता जीवत्येवेति मन्ये । अहो ! सौभाग्यं वासवदत्तायाः, यां भर्ता इत्थमविरतं स्मरतीत्याशयः । अत्रोपरताऽप्यनुपरतेति कथनेन पुनर्वासवदत्तासमागमो भविष्यतीति सूचितम् ।

वासवदत्ता वह्निदाहान्मया रक्षितुं न पारितेति विषयेऽपि भवता खेदः कर्तुं नोचित इत्याह—अथवेति । वासवदत्तारक्षणविधौ भवतोऽसामर्थ्यमपि दैवकृतमेवेत्यर्थः ।

क इति ।

(अन्वयः) मृत्युकाले कः कं रक्षितुं शक्तः, रज्जुच्छेदे के घटं धारयन्ति, एवम्, वनानाम्, तुल्यधर्मा लोकः काले छिद्यते काले रुह्यते च ।

(टीका) मृत्युकाले = मरणसमये, परमायुषः क्षयावसरे उपस्थिते इत्यर्थः । कः = नानाविधान् रक्षणोपायान् कुर्वाणोऽपि कः पुरुषः । कम् = प्रयत्नशतेन रक्ष्यमाणमपि कं देहधारिणम् । रक्षितुम् = मृत्योर्मुखादाच्छेत्तुम् । शक्तः—समर्थः । न कोऽपि, न कमपीत्यर्थः । क्षीणायुषो देहधारिणो मृत्युर्भवत्येवेति भावः । अत्र दृष्टान्तमाह—रज्जुच्छेद इति । रज्जुच्छेदे = रज्जोः कूपाज्जलग्रहणार्थं घटग्रीवायां बद्धस्य गुणस्य, छेदे भङ्गे सति के = कूपाज्जलोद्धरनाभिकाङ्क्षिणः के पुरुषाः । घटम् = रज्जुच्छेदेन मध्ये कूपं निपतन्तं कलशम् । धारयन्ति = गृह्णन्ति । घट-

काञ्चुकी—आर्यपुत्र ! धीरज धरिये । आप इस तरह प्रेम से जिनका स्मरण कर रहे हैं, वे महासेन की पुत्री वासवदत्ता मर कर भी जीती ही हैं । अथवा—

एवं लोकस्तुल्यधर्मा वनानां
काले काले छिद्यते रुह्यते च ॥१०॥

मघः पतनान्निरोद्धुं शक्नुवन्ति । न केऽपीत्यर्थः । छिन्नरज्जुर्हि कलशोऽघः पतत्येवेत्यर्थः । घटबन्धनगुणस्य रज्जोरविच्छेदे तु ये केऽपि सर्वे घटं धारयितुं क्षमन्ते, छिन्नायां रज्जौ यथा न केऽपि घटं धारयितुं प्रभवति, तथैव जीवस्य आयुर्बले अक्षीणे सति क्रियमाणाः सर्वेऽपि तद्रक्षणोपायाः सफलाः भवन्ति, समाप्ते त्वायुषि न केनाऽपि किमपि कर्तुं शक्यते । अतो जीवनमरणे दैवायत्ते विचिन्त्य भवता किमपि नानुशोचनीयमिति भावः । एवम् = अनेन प्रकारेण, देहधारिणां जीवनमरणयोर्दैवायत्तत्वेन । वनानाम् = अरण्यानाम्, तत्रत्यवृक्षाणामित्यर्थः, तुल्यधर्मा = तुल्यः समानः, धर्मः विनाशोत्पत्तिरूपो न्यायः स्वभावो वा यस्य तथाविधः । "धर्माः पुण्य-यम-न्याय-स्वभावाचार-सोमपाः" इत्यमरः । लोकः = संसारः । काले = योग्यकाले । छिद्यते = छेदं प्राप्नोति, नश्यतीत्यर्थः । काले = योग्यसमये । रुह्यते च = प्ररोहति, पुनरुत्पद्यते च । सर्वथा दैवपरतन्त्रोऽयं संसार इति तत्त्वम् । समानार्था सूक्तिर्यथा महाकवेर्माघस्य—

प्रतिकूलतामुपगते हि विधौ, विफलत्वमेति बहुसाधनता ।
अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि ॥ इति ॥

अत्र दृष्टान्तोऽलङ्कारः । "शालिनी वृत्तम्" ।

शरीरिणां जन्ममरणे सर्वथा दैवाधीने एव भवतः, अतो भवता वासवदत्ताविषये नानुशोचनीयमिति राजानं समाश्वासयन् काञ्चुकीयो वदति—राजन् ! दैवाधीनोऽयं संसारः, यथा—अवलम्बनरज्जोः सद्भाव एव घटः कूपान्तर्लम्बमानस्तिष्ठति, छिन्नायामवलम्बनरज्जौ कूपे पतन्तं घटं को नाम रोद्धुं समर्थः ? तथैव परमायुषः क्षये सति म्रियमाणं शरीरिणमश्विनीकुमारावपि रक्षितुं न क्षमौ ।

मौत के समय कौन किसको बचा सकता है । रस्सी के टूट जाने पर लटके हुए घड़े को कौन रोक सकता है । इसी तरह मनुष्य भी वृक्षों के समान—जैसे वृक्ष समय आने पर काटे जाते हैं और समय आने पर उगते हैं—समय समय पर मरते और उत्पन्न होते रहते हैं ॥ १० ॥

राजा—आर्य ! मा मैवं, *

**महासेनस्य दुहिता शिष्या देवी च मे प्रिया।**
**कथं सा न मया शक्या स्मर्तुं देहान्तरेष्वपि ॥११॥**

गतो वृद्धिक्षयौ हि अदृष्टेनैव नियम्येते, अरण्यस्था वृक्षा हि तेषां नाशकाले समु-स्थिते स्वयमेव शुष्यन्तो विनश्यन्ति, उत्पत्तिकाले च समुपस्थिते प्ररोहन्ति। इत्येव जगतो गतिरिति भवता वासवदत्ताविषये शोको न कर्तव्य इति भावः।१०।

*वासवदत्ताविषये नानुशोचनीयमिति वदन्तं काञ्चुकीयं राजा वदति—आर्य-ति। आर्य !=मान्य ! काञ्चुकीय ! मा मैवम्=एवं न वक्तव्यमित्यर्थः। वासवदत्ता हि मया स्मृतिपथादपनेतुं न शक्यत इति भावः।

तदेवाऽऽह—महासेनस्येति।

(अन्वयः) महासेनस्य दुहिता मे प्रिया शिष्या प्रिया देवी च सा देहान्त-षु, अपि मया स्मर्तुं कथं न शक्या।

(टीका) महासेनस्य=मम परमोपकारिणः पितृकल्पस्य प्रद्योतभूपतेः। दुहिता=तनया। मे=मम। प्रिया शिष्या=वीणावादनात्मके ललिते कला-विधावन्तरङ्गशिष्या। प्रिया=प्राणवल्लभा। देवी=महिषी च सा=वासवदत्ता। देहान्तरेष्वपि=जन्मान्तरेष्वपि। किमुत एतस्मिन् देहे। मया=उदयनेन। स्मर्तुम्=चिन्तयितुम्। कथं=केन प्रकारेण। न शक्या=अपि तु शक्यैवेत्यर्थः। महासेनस्य दुहिता—इत्येक एव हेतुर्वासवदत्तायाः संस्मरणाय पर्याप्तः, किमुत समुदिता बहवोऽमी। जीवनान्तपर्यन्तं सा मया विस्मर्तुं न शक्यत इति भावः। अनुष्टुब् वृत्तम्।

वासवदत्ताया विस्मरणं सर्वथा अशक्यमिति राजा काञ्चुकीयमाह—आर्य ! काञ्चुकीय ! वासवदत्ता मया नानुशोचनीयेति भवतः कथनं नोचितम्, यतः मम

राजा—आर्य ! ऐसा न कहिये।

वह महासेन की पुत्री, मेरी प्रिय सङ्गीत-शिष्या और प्रिय रानी थी। मैं उसे जन्म जन्मान्तर में भी कैसे याद नहीं कर सकता ? (अर्थात् उसे मैं कभी भी भुलाये नहीं भूल सकता)॥ ११॥

धात्री—❀ आह भट्टिणी—उवरदा वासवदत्ता । मम वा महासेणस्स वा जादिसा गोवालअपालआ तादिसो एव्व तुमं पुढमं एव्व अभिप्पेदो जामादुअत्ति । एदण्णिमित्तं उज्जइणिं आणीदो । अणग्गिसक्खिअं वीणाववदेसेण दिण्णा । अत्तणो चवलदाए अणिव्वुत्तविवाहमङ्गलो एव्व गदो । अह्अ अह्मेहिं तव अ वासवदत्ताए अ पडिकिदिं

परमोपकारिणः पितृकल्पस्य महाराजमहासेनस्य सा दुहिता, वीणावादनात्मके ललिते कलाविषौ सा ममाऽन्तरङ्गशिष्या, किञ्च मम प्राणवल्लभा पट्टराज्ञी च सा मया जन्मान्तरेष्वपि विस्मर्तुं न शक्यते, किमुत एतस्मिन् जन्मनि । सा महाराजमहासेनस्य दुहितेत्येक एव हेतुस्तस्याः स्मरणरक्षणायालम् , किमुत समुदिता बहवोऽमी, तस्मात् सर्वथा अशक्यमेव वासवदत्ताविस्मरणमिति भावः ॥ ११ ॥

❀ अथ वासवदत्तोपमाता वसुन्धरा महाराज्ञ्या अङ्गारवत्याः सन्देशशेषं वदति—आह-इति । भट्टिनी = स्वामिनी, अङ्गारवती । आह—सन्दिशति । सन्देशशेषमाह—उवरदा-इति । वासवदत्ता तु मृतैव, तद्विषये किमधुना वक्तव्यमित्यर्थः । मम = अङ्गारवत्याः । महासेनस्य वा = महाराजप्रद्योतस्य वा । अत्र वाद्वयं चार्थे ज्ञेयम् । यादृशौ = यथा प्राणप्रियौ । गोपालकपालकौ = गोपालकपालकनामानौ पुत्रौ । तादृश एव = तत्समानः पुत्रतुल्य एव । प्रथममेव = उज्जयिन्यां तवानयनात् पूर्वमेव, त्वया कृताद् वासवदत्तापहरणात् पूर्वमेव वा । अभिप्रेतः = मनसा सङ्कल्पितः । जामातेति = मम दुहितुर्वासवदत्तायाः पतिरिति । त्वया तु वृथैव निजमविनयं प्रदर्शयता वासवदत्तापहारः कृतः । आवाभ्यां तु प्रथमत एव तुभ्यं वासवदत्ता देयेति संकल्पितमासीत् । अतस्त्वं पुत्रतुल्योऽसीत्यर्थः । एतन्निमित्तम् = वासवदत्तया सह तव विवाहं सम्पादयितुमेव । उज्जयिनीमानीतः = हस्तिग्रहणपराधव्याजेन स्वराजधानीमुज्जयिनीं प्रापितः । अनग्निसाक्षिकम् = अग्निः वैवाहिकः संस्कृतोऽग्निः, साक्षी वधू-वरयोः पाणिग्रहणसम्बन्धस्य साक्षाद्द्रष्टा यस्मिन्

धाई—महारानी ने कहा है कि, वासवदत्ता तो मर गई । परन्तु मेरे और महासेन के लिये जैसे गोपालक और पालक दोनों लड़के हैं, वैसे ही तुम भी हो । ( क्योंकि ) हम लोग पहले ही से तुमको अपना दामाद बना चुके थे ।

चित्तफलआए आलिहिअ विवाहो णिव्वुत्तो। एसा चित्तफलआ तव सआसं पेसिदा। एदं पेक्खिअ णिव्वुदो होहि। [ आह भट्टिनी—उपरता वासवदत्ता। मम वा महासेनस्य वा यादृशौ गोपालकपालकौ, तादृश एव त्वं प्रथममेवाभिप्रेतो जामातेति। एतन्निमित्तमुज्जयिनीमानीतः। अनग्निसाक्षिकं वीणाव्यपदेशेन दत्ता। आत्मनश्चपलतयाऽनिर्वृत्तविवाहमङ्गल एव गतः। अथ चावाभ्यां तव च वासवदत्तायाश्च प्रतिकृतिं चित्रफलकायामालिख्य विवाहो निर्वृत्तः। एषा चित्रफलका तव सकाशं प्रेषिता। एतां प्रेक्ष्य निर्वृत्तो भव। ]

---

क्रियाकर्मणि, तत्र भवतीति तथा, विधिवदग्निसाक्ष्येण विवाहमकृत्वेत्यर्थः। वीणाव्यपदेशेन = वीणायाः वीणावादनकलाशिक्षायाः, व्यपदेशः छलम्, तेन। "भवता वासवदत्तायै वीणावादनकलाशिक्षणीया" इति बहिः प्रकाश्येत्यर्थः। दत्ता = तुभ्यमर्पिता। आत्मनः = स्वस्य। चपलतया = अधीरतया। अनिर्वृत्तविवाहमङ्गल एव = न निर्वृत्तं सञ्जातम्, विवाहमङ्गलं विवाहरूपो मङ्गलसंस्कारो यस्य तथाविध एव गतः = वासवदत्तामपहृत्य कौशाम्बीं प्रति पलायितः। अथ च = इत्थमावामनापृच्छ्य वासवदत्तया सह त्वयि पलायिते सति, तदनन्तरम्। आवाभ्याम् = मया महाराजेन च। प्रतिकृतिम् = युष्मदाकारसंवादिचित्रम्। चित्रफलकायाम् = चित्राधारभूते पटे फलके वा। आलिख्य = लिखित्वा, निर्माय। विवाहः = विवाहसंस्कारः। निर्वृत्तः = सम्पादितः। चित्रफलका = चित्राधारभूतं काष्ठफलकम्। तव = उदयनस्य। सकाशम् = समीपे। प्रेषिता = प्रहिता। एनाम् = चित्रफलकाम्, चित्रफलकस्थितां वासवदत्ताप्रतिकृतिं वा। प्रेक्ष्य = दृष्ट्वा।

---

इसी कारण तुम्हें उज्जयिनी में लाये थे और अग्नि साक्षी किये बिना ही वीणा सिखाने के बहाने वासवदत्ता को तुम्हारे हाथ सौंपा था, किन्तु अपनी चञ्चलता के कारण विवाह-मङ्गल हुए बिना ही तुम उसे लेकर चले गये। अब हम लोगों ने तुम्हारा और वासवदत्ता का चित्र इस चित्रपट पर बना कर तुम्हारा विवाह-कार्य सम्पादन कर दिया है। यह चित्रपट तुम्हारे पास भेज रही हूँ। तुम इसे देख कर शान्ति लाभ करो।

राजा—अहो अतिस्निग्धमनुरूपं चाभिहितं तत्रभवत्या । *

वाक्यमेतत् प्रियतरं राज्यलाभशतादपि ।
अपराद्धेष्वपि स्नेहो यदस्मासु न विस्मृतः ॥१२॥

निर्वृत्तो भव=सुखी भव । चित्रफलकमात्रे वासवदत्तामूर्तिं दर्शं दर्शं कथमप्यात्मानं पर्यवस्थापयेत्यर्थः ।

* देव्या अङ्गारवत्याः सन्देशं श्रुत्वा राजा प्रशंसति—अहो—इति । अहो इत्यानन्दे । अतिस्निग्धम्=स्नेहातिशयार्द्रम् । अनुरूपं च=गुरुजनवात्सल्यानुगुणं च । अभिहितम्=सन्दिष्टम् । तत्रभवत्या=पूज्यया अम्बया अङ्गारवत्या ।

अङ्गारवतीसन्देशस्यातिस्निग्धत्वं प्रदर्शयति—वाक्यमिति ।

( अन्वयः ) एतत् वाक्यम् राज्यलाभशतात् अपि प्रियतरम्, यत् अपराद्धेष्वपि अस्मासु स्नेहः न विस्मृतः ।

( टीका ) एतत् वाक्यम्=भवता भवत्या मुखान्मया श्रुतं अम्बाया अङ्गारवत्याः सन्देशवचनम् । राज्यलाभशतादपि—शतशब्दोऽत्र बहुत्वबोधकः, सहस्राधिकराज्यप्राप्तेरपि । प्रियतरम्=अतिप्रियम्, चित्ताह्लादकमस्तीत्यर्थः । ममेति शेषः । यत्=यस्मात् कारणात् । अपराद्धेष्वपि=कन्यापहरणाद्यविनयाचरणेन कृतापराधेष्वपि । अस्मासु=मयि उदयने । स्नेहः=आत्मीयभावस्तन्मूलकं वात्सल्यं च । न विस्मृतः=स्मृतिपथान्नापनीतः, अद्याप्यनुवर्तत एवेत्यर्थः । "अनुष्टुप्" वृत्तम् ।

देव्या अङ्गारवत्याः सन्देशस्यातिस्निग्धत्वं राजा वर्णयति—धात्रि ! वसुन्धरे ! अम्बया देव्या अङ्गारवत्या यत् सन्दिष्टं तदतिस्निग्धं वर्तते, इदमम्बायाः सन्देशवाक्यं मम तु सहस्राधिकराज्यप्राप्तेरप्याधिकं प्रियतरं चित्ताह्लादकं च वर्तते । अचिरेणैव सञ्जाताऽपि राज्यप्राप्तिस्तथा मां न प्रीणयति, यथेदमम्बायाः सन्देशवचनम्, येन

राजा—अहा ! महारानी ने क्या ही प्रेमभरी और अपने अनुरूप ही बातें कही हैं ।

ये बातें तो मुझे सैकड़ों राज्यलाभों से भी अधिक प्रिय हैं । क्योंकि मुझ जैसे अपराधी पर भी उनका इतना स्नेह अब तक बना हुआ है ॥ १२ ॥

पद्मावती—अय्यउत्त ! चित्तगदं गुरुअणं पेक्खिअ अभिवादेदुं इच्छामि । [ आर्यपुत्र ! चित्रगतं गुरुजनं प्रेक्ष्याभिवादयितु-मिच्छामि । * ]

धात्री—पेक्खदु पेक्खदु भट्टिदारिआ । ( चित्रफलकां दर्शयति ) [ प्रेक्षतां प्रेक्षतां भर्तृदारिका । † ]

पद्मावती—‡( दृष्ट्वा आत्मगतम् ) हं अदिसदिसी खु इअं अय्याए आवन्तिआए । ( प्रकाशम् ) अय्यउत्त ! सदिसी खु इअं अय्याए । [ हम्

दुरात्मना मया तस्याः कन्या बलादपहृता, तस्मिन् कृतघोरापराधेऽपि मयि आत्मीयं स्नेहं पूर्ववदेव प्रदर्शयन्त्या क्षमाशीलया सकरुणोदारचित्तया अम्बया अङ्गारवत्या यदीदृशं वात्सल्यं प्रदर्श्यते तत्तस्याः क्षमाशीलताया अनुरूपमेव, स्नेहाप्लुतं तस्या वाचिकं च ममाऽत्यन्तं प्रियमिति भावः ॥ १२ ॥

* चित्रफलके वासवदत्ताप्रतिकृतिं द्रष्टुं सोत्कण्ठा पद्मावती राजानं वदति—अय्यउत्त-इति । चित्रगतम् = चित्रलिखितम् । गुरुजनम् = ज्येष्ठाम्, अत एव पूज्यां सपत्नीं वासवदत्तां च । अभिवादयितुम् = नमस्कर्तुम् ।

† पद्मावत्याः चित्रफलकदर्शने प्रभूतामुत्कण्ठां दृष्ट्वा धात्री तां चित्रफलकं दर्शयति—पेक्खदु—इति । द्विरुक्त्या आदरः सूच्यते । चित्रफलकमिति शेषः । राजकुमारी पद्मावती सानन्दमिदं चित्रफलकं पश्यत्वित्यर्थः ।

‡ चित्रफलके लिखिताया वासवदत्ताया आकृतिं स्वान्तिकन्यस्ताया अर्थिभगिन्या आवन्तिकाया आकृत्या सह संवदन्तीमालक्ष्य पद्मावती सशङ्कं स्वगतं विमृशति—हं—इति । हमिति शङ्कायाम् । अतिसदृशी = अत्यन्तं समाना । खलु = निश्चयेन । आर्यायाः आवन्तिकायाः = अर्थिभगिन्याः । इत्थं मनसि शङ्कमाना

पद्मावती—आर्यपुत्र ! चित्र में अपने गुरुजन को देखकर मैं प्रणाम करना चाहती हूँ ।

धाई—देखिये, राजकुमारी जी, देखिये ।

( चित्रपट दिखलाती है )

पद्मावती—( देखकर आप ही आप ) अरे ! यह तो आर्या अवन्तिका से

अतिसदृशी खल्वियमार्याया आवन्तिकायाः। आर्यपुत्र ! सदृशी खल्वियमार्यायाः। ]

राजा—न सदृशी। सैवेति मन्ये। भोः कष्टम्, *

अस्य स्निग्धस्य वर्णस्य विपत्तिर्दारुणा कथम्।
इदं च मुखमाधुर्यं कथं दूषितमग्निना ॥१३॥

पद्मावती प्रकाशं राजानमाह—अय्यउत्त—इति। सदृशी=समाना। इयम्=चित्रफलके आलिखिता प्रतिकृतिः। आर्यायाः=पूज्यायाः वासवदत्तायाः। स्वामिन् ! चित्रफलके लिखितेयं प्रतिकृतिः आर्याया वासवदत्तायाः सदृशी वर्तते किमिति प्रश्नः।

* राजोत्तरयति—नेति। न सदृशी = केवलं सदृश्येवेति न अपि तु, सैवेति मन्ये=साक्षादेव वासवदत्ता मम पुरः स्थितेति सम्भावयामि ।। चित्रकारेणास्यां प्रतिकृतौ वासवदत्तायाः पूर्णं सादृश्यमुट्टङ्कितमित्याशयः। तथाविधं चित्रं दृष्ट्वा राजा कष्टं नाटयति—भोः कष्टमिति। भो ! दुर्दैव ! महति कष्टेऽहं निपातितस्त्वयेत्यर्थः।

तदेव कष्टं वर्णयति—अस्येति।

( अन्वयः ) अस्य स्निग्धस्य वर्णस्य दारुणा विपत्तिः कथम्, इदम् मुखमाधुर्यं च, अग्निना कथं दूषितम्।

( टीका ) अस्य=मया पुरोदृश्यमानस्य। स्निग्धस्य=स्नेहरसपूर्णस्य, नयनाकर्षकस्य। वर्णस्य=वासवदत्तारूपस्य। दारुणा=अग्निदाहनिमित्तत्वात् क्रूरा, अत एव विसदृशी। विपत्तिः=अकालमृत्युरूपो नाशः। कथम्=किमिति सञ्जातेत्यर्थः। इदम्=चित्रे स्पष्टमनुभूयमानम्। मुखमाधुर्यम्=मुखस्य आननस्य, माधुर्यम् मधुरता, आकर्षकत्वम् च अग्निना=वह्निना। कथं दूषितम्=किमिति विकोपितम्। "अनुष्टुप्" वृत्तम्।

मिलती जुलती है। ( प्रकट ) आर्यपुत्र ! क्या यह चित्र आर्या वासवदत्ता के सदृश ही है।

राजा—सदृश ही नहीं। मुझे तो मालूम होता है कि, साक्षात् वही हैं। हा ! शोक !

पद्मावती—अय्यउत्तस्स पडिकिदिं पेक्खिअ जाणामि इअं अय्याए सदिसी ण वेत्ति। [ आर्यपुत्रस्य प्रतिकृतिं प्रेक्ष्य जानामीयमार्यया सदृशी न वेति। ❀ ]

चित्रफलके चित्रकारेण सुनिपुणमालिखितां सदृशीं वासवदत्तायाः प्रतिकृतिं दृष्ट्वा समुद्बुद्धशोको राजा कष्टमनुभवन्नाह—सरसस्य नयनाकर्षकस्य शुभलक्षणः संयुक्तस्य मया चित्रेऽनुभूयमानस्य वासवदत्तारूपस्याऽग्निदाहनिमित्तत्वादतिक्रूरा अकालमृत्युरूपा विपत्तिः कथं सञ्जाता। प्रायः ईदृशरूपशालिनी आकृतिरग्निदाहादिनिमित्तैरकालमृत्युभिर्नाभिभूयते, इयं च कथं व्यापन्ना। किञ्च चित्रे स्पष्टं प्रतीयमानमिदं मुखमाधुर्यं लावण्यग्रामदाहावसरेऽग्निना कथं विलोपितम्? हा! धिक्! लोकोत्तरा माधुर्यसारा असौ विधेः रचना कथमकाल एव कवलिता कालेनेति घोरमहं कष्टमनुभवामीति भावः॥ १३॥

❀ वासवदत्तायाः प्रतिकृतेः यथार्थत्वे राज्ञा स्वयमुक्तेऽपि वासवदत्तां स्वरूपेणाजानन्ती पद्मावती परिचितस्य राज्ञः प्रतिकृतेः याथार्थ्यज्ञानेन वासवदत्ताप्रतिकृतेरपि याथार्थ्यमवगन्तुमाह—अय्यउत्तस्स–इति। आर्यपुत्रस्य = स्वामिन उदयनस्य। प्रतिकृतिम् = चित्रम्। जानामि = निर्णेष्यामि। भविष्यति लट्। इयम् = मम पुरश्चित्रफलके स्थिता वासवदत्तायाः प्रतिकृतिः। आर्यायाः = वासवदत्तायाः। सदृशी न वा = समाना, असमाना वा। यद्यस्मिन् चित्रे आर्यपुत्रस्य प्रतिकृतिश्चित्रकारेण सदृशी चित्रिता भवेत्, तर्हि तेनैव चित्रकारेण चित्रिताऽऽर्याया वासवदत्तायाः प्रतिकृतिरपि सदृश्येव भवेत्। आर्यपुत्रप्रतिकृतिदर्शनेनैव मयेदं निर्णेतुं शक्यमित्यर्थः।

ऐसे सुन्दर स्वरूप पर इस तरह की कठिन विपत्ति कैसे आ गयी। अग्नि ने इस मुख लावण्य को कैसे नष्ट कर दिया॥ १३॥

पद्मावती—आर्यपुत्र का चित्र देख कर यह दूसरा चित्र आर्या के समान है या नहीं, यह मैं समझ लूँ।

धात्री—पेक्खदु पेक्खदु भट्टिदारिआ। [ प्रेक्षतां प्रेक्षतां भर्तृदारिका। ❀ ]

पद्मावती—(दृष्ट्वा) अय्यउत्तस्स पडिकिदीए सदिसदाए जाणामि इअं अय्याए सदिसि त्ति। [ आर्यपुत्रस्य प्रतिकृत्याः सदृशतया जानामीयमार्यया सदृशीति। † ]

राजा—देवि! चित्रदर्शनात् प्रभृति प्रहृष्टोद्विग्नामिव त्वां पश्यामि। किमिदम् ‡।

❀ धात्री पद्मावत्याः हस्ते राजप्रतिकृतियुक्तं चित्रफलकं निधाय वदति—पेक्खदु—इति। द्विरुक्त्या प्रेक्षणस्याऽऽवश्यकत्वं सूच्यते। अवश्यमिदं चित्रं पश्यतु राजकुमारी, अवधारयतु च प्रतिकृतेर्याथार्थ्यमयाथार्थ्यं वेत्यर्थः।

† राज्ञः प्रतिकृतिं दृष्ट्वा तत्र तत्सादृश्यमनुभूय पद्मावती वदति—अय्यउत्तस्स-इति। प्रतिकृत्याः = प्रतिमायाः। सदृशतया = आर्यपुत्रसादृश्येन। जानामि = अनुमिनोमि। इयम् = वासवदत्ताप्रतिकृतिः। आर्यया = वासवदत्तया। सदृशी = तुल्या। पत्युश्चित्रगतं सादृश्यं विलोक्य वासवदत्ताया अपि चित्रगतं सादृश्यमनुमिनोमि, तथा च वासवदत्ताया एवेदं चित्रमिति विश्वसिमीत्यर्थः।

‡ वासवदत्ताचित्रं दृष्ट्वा "नूनमियमावन्तिकैव" इति तर्केण प्रहृष्टामिव, "कदाचिदीदृगाकारसंवादो भवति, अन्यैव काचिदेषा स्यात्" इति सन्देहप्रादुर्भावेणोद्विग्नामिव च पद्मावतीं दृष्ट्वा राजा पृच्छति—देवीति। देवि = प्रिये! पद्मावति!। चित्रदर्शनात् प्रभृति = वासवदत्ताचित्रदर्शनमारभ्य। प्रहृष्टोद्विग्नाम् = प्रहृष्टा हर्षयुक्ता प्रसन्ना, उद्विग्ना व्याकुला च, तामिव। किमिदम् = परस्परविरुद्धावेतौ भावौ कथं त्वदानने संलक्ष्येते। यतः प्रभृति त्वया वासवदत्तायाश्चित्रं दृष्टम्, ततः प्रभृति त्वं क्षणं प्रसन्ना क्षणं व्याकुला च दृश्यसे, किमत्र कारणं तत् कथयेति भावः।

धाई—देखिये, देखिये, राजकुमारी जी।

पद्मावती—(देखकर) आर्यपुत्र के चित्र की सदृशता देखने ही से मालूम होता है कि, यह भी ठीक आर्या वासवदत्ता का ही चित्र है।

राजा—देवी, चित्र देखने के समय से ही मैं तुमको प्रसन्न और उद्विग्न देख रहा हूँ। यह क्या बात है?

पद्मावती—अय्यउत्त ! इमाए पडिकिदीए सदिसी इह एव्व पडिवसदि । [ आर्यपुत्र ! अस्याः प्रतिकृत्याः सदृशी इहैव प्रतिवसति । ❀ ]

राजा—किं वासवदत्तायाः † ।

पद्मावती—आम । ‡

राजा—तेन हि शीघ्रमानीयताम् § ।

पद्मावती—▽अय्यउत्त ! मम कण्णाभावे केणवि बह्मणेण मम भइः

❀ पद्मावती तत्कारणं वदति = अय्यउत्त-इति । अस्याः = प्रतिकृत्याः अस्य वासवदत्ताचित्रस्य । सदृशी = समानाकृतिः । इहैव = अस्मिन् मन्दिर एव । प्रतिवसति = वर्तते । अनेन चित्रेण समानाकारा काचिद्वनिता मदन्तिके तिष्ठतीत्यर्थः ।

† पद्मावत्या वचनं श्रुत्वा राजा सोत्कण्ठं पृच्छति—किमिति । वासवदत्तायाः, सदृशीति शेषः । किं वासवदत्ताचित्रसमानाकृतिः काचिद्वनिता त्वदन्तिके वर्तते इति प्रश्नः ।

‡ वासवदत्ता स्वीकुरुते—आम-इति । आमित्यङ्गीकारे । वर्तते काऽपि तादृशी वनिता मत्समीपे इत्यर्थः ।

§ पद्मावत्युत्तरं श्रुत्वा "कदाचिदियं वासवदत्ता स्यात्" इति सम्भावनया राजा सकुतूहलं तामानेतुमादिशति—तेन हीति । तेन हि = यदि वासवदत्ताचित्रसमानाकृतिर्वनिता त्वदन्तिक एव वर्तते तर्हि शीघ्रमानीयताम् = त्वरितमिहोपस्थाप्यताम् ।

▽ पद्मावती तस्या वनितायाः स्वान्तिकावासवृत्तान्तं, तस्याः इहानयनस्य दुष्करत्वं च वर्णयति—अय्यउत्त-इति । मम = पद्मावत्याः । कन्याभावे = कुमा-

पद्मावती—आर्यपुत्र ! ठीक इसी चित्र के समान रूपवाली स्त्री यहाँ ही रहती है ।

राजा—क्या वासवदत्ता के समान ।

पद्मावती—हाँ ।

राजा—तो उसे जल्दी लिवाय आओ ।

पद्मावती—आर्यपुत्र ! जब मैं कन्या थी, तभी किसी ब्राह्मण ने 'यह

णिअत्ति ण्णासो णिक्खित्तो। पोसिदभत्तुआ परपुरुसदंसणं परिहरदि। ता अय्यं मए सह आअदं पेक्खिअ जाणादु अय्यउत्तो। [ आर्यपुत्र ! मम कन्याभावे केनापि ब्राह्मणेन मम भगिनिकेति न्यासो निक्षिप्तः। प्रोषितभर्तृका परपुरुषदर्शनं परिहरति। तदार्यां मया सहागतां प्रेक्ष्य जानात्वार्यपुत्रः।]

राजा—

यदि विप्रस्य भगिनी व्यक्तमन्या भविष्यति।
परस्परगता लोके दृश्यते रूपतुल्यता ॥१४॥

रीत्वे। विवाहात् पूर्वमित्यर्थः। मम भगिनिकेति = प्रोषितभर्तृका ममेयं स्वसा कञ्चित्कालं यावदस्याः पतिर्न परावर्तते, तावद्रक्षणीयेति प्रार्थ्य। न्यासो = निक्षेपः। निक्षिप्तः=स्थापितः। सा स्वभगिनी ममान्तिके न्यासरूपेण स्थापितेत्यर्थः। प्रोषितभर्तृका = प्रोषितः प्रवासं गतः, भर्ता पतिर्यस्याः सा। असन्निहितभर्तृकेति यावत्। परपुरुषदर्शनम् = स्वपतीतरपुरुषमुखावलोकनम्। परिहरति = वर्जयति। तत् = तस्मात् कारणात्। आर्याम् = मदन्तिके न्यस्तामर्थिभगिनीम्। मया सह आगताम् = मया केनापि व्याजेनाऽऽत्मना सह समानीताम्। दृष्ट्वा — गूढं विलोक्य। जानात्वार्यपुत्रः = इयं सैव, अन्या वेत्यार्यपुत्रोऽवधारयतु। सा किल परपुरुषमुखाऽवलोकनं न करोतीति तामहं केनापि व्याजेनाऽऽत्मना सह इह समानेष्यामि। आर्यपुत्रस्तां विलोक्य सैवेयमन्या वेति निर्धारयत्वित्यर्थः। अत्र "ता अय्या पेक्खदु सदिसी ण वेत्ति" इति पाठान्तरम्। तत्र "तदार्या पश्यतु सदृशी न वेति" इति संस्कृतच्छाया। आर्या = वासवदत्ताधात्री वसुन्धरा। पश्यतु = अवलोकयतु। सदृशी = वासवदत्ताचित्रसमानाकृतिरिति व्याख्येयम्। पूर्वस्य पाठस्य केचित्। पूर्वापरविरोधादुपेक्ष्यत्वं वदन्ति वयं तेषामभिप्रायमवगन्तुं न पारयामः।

राजा पद्मावत्या मुखात् सा ब्राह्मणभगिन्यस्तीति श्रुत्वा तस्या वासवदत्तात्वे सन्दिहानो वदति—यदीति।

मेरी बहन है' ऐसा कह कर मेरे पास उसे थाती रक्खा है। वह पति-वियोगिनी है। इसलिये दूसरे पुरुष का दर्शन करना नहीं चाहती। इसलिये आर्या आवन्तिका को किसी बहाने मैं अपने साथ लाती हूँ। आर्यपुत्र उसे देखें कि वह युवती वासवदत्ता ही है या कोई और!

( प्रविश्य ) ❀

प्रतीहारी—†जेदु भट्टा। एसो उज्जइणीओ बह्मणो, भट्टिणीए हत्थे

( अन्वयः ) यदि सा विप्रस्य भगिनी, ( तर्हि ) व्यक्तम् अन्या भविष्यति। लोके परस्परगता रूपतुल्यता दृश्यते।

( टीका ) यदि = चेत्। सा = त्वया वासवदत्तेति सम्भाव्यमाना अवन्तिका। विप्रस्य = न्यासरूपेण तां त्वयि निक्षेप्तुर्ब्राह्मणस्य। भगिनी = स्वसा भवेत्। तर्हि, व्यक्तम् = स्फुटम्, निश्चयेनेत्यर्थः। अन्या = वासवदत्ताव्यतिरिक्ता काचिदपरा भविष्यति, न तु वासवदत्तेत्यर्थः। यतः, लोके = जगति। परस्परगता = पारस्परिकी। एकस्या व्यक्तेरपरया सहेत्यर्थः। रूपतुल्यता = समानरूपता, आकृतिसादृश्यकम्। दृश्यते = अवलोक्यते। लोके तुल्यरूपा अपि बहवः सन्तीत्याशयः। "अनुष्टुब्" वृत्तम्।

पद्मावतीसन्निधौ वर्तमाना स्त्री ब्राह्मणस्य भगिन्यस्तीति श्रुत्वा तस्या वासवदत्तात्वे सन्दिहानो राजा वितर्कयति—प्रिये! पद्मावति! त्वया वासवदत्तात्वेन सम्भाव्यमाना त्वत्सन्निधौ वर्तमाना सा वनिता यदि विप्रस्य भगिन्यस्ति, तर्हि निश्चयेन सा काचिदन्यैव, न वासवदत्ता। क्षत्रियकुलोद्भूता वासवदत्ता विप्रस्य भगिनी भवितुं कथमपि नार्हति। यदुच्यते–रूपसादृश्यमस्तीति, तदप्यकिञ्चित्करम्। यतो जगति समानाकृतयो बहवो जना दृश्यन्ते, केवलमाकृतिसादृश्यादेव सा वासवदत्तैवेति सम्भावनमनुचितमिति भावः ॥१४॥

❀ प्रतीहार्याः प्रवेशं सूचयति—प्रविश्येति।

† प्रविष्टा प्रतीहारी वदति—जेदु–इति। जयतु भर्ता = स्वामिनो विजयोऽस्तु। अयं समुदाचारः। एषः = अयम्, उपस्थापयिष्यमाणः उज्जयिनी-

राजा—यदि वह ब्राह्मण की बहन है तो निश्चय दूसरी ही होगी। क्योंकि—संसार में बहुतों के रङ्गरूप एक दूसरे से मिलते जुलते दिखलाई पड़ते हैं॥

( प्रतीहारी का प्रवेश )

प्रतीहारी—महाराज की जय हो। उज्जयिनी का रहने वाला एक ब्राह्मण द्वार पर आया है और कहता है कि मैं अपनी बहन को राजकुमारी के

मम भइणिअ त्ति ण्णासो णिक्खित्तो, तं पडिग्गहिदुं पडिहारं उवट्ठिदो। [ जयतु भर्ता। एष उज्जयिनीयो ब्राह्मणः, भट्टिन्या हस्ते मम भगिनिकेति न्यासो निक्षिप्तः, तं प्रतिग्रहीतुं प्रतिहारमुपस्थितः। ]

राजा—पद्मावति ! किन्नु स ब्राह्मणः।※

पद्मावती—होदव्वं। [ भवितव्यम् ]। †

राजा—शीघ्रं प्रवेश्यतामभ्यन्तरसमुदाचारेण स ब्राह्मणः। ‡

---

निवासी। ब्राह्मणः = विप्रः। भट्टिन्याः = स्वामिन्याः पद्मावत्याः। हस्ते = करे, पद्मावतीसन्निधावित्यर्थः। मम भगिनिकेति = ममेयं भगिनी त्वया रक्ष्यतामित्युक्त्वा। न्यासः = निक्षेपः। निक्षिप्तः=स्थापितः। तम् = न्यासम्। प्रतिग्रहीतुम्= पुनरादातुम्। प्रतिहारम्=द्वारदेशम्। उपस्थितः = प्राप्तः।

※ प्रतीहार्या उक्तिं निशम्य राजा पद्मावतीं पृच्छति—पद्मावर्ती-इति। किन्नु=किं स्वित्। सः = न्यासनिक्षेप्ता। ब्राह्मणः = ब्राह्मणजातीयः ? प्रिये ! पद्मावति ! येन पुरुषेण तव हस्ते सा वनिता न्यासरूपेण स्थापिता, स किं ब्राह्मणजातीय इति प्रश्नार्थः।

† पद्मावती उत्तरयति—होदव्वं-इति। भवदुक्तेनेति शेषः। भवदुक्तानुसारेण तेन ब्राह्मणेनापि भवितुं शक्यते, नाऽहं निश्चयेन वक्तुं शक्नोमीत्यर्थः।

‡ पद्मावतीवचनादागन्तुकस्य पुरुषस्य ब्राह्मणत्वं सम्भावयन् राजा तं ब्राह्मणोचितसत्कारप्रदर्शनपूर्वकमभ्यन्तरं प्रवेशयितुं प्रतिहारीमादिशति—शीघ्रमिति। शीघ्रम्=त्वरितम्। प्रवेश्यताम्=मत्समीपमुपस्थाप्यताम्। अभ्यन्तरसमुदाचारेण= अभ्यन्तरे गृहाभ्यन्तरे, समुचितो यः समुदाचारः, पाद्याऽर्घ्यादिप्रदानसत्कारपूर्वकमित्यर्थः। सः = निक्षेपप्रतिग्रहणार्थमागत आवन्तिकाया भ्राता ब्राह्मणः = विप्रः।

---

पास धरोहर रख गया हूँ, उसे लेने के लिये आया हूँ।

राजा—पद्मावती, क्या वही ब्राह्मण तो नहीं है ?

पद्मावती—सम्भव है कि, वही हो।

राजा—(अच्छा) शिष्टाचार के साथ उस ब्राह्मण को शीघ्र यहाँ लिवा आओ।

प्रतीहारी—जं भट्टा आणवेदि । ( निष्क्रान्ता ) [ यद् भर्ताज्ञापयति । ❀ ]

राजा—पद्मावति ! त्वमपि तामानय । †

पद्मावती—जं अय्यउत्तो आणवेदि । ( निष्क्रान्ता ) [ यद् आर्यपुत्र आज्ञापयति । ‡ ]

( ततः प्रविशति यौगन्धरायणः प्रतीहारी च ) §

यौगन्धरायणः—भोः ! ( आत्मगतम् ) ▽

---

❀ प्रतीहारी राज्ञाऽऽज्ञां स्वीकरोति—जं-इति । स्वामिन आदेशं सम्पादयितुमहं गच्छामीत्यर्थः । निष्क्रान्ता = प्रतीहारी निर्गता ।

† राजा पद्मावत्याः सविधे न्यासरूपेण स्थितामावन्तिकामानेतुं पद्मावतीमादिशति—पद्मावति-इति । ताम् = आवन्तिकाम् । आनय = अत्रोपस्थापय । न्यासग्रहणार्थं समागताय ब्राह्मणाय तां परावर्तयितुमित्यर्थः ।

‡ पद्मावती भर्तुराज्ञां स्वीकरोति—जं-इति । यत् = यत् कार्यं कर्तुमित्यर्थः । निष्क्रान्ता = राजाऽऽज्ञानुसारमावन्तिकाऽऽनयनाय प्रस्थिता ।

§ अथ राजाऽऽदेशानुसारं प्रतीहार्या सह यौगन्धरायणस्य प्रवेशं सूचयति—ततः प्रविशतीति ।

▽ प्रविष्टो यौगन्धरायणः राज्ञः समीपं गच्छन् आत्मनः कृतपूर्वाणि कार्याणि चिन्तयंश्च स्वगतं विमृशति—भोः-इति । भो इत्यात्मोपनिमन्त्रणे । प्रच्छाद्येति ।

---

प्रतीहारी—जैसी महाराज की आज्ञा ।

( चली गई )

राजा—पद्मावती, तुम भी उसको लिवा आओ ।

पद्मावती—जैसी महाराज की आज्ञा ।

( चली गयी )

( बूढ़े ब्राह्मण के वेष में यौगन्धरायण और—प्रतीहारी आते हैं )

यौगन्धरायण—( आप ही आप ) ओह !

प्रच्छाद्य राजमहिषीं नृपतेर्हितार्थं
कामं मया कृतमिदं हितमित्यवेक्ष्य ।
सिद्धेऽपि नाम मम कर्मणि पार्थिवोऽसौ
किं वक्ष्यतीति हृदयं परिशङ्कितं मे ॥१५॥

( अन्वयः ) मया नृपतेः हितार्थम् राजमहिषीम् प्रच्छाद्य इदम् हितमिति अवेक्ष्य कामं कृतम् । मम कर्मणि सिद्धेऽपि नाम असौ पार्थिवः किं वक्ष्यति, इति मे हृदयम् परिशङ्कितम् ।

( टीका ) मया = यौगन्धरायणेन । नृपतेः = स्वस्वामिनो राज्ञ उदयनस्य । हितार्थम् = हिताय, पद्मावतीपरिणयसंघटनद्वारा, मगधराजसाहाय्येन परैरपहृतस्य स्वराज्यस्य पुनः प्रत्याहरणरूपं स्वामिनो हितं विधातुमित्यर्थः । राजमहिषीम् = राज्ञ उदयनस्य महिषीं पट्टराज्ञीं वासवदत्ताम् । प्रच्छाद्य = "लावाणके ग्रामदाहेन वासवदत्ता दग्धा" इति मिथ्यापवादप्रचारणपूर्वकं पद्मावत्या निकटे तां प्रच्छन्नं स्थापयित्वा । इदम् = पद्मावत्या सह स्वामिनः परिणयनम् । हितम् = मगधराजसाहाय्येन स्वराज्यप्रत्याहरणसाधनत्वेन हितकरम् । इति = इत्थम् । अवेक्ष्य = विचार्य । कामं कृतम् = आत्मनः स्वामिहितैकतत्परतया स्वेच्छयैव मया कृतम् । मम = मया सम्पादिते । कर्मणि = स्वामिपद्मावतीपरिणयसंघटनरूपे, राज्यप्रत्याहरणरूपे च कार्ये । सिद्धेऽपि नाम = साफल्यमुपगतेऽपि नाम । नामेति वाक्यालङ्कारे । असौ पार्थिवः = अयं राजा उदयनः । किं वक्ष्यति = उचितमनुचितं वा किं कथयिष्यति । इति = इत्येवं विचार्य । मे = मम । हृदयं = चेतः । परिशङ्कितम् = आत्मनः स्वेच्छाचारितया परितो भयशङ्कासमाकुलं वर्तते । "वसन्ततिलकं" वृत्तम् ।

प्रतीहार्या राजसमीपं नीयमानो यौगन्धरायणः स्वगतं विमृशति—स्वामिनो विश्वासपात्रेण ,स्वामिहितैकदत्तदृष्टिना मया सिद्धादेशप्रत्ययान्मगधराजसाहाय्य-

महाराज की भलाई के लिये ही महारानी को छिपा कर और स्वामी तथा पद्मावती का विवाह—आयोजन हितकर समझ कर मैंने मनमाना काम कर दिया । मेरे प्रयत्नों के सफल होने पर भी मेरे हृदय में यह शङ्का हो रही है कि न जाने राजा क्या कहें ! ॥ १५ ॥

प्रतीहारी—एसो भट्टा। उपसप्पदु अय्यो। [ एष भर्त्ता। उपसर्पत्वार्यः। ❀ ]

यौगन्धरायणः—( उपसृत्य ) जयतु भवान् जयतु। †

राजा— श्रुतपूर्व इव स्वरः। भो ब्राह्मण ! किं भवतः स्वसा पद्मावत्या हस्ते न्यास इति निक्षिप्ता। ‡

---

क्रमेण स्वामिराज्यप्रत्याहरणसम्भावनया च स्वामिना सह पद्मावत्याः परिणयनमभिलषितम्। तत्र स्वामिनः परमप्रेमास्पदीभूतायां वासवदत्तायां विद्यमानायां दुर्घटमिति विचार्य "लावाणकग्रामदाहेन वह्नौ वासवदत्ता दग्धा" इति मिथ्याप्रवादं प्रचार्याऽऽवन्तिकावेषेण महाराज्ञी वासवदत्ता पद्मावत्या हस्ते न्यासीकृता। अथ मद्विचारानुसारं स्वामिना पद्मावत्यां परिणीतायाम्, मगधराजसाहाय्येन स्वामिना स्वभुजबलेन च पुनः प्रत्याहृते च वत्सराज्ये मम मन्त्रः साफल्यमगाहत। यद्यपीदं सर्वं मया स्वामिहितसम्पादनायैव कृतम्, न कश्चिल्लेशतोऽप्यत्र मम स्वार्थः, तथापीदानीं स्वामिनः पुरो गच्छन्नहं बिभेमि, मया कृतस्य कर्मण उचितत्वमनुचितत्वं वा किं कोऽभिधास्यति स्वामीति। यच्च मया स्वेच्छयैव स्वाच्छन्द्येन सर्वं सम्पादितम्, तत्रापि भयशङ्काभ्यामाकुलं मे चेतो वर्तते इति भावः ॥१५॥

❀प्रतीहारी राजानं प्रदर्श्य यौगन्धरायणं वदति—एसो-इति। एष भर्त्ता = अयमस्मत्स्वामी राजा उदयनः। उपसर्पत्वार्यः = मान्यो भवानस्य समीपं गच्छतु।

† यौगन्धरायणः राज्ञः समीपमुपसृत्य तस्य विजयमाशंसति—जयत्विति। पौनः पुन्ये द्विरुक्तिः। पुनःपुनर्भवान् विजयतामित्यर्थः।

‡ राजा यौगन्धरायणस्य स्वरं श्रुत्वा तस्य श्रुतपूर्वत्वमाशङ्कमानो वदति—श्रुतपूर्व-इति। श्रुतपूर्व इव स्वरः = श्रूयमाणोऽयं स्वरः कदाचित्पूर्वं श्रुतः परिचित

---

प्रतीहारी—महाराज ये हैं। आप पास जाइये।

यौगन्धरायण—( पास जाकर ) महाराज की जय हो।

राजा—यह स्वर तो शायद पहिले का सुना सा प्रतीत होता है। कहिये ब्राह्मण देवता जी ! क्या आप अपनी बहन को पद्मावती के पास धरोहर के रूप में रख गये हैं ?

यौगन्धरायणः—अथकिम् ।*

राजा—तेन हि त्वर्यतां त्वर्यतामस्य भगिनिका । †

प्रतीहारी—जं भट्टा आणवेदि । ( निष्क्रान्तः ) [ यद् भर्ताज्ञापयति । ‡ ]

( ततः प्रविशति पद्मावती आवन्तिका प्रतिहारी च )○

---

इव प्रतीयते इत्यर्थः । इदं राज्ञा स्वगतमेवोक्तम् । अथ यौगन्धरायणमाह—भो इति । स्वसा = भगिनी । पद्मावत्याः = मम राज्ञ्याः । हस्ते = करे । समीपे-इति यावत् । न्यास इति निक्षिप्ता = न्यासरूपेण स्थापिता किमिति प्रश्नः । भो ! विप्र ! येन आत्मनो भगिनी पद्मावत्या हस्ते न्यासरूपेण स्थापिता, स एव भवानस्ति किमित्यर्थः ।

यौगन्धरायण उत्तरयति—अथ किमिति । यथार्थमेवेदमित्यर्थः ।

† राजा यौगन्धरायणस्य वचनं निशम्य विप्रभगिनीमुपस्थापयितुं प्रतीहारीमादिशति— तेन हीति । तेन हि=तर्हि, त्वर्यतां त्वर्यताम् = अतिशीघ्रमानीयताम् । त्वराविशेषद्योतनाय द्विरुक्तिः । त्वयेति शेषः ।

‡ प्रतीहारी राजाऽऽज्ञां स्वीकरोति— जं-इति । महाराजाऽऽज्ञानुसारं विप्रभगिनीं शीघ्रमुपस्थापयामीत्यर्थः । निष्क्रान्ता = अवन्तिकाऽऽनयनाय प्रतीहारी निर्गता ।

○ वत्सराजस्याऽऽज्ञयाऽऽवन्तिकामानेतुं पद्मावती पूर्वमेव गताऽऽसीत्, सम्प्रति पद्मावती, अवन्तिका, प्रतीहारी, चेति तिसृणामपि तासां प्रवेशं दर्शयति— ततः प्रविशतीति ।

---

यौगन्धरायण—और क्या ?

राजा—( प्रतीहारी से ) तो शीघ्र इनकी बहन को यहाँ लाओ ।

प्रतीहारी—जो आज्ञा । ( चली गई )

( पद्मावती, आवन्तिका और प्रतीहारी आते हैं । )

पद्मावती—एदु एदु अय्या । पिअं दे णिवेदेमि । [ एत्वेत्वार्या ! प्रियं ते निवेदयामि । ❀ ]

आवन्तिका—किं किं । † [ किं किम् ! ]

पद्मावती—भादा दे आअदो । [ भ्राता ते आगतः । ‡ ]

आवन्तिका—दिट्ठिआ इदाणिं पि सुमरदि । [ दिष्ट्येदानीमपि स्मरति ▽ ]

पद्मावती—( उपसृत्य ) जेदु अय्यउत्तो । एसो णासो । [ जयत्वार्यपुत्रः । एष न्यासः । □ ]

---

❀ पद्मावती अवन्तिकां प्रति तद्भ्रात्रागमनवार्तां निवेदयितुमिच्छन्ती वदति—एदु एदु-इति । द्विरुक्तिरागमनत्वरासूचनाय । प्रियं ते निवेदयामि = मनःसन्तोषजनकं किमपि वृत्तं त्वां श्रावयामीत्यर्थः ।

† आवन्तिका सकौतुकं पृच्छति—किं किं-इति । किं कीदृशं च तद्वृत्तं कथयेत्यर्थः ।

‡ पद्मावत्युत्तरयति—भादा-इति । येन त्वं मदन्तिके न्यस्ता, स ते भ्राता समागत इत्यर्थः ।

▽ आवन्तिका सहर्षं वदति—दिट्ठिआ-इति । दिष्ट्या = सौभाग्येन । इदानीमपि = इयति काले गतेऽपि, पूर्ववदधुनाऽपि । स्मरति = चिन्तयति ।

□ पद्मावती राजसमीपमुपसृत्य न्यासदर्शनव्याजेनाऽऽवन्तिकां राज्ञे दर्शयितुमिच्छन्ती वदति—जेदु-इति । अयं समुदाचारः । एष न्यासः = विप्रेण न्यासरूपेण मम हस्ते निहिता इयमार्याऽऽवन्तिकेत्यर्थः ।

---

पद्मावती—आओ आर्या आओ । तुम्हें एक प्रिय बात सुनाऊँ !

आवन्तिका—क्या ! क्या !

पद्मावती—तुम्हारे भाई आये हैं ।

आवन्तिका—धन्य भाग्य ! अब भी मेरी सुध ली ।

पद्मावती—(समीप जाकर) जय हो आर्यपुत्र की। यही वह धरोहर है ।

राजा—निर्यातय पद्मावति ! साक्षिमान् न्यासो निर्यातयितव्यः। इहात्रभवान् रैभ्यः, अत्रभवती चाधिकरणं भविष्यतः। *

पद्मावती—अय्य ! णीअदां दाणिं अय्या। [ आर्य ! नीयतामिदानीमार्या। † ]

धात्री—(अवन्तिकां निर्वर्ण्य) ‡अम्मो भट्टिदारिआ वासवदत्ता।

---

*ब्राह्मणस्यैवेयं भगिनी न वासवदत्तेति कृतनिश्चयश्चिन्नसादृश्यपरीक्षणानभिलाषी नरपतिः न्यासभूतां तां तद्ग्रहणार्थं समागताय विप्राय प्रत्यर्पयितुकामः पद्मावतीं वदति—निर्यातयेति। निर्यातय = न्यासं प्रत्यर्पय। निर्यातनम् = न्यासप्रत्यर्पणम्। "निर्यातनं वैरशुद्धौ दाने न्यासार्पणेऽपि च" इत्यमरः। अत्र 'अथवा' इति पाठान्तरम्। तस्य उचितोऽयं कल्प इत्यर्थः। साक्षिमान् = साक्षी विद्यते यस्मिन् सः। यद्वा—साक्षिमदिति पाठान्तरम्। तत्र साक्षिमदिति क्रियाविशेषणम्, साक्षिपूर्वकमित्यर्थः। न्यासः = निक्षेपः। निर्यातयितव्यः = प्रत्यर्पणीयः। साक्षिणः पुर एव न्यासः प्रत्यर्पणीय इति नियम इत्यर्थः। इह = अस्मिन् न्यासे। अत्रभवान् = पूज्यः। रैभ्यः = महाराजमहासेनस्य सन्देशहरः काञ्चुकीयः। अत्रभवती = मान्या वासवदत्ताधात्री वसुन्धरा। अधिकरणम् = विवादनिर्णयस्थानम्। रैभ्यस्य वसुन्धरायाश्च साक्षित्वे न्यासोऽयं प्रत्यर्पणीय इत्यर्थः।

† अथ पद्मावती राज्ञः कथनानुसारं रैभ्य-वसुन्धरयोः साक्षित्वे न्यासं प्रत्यर्पयितुकामा यौगन्धरायणं वदति—अय्य-इति। आय = मान्य ! प्रतिगृह्यतामियं न्यासरूपेण मदन्तिके रक्षिता स्वभगिनी आवन्तिकेत्यर्थः।

‡ अथ न्यासप्रत्यर्पणे साक्षित्वेन वृता वसुन्धरा आवन्तिकां समीपतो निर्वर्ण्य

---

राजा—पद्मावती, धरोहर लौटा दो। अथवा साक्षियों के सम्मुख ही धरोहर लौटाना चाहिये। इसलिये इसमें आर्य रैभ्य और आर्या वसुन्धरा दोनों साक्षी होंगे।

पद्मावती—आर्य ! अब आप आर्या को ले जाइये।

धाई—( अवन्तिका को गौर से देख कर ) अहा ! यह तो राजकुमारी वासवदत्ता हैं।

[ अम्मो भर्तृदारिका वासवदत्ता । ]

राजा—कथं महासेनपुत्री । देवि ! प्रविश त्वमभ्यन्तरं पद्मावत्या सह । *

यौगन्धरायणः—न खलु न खलु प्रवेष्टव्यम् । मम भगिनी खल्वेषा । †

राजा—किं भवानाह । महासेनपुत्री खल्वेषा । ‡

---

स्वरूपतः प्रत्यभिज्ञाय च सविस्मयं वदति—अम्मो-इति । अम्मो-इत्याश्चर्ये । भर्तृदारिका = अस्मत्स्वामिनो महासेनस्य दुहिता । इयमस्मत्स्वामिनो महासेनस्य दुहिता वासवदत्ता वर्तते, नत्वावन्तिका, परमाश्चर्यमिदमित्यर्थः ।

* अथ राजाऽपि धात्रीवचनं निशम्य तामावन्तिकां वासवदत्तैवेयमिति स्वरूपतः प्रत्यभिज्ञाय सविस्मयं वदति—कथमिति । कथम् = किम् । महासेनपुत्री = प्रद्योतराजदुहिता । किमियं मम प्राणप्रिया महासेनराजदुहिता वासवदत्ताऽस्ति ? सा वासवदत्तैवास्तीति निश्चयेन विदित्वा तस्याः राज्ञीभावेनैवावस्थानमुचितमिति तामाह—देवीति । देवि ! = प्रिये वासवदत्ते । अभ्यन्तरम् = अन्तःपुरम् ।

† यौगन्धरायणः तामभ्यन्तरप्रवेशान्निवारयन्नाह—न खल्विति । अनया अभ्यन्तरं नैव प्रवेष्टमित्यर्थः । तत्र हेतुमाह—ममेति । यत इयं मम भगिनी, अतः अनया राजान्तःपुरे नैव प्रवेष्टव्यमित्यर्थः ।

‡ यौगन्धरायणस्य वचनं श्रुत्वा राजा वदति = किमिति । किं भवानाह = ममेयं भगिनीति भवान् वदति किम् ? असत्यमिदम्, इयं खलु महाराजमहासेनस्य पुत्री मम प्राणप्रिया वासवदत्ताऽस्ति, अत इयं ममान्तःपुरे प्रवेशमर्हतीत्यर्थः ।

---

राजा—क्या महासेन की पुत्री !—मेरी रानी ! तुम पद्मावती के साथ अन्दर जाओ ।

यौगन्धरायण—नहीं, नहीं । यह तो मेरी बहन है । अन्दर नहीं भेजी जा सकती ।

राजा—आप क्या कह रहे हैं ? यह तो महासेन की पुत्री है ।

यौगन्धरायणः—भो राजन् !*

भारतानां कुले जातो विनीतो ज्ञानवाञ्छुचिः ।
तन्नार्हसि बलाद्धर्तुं राजधर्मस्य देशिकः ॥१६॥

* राज्ञो वचनं निशम्य यौगन्धरायणो वदति—भो राजन् !—भारताना-मिति ।

( अन्वयः ) भो राजन् ! ( भवान् ) भारतानाम् कुले जातः, विनीतः, ज्ञानवान्, शुचिः, राजधर्मस्य देशिकः ( अस्ति ), तत् बलात् हर्तुम् न अर्हसि ।

( टीका ) भो राजन् = हे वत्सराज ! उदयन ! । भवान्, भारतानाम् = भरतकुलोत्पन्नानां राज्ञाम् । कुले = प्रशस्ते वंशे । जातः = उत्पन्नः । विनीतः = विद्याध्ययजन्यविनयोपेतः । ज्ञानवान् = सदसदुचितानुचितकर्तव्याकर्तव्यादिविवेक-निपुणः । शुचिः = शुद्धान्तःकरणः सदाचारश्च । राजधर्मस्य = मन्वाद्युपदिष्टस्य पुत्रवत्प्रजापालनादिरूपस्य राजकर्तव्यस्य । देशिकः = उपदेष्टा, प्रवर्त्तक आचार्यः । अस्ति, तत् = तस्मात् कारणात् भवानेवं गुणविशिष्टोऽस्तीति हेतोः इमामिति शेषः । इमाम् = मम भगिनीम् । बलात् = प्रसह्य । हर्तुम् = ग्रहीतुम्, स्वायत्तीकर्तुम् । न अर्हसि = न योग्योऽसि । परस्त्रियो बलादपहरणं तव न शोभते इत्यर्थः । "अनुष्टुब्" वृत्तम् ।

वासवदत्तां प्रत्यभिज्ञाय तां स्वान्तःपुरे प्रवेशयितुमुद्यतं राजानं निषेधन् यौग-न्धरायणो वदति—भो राजन् ! भवान् किल जगद्विदिते भरतवंशीयानां राज्ञां कुले प्रसूतः, साङ्गवेदाध्ययनादिना विनयं ग्राहितः, सदसदुचिताऽनुचितकर्तव्याकर्तव्य-विवेकशीलः, निर्मलान्तःकरणः सदाचारश्चास्ति । किञ्च महाकुलीनत्वान्मन्वाद्युप-दिष्टानां राजधर्माणां भवानेव प्रवर्त्तक आचार्य इति लोके समाद्रियते । इत्थंविध-लोकोत्तरगुणविशिष्टोऽपि भवान् दरिद्रस्य ब्राह्मणस्य मम भगिनीं हठात् स्वान्तःपुरे

यौगन्धरायण—हे राजन् !

आप तो भरतवंशी राजाओं के कुल में उत्पन्न, विनय-शील, ज्ञानी, पवि-त्रात्मा तथा राजधर्म के आचार्य हैं। ऐसा होकर आपको यह उचित नहीं है कि, मेरी बहन को बलात्कार कर के रोक रखें ॥ १६ ॥

राजा—भवतु पश्यामस्तावद् रूपसादृश्यम् । संक्षिप्यतां यवनिका । *

यौगन्धरायणः—जयतु स्वामी । †

वासवदत्ता—जेदु अय्यउत्तो । [ जयत्वार्यपुत्रः । ‡ ]

---

प्रवेशयितुमिच्छति । येन राज्ञा अपराधिनो दण्डनीयाः, स एव चेत् प्रसह्य ब्राह्मणस्त्रीहरणात्मकं गुरुतरमपराधं स्वयं करोति, तर्हि किं वक्तव्यम्, सर्वथा नैतदुचितं भवत इति भावः ॥ १६ ॥

* यौगन्धरायणस्य वचनं श्रुत्वा चित्रसादृश्यपरीक्षणेनैवेयं वासवदत्ता न वेति निश्चिन्वानो राजा यौगन्धरायणं वदति—भवत्विति । भवतु=उत्तरप्रत्युत्तरात्मकेन विवादेनालम् । पश्यामः=परीक्षामहे । बहुवचनमात्मनो गौरवद्योतनाय । तावदिति वाक्यालङ्कारे । यद्वा—तावत्=प्रथमम् । रूपसादृश्यम्=आकृतिसाम्यम् । संक्षिप्यताम्=संक्षिप्यताम्, अपनीयताम् । यवनिका=प्रतिसीरा, मुखावगुण्ठनम् । "प्रतिसीरा जवनिका स्यात् तिरस्करिणी च सा" इत्यमरः । अत्र संक्षिप्यतां जवनिकेति पाठो युक्तः । इयं मम प्राणप्रिया वासवदत्ता, भवतो भगिनी वेति केवलमुत्तरप्रत्युत्तराभ्यां निर्णेतुं न शक्यते । अतोऽस्या आकृतिसाम्यं परीक्षणीयम् । तदर्थं चास्या मुखावरणवस्त्रं किञ्चिदपनेतुं योग्यम्, येन स्पष्टमस्या मुखं निरीक्ष्य निर्णयः सुकरो भवेदिति राज्ञ आशयः ।

† अथ राजाऽऽज्ञया अपनीतावगुण्ठनाया आवन्तिकायाः स्वरूपे प्रकाशिते सति इदानीमेव स्वस्वरूपप्रकाशनमपि समुचितं मन्वानो यौगन्धरायणः स्वस्वरूपेण राज्ञो विजयमाशंसति—जयत्विति । मम स्वामी महाराजवत्सराजो विजयतामित्यर्थः ।

‡ प्रकाशितस्वरूपा वासवदत्ता अपि भर्तुर्विजयमाशंसति—जेदु—इति ।

---

राजा—अच्छा, देखें तो सही—इनका रूप कहाँ तक मिलता जुलता है ? जरा घूँघट तो हटाइये ।

यौगन्धरायण—महाराज की जय हो ।

वासवदत्ता—आर्यपुत्र की जय हो ।

राजा—( उत्थाप्य ) यौगन्धरायणो भवान् ननु । ❀

मिथ्योन्मादैश्च युद्धैश्च शास्त्रदृष्टैश्च मन्त्रितैः ।
भवद्यत्नैः खलु वयं मज्जमानाः समुद्धृताः ॥१८॥

❀ अथ राजा स्वामिभक्तस्य यौगन्धरायणस्य लोकोत्तराणि कार्याणि चिन्तयन् तेन कृतं वासवदत्तापनयनादिकमपि स्वाभ्युदयसाधनमेव सम्पन्नमिति चरणयोर्निपतितं तं सस्नेहमुत्थापयन् सानन्दमाह—यौगन्धरायण—इति । नन्वित्यवधारणे । निश्चयेन भवान् यौगन्धरायण इत्यर्थः । येन मदीयापत्प्रतीकाराय ममाभ्युदयाय च तानि तानि लोकोत्तराणि कार्याणि कृतानि, यश्च सर्वदा स्वामिहितसम्पादनार्थमेव जीवति, येन च तदर्थमेव प्रासादनिवाससुखोचितोऽपि स्वात्मा काननपरिभ्रमणभिक्षुवेषपरिग्रहादिभिरायासितः, स कदापि अपराधीति गणयितुं न शक्यते । जानास्यहं भवान् स्वामिहितैकतत्परः नीतिशास्त्रकुशलः अस्माकमाप्ततमो मन्त्रीत्यर्थान्तरसंक्रमितम् ।

अथ राजा यौगन्धरायणं स्पष्टं वाच्यवृत्त्या प्रशंसन्नाह—मिथ्योन्मादैरिति ।

( अन्वयः ) मिथ्योन्मादैः, युद्धैः, शास्त्रदृष्टैः मन्त्रितैश्च भवद्यत्नैः मज्जमानाः वयम् समुद्धृताः खलु ।

( टीका ) अत्र सर्वे चकाराः समुच्चयार्थाः, तेषामुन्मादादिभिः प्रत्येकं सम्बन्धः । मिथ्योन्मादैः = मिथ्या मिथ्यैव अवास्तविका ये उन्मादाश्चित्तविभ्रमाः, तैः । "उन्मादश्चित्तविभ्रमः" इति कोशः । अलीकोन्मादचेष्टिताभिनयैरित्यर्थः । युद्धैः = युद्धप्रवर्तनैः, रणे विविधोपायद्वारा शत्रुविध्वंसनैरित्यर्थः । शास्त्रदृष्टैः = शास्त्रेषु राजनीतिशास्त्रेषु दृष्टैः प्रतिपादितैः, राजनीतिसिद्धान्तानुमोदितैरित्यर्थः । मन्त्रितैश्च = शत्रुजयोपयोगिनीभिस्ताभिस्ताभिर्मन्त्रणाभिश्च । भवद्यत्नैः = भवतः यौगन्धरायणस्य यत्नैः राज्यरक्षणार्थमस्मदुद्धरणार्थं च कृतैर्बहुविधैः प्रयत्नैः । मज-

---

राजा—( उठ कर ) सचमुच तुम तो वही यौगन्धरायण हो क्या !

जिसने झूठे पागलपन के कामों से, युद्ध से, शास्त्रानुमोदित सम्मतियों और अनेकानेक उपायों से विपत्ति में डूबते हुये हम लोगों का उद्धार किया है ॥ ८ ॥

यौगन्धरायणः—स्वामिभाग्यानामनुगन्तारो वयम् । ❀

पद्मावती—†अम्महे अय्या खु इअं । अय्ये ! सहीजणसमुदाआरेण

---

माना वयम् = मज्जनशीला वयम् । महासेनान्तःपुरबन्धनादिरूपे विपत्समुद्रे मग्नोऽहमिति यावत् । अत्र मज्जतेः परस्मैपदित्वान्मज्जमाना इति प्रयोगश्चिन्त्यः । काव्लील्ये चानया कथञ्चित् साधनीयः । समुद्धृताः = समुत्तारिताः । भवतैव बहुविध-विपत्तिजालाद्वयं रक्षिता इत्यर्थः । खलु = निश्चयेन । "अनुष्टुब्" वृत्तम् । अवन्तिदेशाधीश्वरमहाराजमहासेनान्तःपुराद्वत्सराजस्योदयनस्योन्मादराजनीतिप्रयोगा-दिभिरुपायैर्यौगन्धरायणेन कृतं समुद्धरणं "प्रतिज्ञा" नाटिकायां स्पष्टम् ।

यौगन्धरायणं प्रशंसन् राजा वदति—परमोपकारिन् मन्त्रिन् ! यौगन्धरायण ! भवदुपकारान् कियद्वर्णयामि । महासेनान्तःपुरे बद्धोऽहं भवतैव समयोचितैरुपायैः —क्वचिदुन्मादमभिनयता युद्धं प्रवर्त्तयता राजनीतिं प्रदर्शयता च मोचितोऽस्मि । इदानीमपि सञ्जाता स्वराज्यप्राप्तिरपि भवन्नीतेरेव फलमिति परमोपकारिणो भवत उपकारान् कथमहं विस्मर्तुं शक्नुयाम् । इत्थमपि भवानात्मानमपराधिनं मन्यत इति महच्चित्रमिति भावः ॥ १८ ॥

❀ गुणज्ञेन राज्ञा कृतां स्वप्रशंसां श्रुत्वा यौगन्धरायणो विनयेन वदति—स्वामिभाग्यानामिति । वयम् = अहम्, मत्सदृशा भवदनुचरा वा । स्वामिभा-ग्यानाम् = स्वामिनो भवतः भाग्यानाम्, परमाभ्युदयसम्पादकानां शुभादृष्टानाम् । अनुगन्तारः = अनुगामिनः । भवत्सौभाग्येनैव सर्वमिदं सम्पन्नं, वयं तत्र केवलं निमित्तभूता भवद्भाग्यप्रेरिताः कार्यकर्तारः, अतो न श्लाघार्हा इत्यर्थः ।

† अथ वासवदत्तामद्ययावदावन्तिकाबुद्ध्या सखीमिव मन्यमाना पद्मावती सम्प्रति तां ज्येष्ठां महाराज्ञीं बुद्ध्वा अज्ञानात् कृतमतिक्रमं मर्षयितुं प्रार्थयते—अम्महे—इति । अहो—इत्याश्चर्ये । आवन्तिकैव वासवदत्तेति प्रत्यभिज्ञाना-दाश्चर्यम् । खलु निश्चये । अद्ययावत् यामहमावन्तिकेति मम सखीत्यजानाम्, सा किल मम ज्येष्ठा पूज्या महाराज्ञी वासवदत्तेत्यर्थः । इत्थं स्वगतं विचिन्त्य

---

यौगन्धरायण—हम लोग तो स्वामी के भाग्यों का ही अनुसरण करने वाले हैं ।

पद्मावती—अरे ! यह तो आर्या वासवदत्ता हैं । आर्ये ! अनजान में आप

अदिक्कन्दो समुदाआरो। ता सीसेज पसादेमि। [ अहो आर्या खल्वियम्। आर्ये! सखीजनसमुदाचारेणातिक्रान्तः समुदाचारः, तद् शीर्षेण प्रसादयामि। ]

**वासवदत्ता**—*( पद्मावतीमुत्थाप्य ) उट्ठेहि उट्ठेहि अविहवे! उट्ठेहि। अत्थिसत्तं णाम सरीरं अवरद्धइ। [ उत्तिष्ठोत्तिष्ठाविधवे! उत्तिष्ठ। अर्थित्वं नाम शरीरमपराध्यति। ]

---

वासवदत्तां प्रसादयितुमाह अय्ये–इति। आर्ये = पूज्ये। सखीजनसमुदाचारेण = वयस्यासमुचितेन व्यवहारेण। अत्र मूले 'अजाणन्तीए' इति क्वचिदधिकः पाठो दृश्यते, तस्य 'अजानत्या' इति संस्कृतच्छाया। इयं देवी वासवदत्तेति स्वरूपमनवगच्छन्त्या मयेत्यर्थः। समुदाचारः = गुरुजनस्य पुरः कर्तव्यो विनयलज्जादिकः सदाचारः। अतिक्रान्तः = उल्लङ्घितः। तत् = तस्मात् कारणात्। शीर्षेण = भवत्याश्चरणयोः स्वशीर्षस्थापनेन। प्रणामेनेति यावत्। "उत्तमाङ्गं शिरः शीर्षम्" इत्यमरः। प्रसादयामि = अनुनयामि। अज्ञानान्मया कृतं समुदाचारातिक्रमरूपमपराधं क्षमापयामीति भावः।

इतः परं पद्मावती वासवदत्तायाः पादयोः पततिस्मेति पूर्वापरप्रकरणानुरोधादनुसन्धेयम्।

* प्रणमन्तीं पद्मावतीमुत्थाप्य प्रसन्ना वासवदत्ता वदति—उट्ठेहि–इति। अविधवे = सधवे, सौभाग्यवति!। उत्तिष्ठोत्तिष्ठोत्तिष्ठेतित्रिवारं प्रयोगेण वासवदत्तयोत्थापिताऽपि पद्मावती पुनः पुनः पादपतनान्न विरमतिस्मेति प्रतीयते। अर्थित्वम् = अर्थिनः तव हस्ते मां न्यासरूपेण निक्षेप्तुमिच्छतो ब्राह्मणवेषधारिणो

---

से सखी का सा व्यवहार कर मैंने शिष्टाचार का उल्लंघन किया है। इसलिये सिर झुका कर क्षमा माँगती हूँ।

**वासवदत्ता**—( पद्मावती को उठाकर ) अरी! सुहागिनी उठ। तुमने तो मेरे साथ सखी भाव रख कर उचित ही व्यवहार किया, इसमें तेरा कुछ भी अपराध नहीं है। बल्कि, इसमें मेरा शरीर ही अपराधी है, जो कि अर्थी का धरोहर बताते हुए धोखे से आपके पास सौंपा गया था।

पद्मावती—अणुग्गहिदह्मि। [ अनुगृहीतास्मि। ❀ ]

राजा—वयस्य यौगन्धरायण ! देव्यपनये का कृता ते बुद्धिः †।

यौगन्धरायणस्य, स्वम् = धनम्। नामेत्यभ्युपगमे। शरीरम् = अर्थिभगिनीत्वेन व्यपदिश्यमानाया मम वपुः। अपराध्यति = सापराधमस्ति। अपराध्यतीति भूतार्थे लट्। ब्राह्मणरूपधारिणा यौगन्धरायणेन तस्य भगिनीति तव हस्तेऽहं निक्षिप्ता, तदनुकूलमेव च मया स्वनामधामादिगोपनं कृतम्, तत्राऽऽचारातिक्रमस्तु मयैव कृतो न त्वया, अतोऽहमेवापराधिनी न त्वम्। वस्तुतस्तु तादृश्यमवस्थायां मम परपुरुषदर्शनपरिहारादिरूपव्रतपालनभारं वहन्त्या मां सखीनिर्विशेषं पश्यन्त्या त्वया सुबहूपकृतम्। वासवदत्ताया कृते 'अविधवे' इति सम्बोधने 'अभावेन सह भावस्यापि प्रतीतेरमङ्गलव्यञ्जकत्वेन कवेः प्रयोगानौचित्यमावहति' इति केचिदाहुः। वस्तुतस्तु—अविधवापदेन सौभाग्याभावनिषेधं सूचयता अखण्डं सौभाग्यं व्यज्यते। अनेनैवाऽभिप्रायेण महाकविना 'अविधवे' इति प्रयोगः कृतः। मेघदूते—महाकवेः कालिदासस्याप्येवमेव प्रयोगो यथा—

'भर्तुर्मित्रं प्रियमविधवे' इत्यादि।

❀ पद्मावती वासवदत्तायाः प्रसादमभिनन्दति—अणुग्गहिदह्मि-इति। भवत्या इत्थं स्नेहप्रदर्शनेऽनुकम्पिताऽस्मीत्यर्थः।

† अथ राजा यौगन्धरायणकृतस्य देव्यपनयस्य कारणं ज्ञातुमिच्छन्नाह—वयस्येति। वयस्य ! = मित्र ! अनेन राज्ञो यौगन्धरायणे परमस्नेहः प्रतीयते। देव्यपनये = वासवदत्ताया नामधामगोपनपूर्वकं देशान्तरनयने मरणप्रख्यापने च। ते = त्वया। का बुद्धिः = का मतिः, कीदृशी मतिरित्यर्थः। कृता = विहिता। देव्यपनये किं त्वयाभिप्रेतमासीदिति प्रश्नार्थः।

पद्मावती—आपने बड़ी कृपा की।

राजा—मित्र यौगन्धरायण ! वासवदत्ता को इस तरह छिपा कर रखने में तुम्हारा क्या अभिप्राय था ?

**यौगन्धरायणः**—कौशाम्बीमात्रं परिपालयामीति ।❀

**राजा**—अथ पद्मावत्या हस्ते किं न्यासकारणम् ? । †

**यौगन्धरायणः**—पुष्पकभद्रादिभिरादेशिकैरादिष्टा स्वामिनो देवी भविष्यतीति । ‡

❀ यौगन्धरायण उत्तरयति—कौशाम्बीमात्रमिति । मात्रशब्दोऽवधारणे । समग्रां कौशाम्बीमेवेत्यर्थः । परिपालयामि = प्रशास्मि । परिपालयामीति देव्यपनय-कालिकविचारानुकूलो वर्तमानप्रयोगः । देव्यपनयेन भवतः पद्मावत्या सह विवाह-संघटनम्, तेन पद्मावतीभ्रातुर्महाराजदर्शकस्य साहाय्यप्राप्तिः, ततः शत्रुविजयपूर्वकं वत्सराज्यप्रत्याहरणम्, ततश्च सम्पूर्णवत्सराज्यप्रधानामात्यपदारूढेन मया भवदाज्ञया भवच्छासनाधीनः सम्पूर्णो वत्सदेशः परिपालयितव्य इत्यभिप्रायः ।

† श्रुत्वेदं यौगन्धरायणवचनं पद्मावत्याः हस्ते वासवदत्तान्यासस्य कारणं राजा पृच्छति—अथेति । अथ = देव्या अपनयनानन्तरम् । पद्मावत्या हस्ते = पद्मावत्याः सविधे । न्यासकारणं किम् = निक्षेपरूपेण स्थापनस्य को हेतुः । मत्सकाशात् देवीं वासवदत्तामपनीय भवता किमभिप्रेत्य सा पद्मावत्या हस्ते निक्षिप्ता इति प्रश्नार्थः ।

‡ यौगन्धरायण उत्तरयति—पुष्पकभद्रादिभिरिति । तन्नामकैरित्यर्थः । आदेशिकैः = भविष्यदर्थवादिभिः सिद्धैः । आदिष्टा = भवितव्यत्वेन सूचिता । पद्मावती भवतो देवी भविष्यतीति पुष्पकभद्रादिसिद्धैः समादिष्टमासीदतो मया तत्रैव देव्या वासवदत्ताया न्यसनं समुचितमिति सम्भावितम् । पद्मावत्येव यथासमयं वासवदत्तायाः शीलशुद्धिसाक्षिणी भविष्यतीत्यपि मयाऽभिप्रेतमित्यर्थः ।

यौगन्धरायण—मेरा अभिप्राय यही था कि मैं सारा वत्सराज्य पहले ही की तरह पालूँ और इस समय केवल कौशाम्बी ही अधिकार में रह गई है, अतः जो कौशाम्बी के अधिकार से चला गया है, वह भी मेरे हाथ में चला आवे ।

राजा—पद्मावती के पास धरोहर रखने का क्या कारण था ?

यौगन्धरायण—यह कि, पुष्पकभद्र आदि ज्योतिषियों ने कहा था कि, पद्मावती आप की महारानी होगी ।

राजा—इदमपि रुमण्वता ज्ञातम् ।※

यौगन्धरायणः—स्वामिन् ! सर्वैरेव ज्ञातम् ।†

राजा—अहो ! शठः खलु रुमण्वान् ।‡

यौगन्धरायणः—स्वामिन् ! देव्याः कुशलनिवेदनार्थमद्यैव प्रतिनिवर्त्यतामत्रभवान् रैभ्योऽत्रभवती च । §

---

※ वासवदत्तापनयनादिकं सकलमिदं त्वत्तोऽन्यस्य कस्यापि विदितमस्ति न वेति राजा यौगन्धरायणं पृच्छति—इदमपीति । अपिरत्र भिन्नक्रमः । रुमण्वतापि इदं सर्वं ज्ञातं किमिति प्रश्नः । अन्तरङ्गसचिवो रुमण्वान् प्रायः सर्वं गुप्तातिगुप्तमपि राजरहस्यं वेत्ति, इदमपि भवता तेन सह सम्मन्त्र्यैव कृतम्, उत स्वबुद्ध्या केवलमेकलेनैव सम्पादितमिति राज्ञः प्रश्नस्याशयः ।

† यौगन्धरायण उत्तरयति—स्वामिन्-इति । स्वामिन् ! = प्रभो ! । न केवलं रुमण्वत एवाऽयमर्थो विदितः, अपि तु सर्वेऽपि भवद्धितचिन्तका जानन्तीत्यर्थः । न मयैकाकिनाऽत्र किमपि कृतम् ; सर्वैर्भवदाप्तैः सह सम्मन्त्र्य तदनुमत्यैव सर्वं सम्पादितमित्यर्थः ।

‡ सर्वैरेव ज्ञातमिदं वृत्तमिति यौगन्धरायणोक्तिं श्रुत्वा ज्ञातवृत्तोऽपि रुमण्वान् ममाग्रे न किञ्चिदपि प्रकाशितवानिति मन्वानो राजा रुमण्वतो विषये सोपालम्भमाह—अहो-इति । अहो-इत्याश्चर्ये खेदे वा । शठः = धूर्तः, वञ्चक इत्यर्थः । मां तथा वासवदत्ताविरहदुःखितं दृष्ट्वाऽपि ज्ञातसकलवृत्तोऽपि तादृशवैशसे नित्यं सन्निहितो रुमण्वान् देव्याः कुशलं न निवेदितवान्-इत्यहो तस्य वञ्चकत्वम्, यदर्थमयमारम्भः, तं प्रत्यपि मन्त्रगोपनशाठ्यमाश्चर्यजनकमिति भावः ।

§ देव्या वासवदत्तायाः कुशलं तत्पितरावङ्गारवतीमहासेनौ शीघ्रमवगच्छताम्-

---

राजा—यह रुमण्वान् को भी तो मालूम हो गया था ?

यौगन्धरायण—महाराज, सभी को मालूम था ।

राजा—अरे ! रुमण्वान् तो बड़ा धूर्त है ।

यौगन्धरायण—महाराज ! देवी का कुशल-समाचार सुनाने के लिये आर्य रैभ्य और आर्या वसुन्धरा को आज ही विदा कर दीजिये ।

राजा—न न, सर्व एव वयं यास्यामो देव्या पद्मावत्या सह। ※

( भरतवाक्यम् † )

इमां सागरपर्यन्तां हिमवद्विन्ध्यकुण्डलाम्।
महीमेकातपत्राङ्कां राजसिंहः प्रशास्तु नः ॥१९॥

मिति तत आगतयोः काञ्चुकीय-धात्र्योः प्रेषणं प्राप्तकालं मन्यानो यौगन्धरायणो राजानमाह—स्वामिन्-इति। देव्याः=वासवदत्तायाः। कुशलनिवेदनार्थम्= "जीवति देवी वासवदत्ता, लावाणके वह्निदाहेन न दग्धा, सम्प्रति वत्सराजस्य प्रधानमहिषीपदमलङ्करोति"—इति कुशलवृत्तं निवेदयितुम्। प्रतिनिवर्तताम्= इतः प्रस्थाय उज्जयिनीं गच्छतु। प्रतिनिवर्त्यतामित्यनुक्त्वा प्रतिनिवर्ततामित्युक्तेः काञ्चुकीयवसुन्धरयोर्बहुमानास्पदत्वं सूच्यते।

※ एतादृशि सौभाग्योपनतेऽप्रत्याशिते मङ्गलप्रसङ्गे दूतद्वारा कुशलनिवेदनं न वरम्, सपरिवारस्य स्वस्यैव तत्र गमनमुचितं मन्यमानो राजा वदति—न नेति। न न=नहि नहि। न केवलं काञ्चुकीयवसुन्धरे एव उज्जयिनीं गच्छताम्, अपितु वयं सर्व एव देव्या वासवदत्तया नवोढया देव्या पद्मावत्या च सह गुरुजन-दर्शनार्थमुज्जयिनी गमिष्यामः। अतो रैभ्य-वसुन्धरयोरद्यैव प्रेषणमनावश्यकमिति भावः। इतः परं—'यौगन्धरायणः—यदाज्ञापयति स्वामी' इत्यधिकः पाठः क्वचिद् दृश्यते। स च स्पष्टार्थत्वान्न व्याख्यातः।

† इत्थं पद्मावतीपाणिग्रहणेन तद्भ्रातृसाहाय्यावाप्तेः शत्रुपराजयपुरःसरमुदयनस्य पुनः स्वराज्यप्राप्तौ सञ्जातायां वासवदत्तालाभेन क्षीरे शर्करयेव द्विगुण्यमुपगते वत्सराजानन्दे ऽवसिते च समग्रे नाटकीयसंविधानके, 'नृपदेशादिशान्तिस्तु प्रशस्तिरभिधीयते' इत्युक्तलक्षणां निर्वहणसन्धेरङ्गभूतां प्रशस्तिमुपन्यस्यति—भरतवाक्यमिति। भरतस्य=नटस्य, नाट्याचार्यस्य महर्षेर्भरतस्य वा, वाक्यं=वचनम्।

इमामिति।

( अन्वयः ) नः, राजसिंहः, सागरपर्यन्ताम्, हिमवद्विन्ध्यकुण्डलाम्, एकातपत्राङ्काम् इमाम्, महीम्, प्रशास्तु।

राजा—नहीं, नहीं। देवी पद्मावती के साथ हम सभी लोग चलेंगे।

[ भरत वाक्य ]

(निष्क्रान्ताः सर्वे) ❀

इति षष्ठोऽङ्कः ।

(टीका) नः = अस्माकम् । राजसिंहः = राजा उदयनः, सिंह इवेत्युपमित-समासः । शौर्यादिगुणैः सिंहसमो राजा, राजश्रेष्ठ इत्यर्थः । 'सिंह-शार्दूल-नागाद्याः पुंसि श्रेष्ठार्थगोचराः' इत्यमरः । सागरपर्यन्ताम् = सागराः समुद्राः पर्यन्ताः अन्तिमसीमात्मानो यस्यास्ताम्, समुद्रान्तां समग्रामिति यावत् । हिमवद्विन्ध्यकुण्डलाम् = हिमवान् विन्ध्यश्च, हिमवद्विन्ध्यौ-हिमाचलविन्ध्याचलौ कुण्डले शोभाधायकत्वात् कर्णवेष्टनस्थानापन्नौ यस्याः सा ताम् । उत्तरदक्षिणदिशोर्हिमवद्विन्ध्यौ यस्याः सीमाभूतौ शोभेते तामित्यर्थः । एकातपत्राङ्काम् = एकमद्वितीयमातपत्रं श्वेतच्छत्रम्, अङ्कः राज्यलक्ष्म्याः सूचकं चिह्नं यस्यास्ताम् । इमाम्, महीम् = पृथ्वीम् । समग्रं महीमण्डलमित्यर्थः । प्रशास्तु = पालयतु । सार्वभौमो भवत्वित्यर्थः । "अनुष्टुब्" वृत्तम् ।

पर्यवसाने प्रशस्तिरूपं भरतवाक्यमुपन्यस्यति कविः—

समुद्रा एवं यस्याश्चरमसीमारूपाः, दक्षिणोत्तरदिशोर्वर्तमानौ विन्ध्य-हिमवन्तौ यस्याः कुण्डलाविव शोभेते, यस्यां च निःसपत्नैकाधिपत्यसूचकमेकमेव सितच्छत्रं विद्योतते, तां सकलां पृथ्वीमस्माकं महाराज उदयनश्चिरं निष्प्रत्यूहं परिपालयन् सार्वभौमत्वेन विराजतामिति भावः ॥१९॥

इति स्वप्ननाटक (म) वसितम् ।

शुभं भूयात् ।

❀ निष्क्रान्ताः सर्वे = महाराजोदयनप्रमुखाः, सर्वेऽपि उज्जयिनीं गन्तुं रङ्गस्थलाद्विर्गता इत्यर्थः ।

सिंह के तुल्य पराक्रम वाले, राजाओं में सब से श्रेष्ठ हमारे महाराज वत्सराज समुद्रपर्यन्त विस्तृत तथा हिमालय और विन्ध्याचल रूपी कर्णकुण्डलों से सुशोभित, श्वेत क्षेत्र से चिह्नित इस सम्पूर्ण पृथ्वी का शासन (पालन) करें ॥१९॥

( सब लोग चले गये )

छठा अङ्क समाप्त ।

'रमा' नामक भाषाटीका समाप्त ।

स्वप्नवासवदत्तस्य व्याख्याने 'श्रीः' पदाङ्किते ।
नारायणीये तस्याऽयं षष्ठोऽङ्कोऽवसितः शिवम् ॥

कामेश्वराङ्कनिलया तरुणारुणाभा
बालेन्दुमौलिरनलाश्चितफालनेत्रा ।
पाशाङ्कुशैक्षवशरासनपुष्पबाण-
पाणिः परा स्फुरतु चेतसि सा चितिर्मे ॥ १ ॥

गुणनन्दाङ्कशशिभिः सम्मिते वैक्रमे शके ।
श्रावणे धवले सोमे रक्षानन्धनपर्वणि ॥ २ ॥

श्रीमद्भारतसाम्राज्यं शासत्यमितविक्रमे ।
अष्टमैड्वडभूपाले मूर्ते जनमनोरथे ॥ ३ ॥

स्वप्नवासवदत्तस्य टीकेयं "श्रीः" समापिता ।
खिस्तेवंशकरीरेण श्रीनारायणशास्त्रिणा ॥ ४ ॥

श्रीगङ्गाधरसद्गुरुप्रतिफलत्सारस्वतज्योतिषः
श्रीरामांघ्रिनिषेवणाप्तसुमतेः सन्तीर्णशास्त्राम्बुधेः ।
श्रीमद्भैरवनायकात्मजनुषः सद्धर्मलक्ष्मीजुषः,
श्रीनारायणशर्मणः कृतिरियं विद्वन्मुदे जायताम् ॥ ५ ॥

इमां सुबोधामधिगम्य टीकां
नौकां, परीक्ष्यास्तु विमुक्तशङ्काः ।
उत्तीर्य शङ्कामकरं परीक्षा-
पाथोनिधिं हर्षजुषो भवन्तु ॥ ६ ॥

इति श्रीमन्नारायणशास्त्रिप्रणीतायां स्वप्नवासवदत्तस्य "श्री" रित्याख्यायां
व्याख्यायां षष्ठोऽङ्कः समाप्तः ॥ ६ ॥
समाप्तं चेदं सव्याख्यानं नाटकम् ।

# ❀ नाटकादि-लक्षणानि ❀

नाटकम्:—वीरशृङ्गारयोरेकः प्रधानं यत्र वर्ण्यते।
प्रख्यातनायकोपेतं नाटकं तदुदाहृतम्॥

जिसमें वीर या शृङ्गार कोई एक रस प्रधानतया वर्णित हो अन्य सब रस उसके अङ्गभूत हों और नायक प्रसिद्ध हो, उसे 'नाटक' कहते हैं।

पूर्वरङ्गः—यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये।
कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते॥

नाट्यवस्तु के पहिले रङ्ग (नाट्यशाला) के विघ्नों को दूर करने के लिये नर्तक लोग जो कुछ करते हैं, उसे 'पूर्वरङ्ग' कहते हैं।

नान्दी—आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते।
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता॥

जिससे देवता, ब्राह्मण और राजाओं की आशीर्वादयुक्त स्तुति की जाती है, उसे 'नान्दी' कहते हैं।

नेपथ्यम्—कुशीलवकुटुम्बस्य स्थलं नेपथ्यमुच्यते।

नर्तकों के रहने की जगह (जहाँ पर वेष बदला जाता है) को 'नेपथ्य' कहते हैं।

प्रस्तावना स्थापना वा—

सूत्रधारो नटीं ब्रूते मारिषं वा विदूषकम्।
स्वकार्यं प्रस्तुताक्षेपि चित्रोक्त्या यत्तदामुखम्॥

प्रस्तावना वा।

जहाँ सूत्रधार नटी, मारिष वा विदूषक से अपने कार्य के विषय में विचित्र उक्ति से इस प्रकार वार्तालाप करे जिससे प्रस्तुत कथा का विषय ज्ञात हो जाय, उसे 'आमुख' कहते हैं। उसी का नाम 'प्रस्तावना' भी है। वही प्राचीन कविभास नाटकों में 'स्थापना' शब्द से कहा गया है।

**प्रयोगातिशयः**—यदि प्रयोग एकस्मिन् प्रयोगेऽन्यः प्रयुज्यते ।
तेन पात्रप्रवेशश्चेत् प्रयोगातिशयस्तदा ॥

यदि एक ही प्रयोग में दूसरा प्रयोग भी आरम्भ हो जाय और उसी के द्वारा पात्र का प्रवेश हो, तो उसे 'प्रयोगातिशय' नामक प्रस्तावना कहते हैं ।

**अङ्कः**—अङ्क इति रुढ़िशब्दो भावैश्च रसैश्च रोहयत्यर्थान् ।
नानाविधानयुक्तो यस्मात् तस्माद् भवेदङ्कः ॥
यत्रार्थस्य समाप्तिर्यत्र च बीजस्य भवति संहारः ।
किञ्चिदवलग्नबिन्दुः सोऽङ्क इति सदाऽवगन्तव्यः ॥

जो अर्थों को भाव और रसों से अङ्कुरित करता है, जिसमें अनेकों प्रकार के विधान होते हैं, जहाँ एक अर्थ की समाप्ति और बीज का उपसंहार होता है और कुछ बिन्दु का सम्बन्ध होता है, उसे 'अङ्क' कहते हैं । यह 'अङ्क' शब्द रुढ़िशब्द है ।

**स्वगतम्**—अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम् ।

जो बात सुनाने योग्य नहीं होती, उसे 'स्वगत' कहते हैं । इसका यह आशय नहीं है कि—नाटक में जिस उक्ति के साथ स्वगत या आत्मगत लगा है, वह बात 'दूसरा कोई न सुन ले' इसलिये मुँह से उच्चारण करने के बदले मन में ही सोच ली गयी है, बल्कि वह इस तरह आप ही आप कही गयी है जिससे सामाजिक लोग भी सुन लें ।

**प्रकाशम्**—सर्वश्राव्यं प्रकाशं स्यात् ।

जो बात सबको सुनाने योग्य होती है उसे 'प्रकाश' कहते हैं ।

**प्रवेशकः**—प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः ।

प्रवेश का प्रयोग अनुदात्त ( अनुत्कृष्ट अरमणीय ) उक्ति से नीच पात्रों के द्वारा कराया जाता है । इसमें उक्तियाँ उदात्त नहीं होतीं ।

**अपवारितम्**—रहस्यं कथ्यतेऽन्यस्य परावृत्त्यापवारितम् ।

जो रहस्य किसी एक पात्र से छिपाकर दूसरे पात्र से फिरकर कहा जाय उसे 'अपवारित' कहते हैं।

मिश्रविष्कम्भकः—

वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः।
संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः॥
मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः।
शुद्धः स्यात् स तु सङ्कीर्णो नीचमध्यमकल्पितः॥

पहले कही गई और भविष्य में कही जानेवाली कथाओं का निदर्शक, कथा का संक्षेप करनेवाला अङ्क 'विष्कम्भक' कहलाता है। अङ्क के आदि में उसका प्रयोग होता है। जब एक ही मध्यमपात्र अथवा दो मध्यम-पात्र प्रयोग करते हैं, तब इसे 'शुद्ध विष्कम्भक' कहते हैं और जब नीच तथा मध्यम दोनों प्रकार के पात्रों द्वारा इसका प्रयोग किया जाता है, तब इसे 'मिश्र विष्कम्भक' कहते हैं।

आकाशभाषितम्—

किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत्।
श्रुत्वेवानुक्तमप्येकस्तत् स्यादाकाशभाषितम्॥

किसी दूसरे पात्र के बिना ही, बिना कही हुई बात को जो इस प्रकार कह कर 'क्या कहते हो' अपनी बात कहता है, उसे 'आकाश-भाषित' कहते हैं। जैसे कि—कुञ्जरिके! ओ! कुञ्जरिके!! राजकुमारी पद्मावती कहाँ हैं। क्या कह रही हो? राजकुमारी माधवी लतामण्डप के समीप गेंद खेल रही हैं, इत्यादि।

सूत्रधार—आसूत्रयन् गुणान् नेतुः कवेरपि च वस्तुनः।
रङ्गप्रसाधनप्रौढः सूत्रधार इहोदितः॥

नायक, कवि और नाटक प्रतिपाद्य वस्तु के गुणों को संक्षेप में सूचित करनेवाला सूत्रधार कहलाता है। यह रङ्गमञ्च को सुशोभित करने में बहुत प्रवीण होता है।

**काञ्चुकीयः**—ये नित्यं सत्यसम्पन्नाः कामदोषविवर्जिताः ।
ज्ञान-विज्ञानकुशलाः काञ्चुकीयास्तु ते स्मृताः ॥

जो सर्वदा सत्यभाषण करनेवाले, काम दोषों से रहित, और ज्ञान तथा विज्ञान में प्रवीण होते हैं, उन्हें 'काञ्चुकीय' कहते हैं ।

**विदूषकः**—विकृताङ्गवचोवेषैर्हास्यकारी विदूषकः ।

जो अपने विकृत अङ्गों, ऊटपटांग वचनों तथा तरह तरह के वेषों से सामाजिकों को हँसाया करता है, उसे 'विदूषक' कहते हैं ।

**नायकः**—त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही ।
दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्यशीलवान् नेता ॥

दानी, कृतज्ञ, कुलीन, लक्ष्मीसम्पन्न, रूप यौवन से संयुक्त, उत्साही, चतुर लोगों का प्रेमी, तेजस्वी और सुशील पुरुष को 'नायक' कहते हैं ।

**धीरललितः**—निश्चिन्तो मृदुरनिशं कलापरो धीरललितः स्यात् ।

निश्चिन्त, कोमल स्वभाववाले, सर्वदा नृत्य गीत आदि कलाओं में मग्न रहनेवाले नायक को 'धीरललित' कहते हैं । जैसे—यहाँ वत्सराज ।

**शृङ्गारः**—रम्यदेश-कला-काल-वेष-भोगादिसेवनैः ।
प्रमोदात् या रतिः सैव यूनोरन्योन्यरक्तयोः ॥
प्रकृष्यमाणा शृङ्गारो मधुराङ्गविचेष्टितैः ।

सुन्दर देश, कला, काल, वेष, भोग आदि के सेवन करने से जब परस्पर अनुरक्त नायक और नायिका का प्रेम बढ़ता है और जिसके कारण मनोहर हाव भाव इत्यादि होने लगते हैं, तब उसे 'शृङ्गार' कहते हैं ।

**करुणः**—इष्टनाशादनिष्टाप्तेः शोकात्मा करुणः ।

इष्ट के नाश और अनिष्ट की प्राप्ति होने से 'करुण' रस उत्पन्न होता है । इसका शोक आत्मा है ।

---

## ❀ वृत्तलक्षणानि ❀

अनुष्टुप्——श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम् ।
द्विचतुष्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः ॥

जिस वृत्त के चारों पादों में छठा अक्षर गुरु तथा पाँचवाँ अक्षर लघु हो और पहले तथा तीसरे पाद का सातवाँ अक्षर गुरु तथा दूसरे और चौथे पाद का सातवाँ अक्षर लघु हो, उसे 'अनुष्टुप्' कहते हैं। इस ग्रन्थ में यह छन्द २६ छब्बीस बार आया है।

आर्या——यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि ।
अष्टादश द्वितीये चतुर्थके पञ्चदश साऽऽर्या ॥

जिसके पहले और तीसरे पाद में बारह, दूसरे पाद में अठारह और चौथे पाद में पन्द्रह मात्रायें हों, उसे 'आर्या' कहते हैं। इस ग्रन्थ में यह छन्द ३ तीन बार आया है।

इन्द्रवज्रा——स्यादिन्द्रवज्रा यदि तौ जगौ गः ।

जिसमें दो तगण, एक जगण और दो गुरु हों, उसे 'इन्द्रवज्रा' कहते हैं।

उपजातिः——अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः ।

जिसमें इन्द्रवज्रा और उपेन्द्रवज्रा दोनों के लक्षण हों, उसे 'उपजाति' कहते हैं। इस ग्रन्थ में यह छन्द १ एक बार आया है।

उपेन्द्रवज्रा——उपेन्द्रवज्रा जतजास्ततो गौ ।

जिसमें क्रमशः जगण तगण, जगण और तत्पश्चात् दो गुरु हों, उसे 'उपेन्द्रवज्रा' कहते हैं। इस ग्रन्थ में यह छन्द १ एक बार आया है।

पुष्पिताग्रा–अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा

जिसके पहले और तीसरे पादों में दो नगणों और एक रगण से परे एक यगण हो तथा दूसरे और चौथे पादों में नगण जगण, पुनः जगण,

रगण, तदनन्तर एक गुरु हो, उसे 'पुष्पिताग्रा' कहते हैं। इस ग्रन्थ में यह छन्द २ दो बार आया है।

**वसन्ततिलका**——उक्ता वसन्ततिलका तभजा जगौ गः।

जिसमें तगण, भगण, जगण, पुनः जगण तदनन्तर दो गुरु हों, उसे 'वसन्ततिलका' कहते हैं। इस ग्रन्थ में यह छन्द ११ ग्यारह बार आया है।

**वैश्वदेवी**—पञ्चाश्वैश्छिन्ना वैश्वदेवी ममौ यौ।

जिसमें दो मगण और दो यगण हों, उसे 'वैश्वदेवी' कहते हैं। इसमें पाँच और सात पर विराम होता है। इस ग्रन्थ में यह छन्द १ एक बार आया है।

**शार्दूलविक्रीडितम्**——सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्।

जिसमें मगण, सगण, जगण, सगण, तगण, पुनः तगण तदनन्तर एक गुरु हो, उसे 'शार्दूल विक्रीडित' कहते हैं। इसमें बारह और सात पर विराम होता है। इस ग्रन्थ में यह छन्द ६ छ बार आया है।

**शालिनी**——शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः।

जिसमें एक मगण, दो तगण, तदनन्तर दो गुरु हों, उसको 'शालिनी' कहते हैं। इसमें चार और सात पर विराम होता है। इस ग्रन्थ में यह छन्द ३ तीन बार आया है।

**शिखरिणी**——रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी।

जिसमें यगण, मगण, नगण, सगण, भगण, तदनन्तर क्रमशः एक लघु और एक गुरु हो, उसे 'शिखरिणी' कहते हैं। इसमें ६ और ग्यारह पर विराम होता है। इस ग्रन्थ में यह छन्द २ दो बार आया है।

**हरिणी**——रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा।

जिसमें नगण, सगण, मगण, रगण, सगण, तदनन्दर क्रमशः एक लघु और एक गुरु हों, उसको 'हरिणी' कहते हैं। इसमें छः, चार और सात पर विराम होता है। इस ग्रन्थ में यह छन्द १ एक बार आया है।

———